Reg. No. C 1073

Vol. XXXIII.
No. 1.
३३श-वर्षस्य
१म-संख्या

May 1950
१८७२-शकीये
वैशाखे
मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः
महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः
श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्क
Foreign price—

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामवाजार

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIII. No. 1. — १८७२-शकीये वैशाखे — ३३श-वर्षस्य १म-संख्या — May 1950.


## श्रीभगवन्मङ्गलम्

राधामाधाय वामे व्रजपुरदयितं दिव्यरूपं त्रिभङ्गं
वंशीसङ्गीतलीलाकलितसुललितं मञ्जुमालं दधानः ।
आनन्दोन्मत्तगोपीवलयपरिवृतो रासलीलाविलोलः
श्रीकृष्णो भातु नित्यं मनसि सुमनसां सच्चिदानन्दरूपः ॥

लोकानां चित्तमास्तां मलपरिरहितं भक्तिसञ्चारपूतं
दुःखस्पर्शेन शून्यं भगवदनुभवे शक्तमारामयुक्तम् ।
विश्वं पापेन मुक्तं भवतु सुचरितं सत्पथे नित्यरक्तं
श्रीकृष्णप्रेमपूजापरिचरणगुणोत्कीर्त्तनादौ निषक्तम् ॥

---

## नवसूक्तिः

कार्यं विशेषेण विभाव्य कार्यं
विधाय कार्यं न हि तद् विचार्यम् ।
आदौ विचारादिह दोषमुक्ति-
रन्ते विचारात् कथमस्य हानम् ॥

---

# मतिमञ्जरी

मान्याः पारिषदाः! क्रमेण व्यतिक्रान्तो द्वात्रिंशसंवत्सरः संस्कृत-परिषत्पत्रिकायाः प्रवर्त्तते चायमद्य त्रयस्त्रिंशः, संवत्सरस्तस्याः। व्यति-क्रान्ते च तस्मिन् अनतिक्रमणीयदैवप्रभावेण कृतमात्मनः पदमगणित-शुभाशुभसन्निपातेन। यतस्तदा तदा समनुभूतमस्माभिः सुखदुःख-साङ्कर्यम्। तदिदं न शक्यमपोहितुं प्रयत्नशतैरपि मानवजातिमभि-जग्मुषा। तथापि कर्मणि प्रवर्तितव्यम्। सुखसम्बन्धपरिकल्पनया च दुःखाभिसम्बन्धपरिकल्पना विजेतव्या। कथमन्यथा सम्भविता निराबाधा कृत्यवर्त्मनि प्रवृत्तिरस्माकम्। भवतु यथा तथा वा। अपरि-हार्यत्वेऽपि मानवप्रकृत्या सुखदुःखसाङ्कर्यस्य प्राचुर्यमर्जयितुं सुखसन्तान-स्यैव सामर्थ्यमर्पयतु नो भगवान् सर्वभूताधिनाथः, येन भावी संवत्सरो नास्मानत्यर्थमवसादयेत्। तदद्य वर्षारम्भे नमो नमस्तस्मै भगवते सर्वभूताधिपतये। नमो नीरूपाय लोकहितार्थमाहितप्रतीकाय। नमो वेदवेद्याय भक्तिरसाभिगृहीताय। नमः सर्वशक्तिमते शाश्वताय पुरुषो-त्तमाय। यतो भवस्थितिप्रलयाः सर्वस्यास्य विश्वप्रपञ्चस्य। स एव स्मृतः स्तुतः सम्प्रार्थितश्च विदधातु नो भाविनि वर्षे सर्वथा हितानुबन्धम्। किमतः परमर्थितेन। श्रीमन्तः परिषद्बान्धवाः! पुराणे वस्तुनि विरागो नवनवे चानुराग इति हि स्वभावः सामान्यतो जीवनिकायस्य। तदिदमभिसन्धाय परिषत्पत्रिकाया वस्तुस्वरूपे प्राचीनं किञ्चिदपहाय नवीनं किञ्चिदस्मिन् वर्षे समुपादेयमस्माभिः। तद् यथा,—विगते वर्षे श्रौतसूक्तिः लौकिकसूक्तिः मासवार्त्तिकमित्येतानि वस्तूनि प्रतिमासं पत्रिकास्वरूपनिर्वर्त्तनाय नियमेन समुपात्तानि, वर्षेऽस्मिन्नेतानि परिहृत्य तत्स्थाने नवसूक्तिनाम्ना नवीनं सुभाषितं मासप्रकृतिसंज्ञया च मासगता विशेषा उपादीयेरन्। अन्या पद्धतिरस्या अनन्यथैवानुवर्त्तेत।

परिषद्बान्धवाः ! प्रतिवर्षमेव संस्कृतपत्रिकेयं नवीनवस्तूपस्कृता भवतां चित्तमाराधयितुमीहते, किन्तु तैस्तैरुपायैरुपाहितैः श्रीमतामसन्तोषः सन्तोषो वेति नैव सा लेशतोऽप्यर्हति विज्ञातुम्। तदत्र स्वोपात्तेषु वस्तुषु भवतां चित्तवृत्तेर्विशेषमेषा विजिज्ञासते। भवतां सन्तोषस्य निर्वर्त्तनार्थमेवास्याः सर्वः समारम्भः, तद् यत्र स एष नास्ति, किं तेन समुपात्तेन। ततः किमत्र भवतां सन्तोषाय किञ्चासन्तोषायेति विज्ञानञ्चेदलमेषा भाविनि काले यथायथमुपादेयमुपादातुं हेयञ्च परिहातुम्। मौनञ्चेदत्र भवताम्, अगतिका तावदेषा वराकी किं वा विदध्यात्? भिन्नरुचिर्हि लोकः। यदेव वस्तु प्रियमस्याः, न हि तदेवाविशेषेण सर्वेषाम्। तदस्या अभिमतेषु वस्तुषु कतमत् कस्य प्रियमप्रियं वा कतमदिति विज्ञापिते शक्यस्तावद् भवतामप्रियोपजननप्रतीकारः। ततस्तत्र श्रीमद्भिरनुकम्पां क्रियमाणामिच्छामः। दुर्दैवोपनतदुरन्तदशासम्पातेन प्रतिदिनमेषा क्षीणक्षीणा विषादमुपजनयति स्वबान्धवानाम्। क्रमेण त्रयस्त्रिंशे वर्षे वयसि पदमर्पयन्त्यपि तथा कृशदुर्बला सचेतसामन्तःकरणे मृत्युसंशयमुपनमयति। तस्मादत्र सुधियाञ्च वित्तवताञ्च काव्यकुशलानाञ्च न्यायवताञ्च प्राच्यसंस्कृतिरक्षणव्रतानाञ्च गीर्वाणवाणीप्रियाणाञ्च सहृदयानां महताञ्च यदि नैव निरभिसन्धानमनुकम्पा, तदा संशयितेन प्राणात्ययेनैव वा न चिरेणैषा विपद्येत। स्वाधीनतामुपगते प्राच्यसंस्कृतिगौरविते भारते वर्षे तदिदमुपजायमानं नैव सुमहते प्रकर्षाय भारतीयानां सम्भविना। सर्वे खलु देशः प्रयत्नशतैरभिरक्षति स्वदेशीयप्राच्यसंस्कृतिम्, सुरक्षितया च तया नितरां मन्यते गौरविनमात्मानम्, प्रतिपद्यते च तय देशान्तरमपि तं तथैव। तत्र यदि भारतमिदमन्यथा मन्येत कुर्वीत वा तदन्यथाकारं, तदा महानपवादस्तस्य देशसमवाये। अपर तदा युक्तमात्मस्वरूपनिगूहनमेवैतस्य। तदन्ते तावदेष प्रार्थनासारः,— परमेश्वरः सर्वशक्तिमानत्र सर्वदा सानुकम्पः करोतु विघ्नसङ्घातव्यपोहनमस्याः। सुधियः सहृदया वितरन्तु समुत्कर्षार्थमस्या विविधसदर्थोप

देशान। वित्तवन्तः स्वीयवित्तव्ययेन प्राच्यसंस्कृतिप्रधानालम्बनभूताया अस्याः संवर्द्धनान् कुर्वन्तु स्ववित्तसाफल्यम्। काव्यकुशला ललित-काव्योपनिबन्धनेन पत्रिकामिमां नितरामुपचर्य सहैव समासादयन्तु सुदुर्लभामभिनः कविकीर्त्तिम्। न्यायवन्तः सुविचार्य पत्रिकामिमां वेदयन्तु नः पत्रिकागतवस्तूनां न्याय्यान्याय्यप्रविभागम्। भारतीयप्राच्यसंस्कृति-संरक्षणप्रवणाः परिरक्षन्तु सर्वथा समुपकृत्य पत्रीमिमामेतदालम्बनां संस्कृतिं प्राच्यभारतीयाम्। गीर्वाणवाणीप्रियाः समुत्कर्षं नयन्तु स्वेन सर्वेण प्रयत्नेन स्वरूपतश्चार्थतश्च पत्रिकाया अस्या उपजीव्यभूताममरवाणीम्। येन येन कृत्यानुबन्धेन समुत्साहिता समुपकृता सगौरवा सशक्तिका साभ्युदया सफलोपक्रमा चेयं सर्वत्र पृथिव्यामप्रतिहतप्रभावा भाविन्यपि वर्षे जगतो भव्याय परिकल्पेत। ॐ तत् सत्। ॐ स्वस्ति!

---

## मासप्रकृतिः

यस्य मासस्य पूर्णिमान्ते यस्य नक्षत्रस्य योगः, स मासः तन्नक्षत्र-नाम्नाभिधीयते। स चायं चान्द्रो मासः। सूर्यसिद्धान्ते 'चतुर्भि-र्व्यवहारोऽत्र सौरचान्द्रर्क्षसावनै'रित्युक्तप्रमाणात् सौरचान्द्रनाक्षत्रसावन-भेदेन मासश्चतुर्धा भिद्यते। सूर्यस्य एकस्मिन् राशौ स्थितिकाल-मधिकृत्य सौरो मासः सम्पद्यते। तदुक्तम्—'एकराशौ रविर्यावत्कालं मासः स भास्करः'। तयोश्चान्द्रसौरमासयोरेव व्यवहारे धर्मकृत्यविशेषेषु च भूयान् प्रयोगः समुपलभ्यते। सौरमासस्य नक्षत्रमधिकृत्य विशेषाभावे-ऽपि चान्द्रमासस्य भूयसा प्रचरद्रूपत्वात् तन्नाम्नैव सौरमासनामापि व्यवहर्तुं व्यवह्रियते चाद्यापि। 'मेषादयो द्वादशैते मासास्तैरेव वत्सर' इति सूर्य-

सिद्धान्तनिरुक्त्यनुसारेण यत्र वैशाखे मासि मेषराशिस्थः सूर्य्यस्तमारभ्यैव वर्षगणना, व्यवहारोऽपि तथैव ।

अस्मिन् वैशाखे मासि पूर्णिमान्ते विशाखानक्षत्रस्य योगादयं वैशाखो मासः । एवमुत्तरत्रापि । सूर्य्यस्य मेषराशौ स्थितिकाल एव तद्योगस्य सम्भवद्रूपत्वात् सौरवैशाखस्यापि वैशाख इति संज्ञा । न केवलं भूयसा प्रचारेण । कर्मभेदेन संकल्पवाक्येषु क्वचित् चान्द्रमासस्य क्वचिच्च सौरमासस्य शास्त्रे समुल्लेखो विहितः । अत एव वैशाखे मासि प्रवृत्तानां विवाहादिसंस्काराणां माससमुल्लेखावसरे 'वैशाखे मासि मेषराशिस्थे भास्करे' इत्येवं राशिसमुल्लेखेन सौरमाससूचना क्रियते, सौरमासस्य राशिमधिकृत्यैव विशेषात । यत्र कृत्ये चान्द्रमासोल्लेखस्तत्र तु सङ्कल्पवाक्यादौ केवलं 'वैशाखे मासि' इत्येवं यवहार्य्यं, न तु तत्र राशिसमुल्लेखः ।

अस्य मासस्य प्रथमदिवसे नववर्षारम्भः । तत्र महानुत्सवः सम्पद्यते भारतीयानां, विशेषतस्तु वणिजाम् । अक्षयतृतीयाव्रतादीनि सन्त्यत्र मासे बहूनि धर्म्मकृत्यानि । अक्षयतृतीयायां पुण्यतिथौ बभूव सत्ययुगस्याविर्भावः । यस्य अष्टाविंशतिसहस्रोत्तरसप्तदशलक्षवर्षकालं स्थितिः । तत्र मत्स्यकूर्मवराहनृसिंहाश्चत्वारोऽवताराः प्रसिद्धाः । बलिप्रभृतयः षट् सम्राजः । तत्र चतुष्पादं पुण्यं, पापस्य लेशोऽपि नास्ति ।

वैशाखे मासि गृहीतजन्मा पुरुषो विनयी देवद्विजभक्तः सुधार्म्मिकः सज्जनपोषकश्च भवति ।

अत्र मासि गृहारम्भे दक्षिणद्वारं गृहं कर्त्तव्यम् । अत्र मिथुनकर्कटवृश्चिककुम्भराशिषु जातानां तथा त्रयोदशदिनात् परं मिथुनकर्कटसिंहवृश्चिकधनुःकुम्भमीनराशिषु जातानां रविशुद्धिरस्ति, मेषमिथुनसिंहतुलामकरराशिषु समुत्पन्नानाञ्च गुरुशुद्धिः । कर्मविशेषेषु शुभानुबन्धाय तदनुवृत्तिरपेक्षणीया ।

शारदधान्यादिशस्यविशेषबीजानामयं मासो वपनकालः ।

( पूर्वानुवृत्तः )

अमुकगोत्र पितामहामुकदेवशर्मन् अमुकगोत्र प्रपितामहामुकदेवशर्मन् एतत्ते उदकं स्वधा इत्यनेन दद्यात्। एवं मातामहपक्षेऽपि। ब्राह्मणा अपि ॐ अमृतस्योपस्तरणमसि स्वाहा इत्यनेनापोशानं कुर्युः। ततः सप्रणवव्याहृतिकां गायत्रीं ॐमधुवाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीर्मधुनक्तमुतोषसो मधुमत् पार्थिवं रजः। मधु द्यौरस्तु नः पिता॥ ॐमधुमान्नो वनस्पतिर्मधुमा॰ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥ ॐ मधु ॐमधु ॐमधु इति च जपेत। ३९। ततो भुञ्जानेषु ब्राह्मणेषु श्राव्यं पठेत। ४०। यथा व्याहृतिपूर्वां गायत्रीं,—

ॐ यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशि।
विश्वेदग्निः प्रतिरक्षांसि सेधति॥
ॐ सनादग्ने मृणसि यातुधानान् नत्वा रक्षांसि पृतनासु जिग्युः।
अनुदह सहमूरान् क्रव्यादो मा ते हेत्या मुक्षन दैव्यायाः॥
ॐ अक्षन्नमीमदन्त ह्यवप्रिया अधूषत।
अस्तोषत स्वभानवा विप्रा नविष्ठया मती योजा न्विन्द्र तेहरी॥

---

३९। मधुवाता इति तृचं जपित्वा मधु च त्रिर्जप्त्वाऽश्नत्सु जपेत्। २५। श्राद्धसूत्रम्। सोऽयं मधुमन्त्रजपो गायत्रीजपानन्तरं कर्त्तव्यः। तथाच छन्दोगपरिशिष्टम्—

मधु मध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः॥ इति

अत्र मधुमन्त्रवर्ज्जनमाभ्युदयिके विशेषः।

४०। व्याहृतिपूर्व्वां॰गायत्रीं तस्याश्चैव गायत्रं पित्र्याश्च स॰ाहृता माधु-

ॐ अभित्रिपृष्ठं वृषणं वयोधा माङ्गूषाणा मवावशन्त वाणीः ।
वना वसानो वरुणो न सिन्धू न्वि रत्नधा दयते वार्य्याणि ॥
ॐ अक्रा॑त्समुद्रः प्रथमे विधर्म्मन् जनयन् प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधिसानौ अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥
ॐ कनिक्रन्ति हरिवासृज्यमानः सीदन् वनस्य जठरे पुनानः ।
नृभिर्यतः कृणुते निर्णिजंगा अतो मतीर्जनयत स्वधाभिः ॥ इतिपृतृसंहिता
ॐ इदं ह्यन्वोजसा सुतं राधानां पते ।　　पिबत्वऽस्य गिर्वणः ॥
ॐ त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहसामिह श्रुध्युपस्वरसमागहि ॥
ॐ स पूर्व्यो महानां वेनः क्रतुभिरानजे ।
यस्य द्वारा मनुष्पिता देवेषु धिय आनजे ॥
ॐ पुरां भिन्दुर्युवा कविरमितौजसा अजायत ।
इन्द्रो विश्वस्य कर्म्मणो धर्त्ता वज्रीपुरुष्टुतः ॥
ॐ उपप्रेक्षे मधुमति क्षियन्तः पुष्यन्तो रयिं धीमहे ॥
ॐ पवस्व सोम मधुमा॑मृता वा पो वसानो अधिसानो अव्ये ।
अव द्रोणानि घृतवांति सीदमदिंतयो मत्सर इन्द्र पानः ॥
ॐ सुरूप कृत्नु मूतये सुदुघामिव गोदुहे ।
जुहूमसि द्यविद्यवि ॥ इति साधुन्छन्दसी संहिता ।
ततो दैवे प्रागग्रान दर्भानास्तीर्य यवयुक्तमन्नं गृहीत्वा

---

च्छन्दसीञ्च । २६ । इति श्राद्धसूत्रम् । एतदनन्तरमिच्छया पुराणाद्युक्तं जपेत् ।—

"स्वर्गे लोके महीयते दत्तञ्चास्याक्षयं भवति" । २७ । श्राद्धसूत्रम् । प्राचीनावीतिना दक्षिणामुखेनायं जपः कर्त्तव्यः । यस्मात् प्राधान्येन पितृदत्तस्याक्षयत्वफलकोऽयं जपः पित्र्यमेव कर्म्म । प्रकरणाच्च । "अतऊर्द्ध्वं प्राचीनावीतिना वाग्यतेन कृत्यम् ।" इति गृह्यकारवचनाच्च ।

ॐ असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।

तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

इति मन्त्रेण उच्छिष्टसमीपे प्रागग्रदर्भोपरि विकिरं दद्यात् । ४१ । ततः प्रकृतं तिलयुक्तं किञ्चिदन्नमादाय ॐ ये अग्निदग्धा जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ इत्युच्चार्य भूमौ उच्छिष्टसमीपे विकिरं दद्यात् । ४२ । ततो हस्तौ प्रक्षाल्य प्रत्यापोशानार्थं प्रत्येकं ब्राह्मणहस्तेषु जलं दद्यात् । यथा—दैवे ॐ विश्वेदेवा एतत्ते उदकं स्वाहा" इति । पित्र्ये च ॐ अमुकगोत्र पितरमुकदेवशर्मन्नित्यादिप्रपितामहान्तं नामोच्चार्य्य एतत्ते उदकं स्वधा" इति । एवं मातामहपक्षेऽपि । ॐ अमुकगोत्र मातामहामुकदेवशर्मन्नित्यादि वृद्धप्रमातामहान्तं नामोच्चार्य्य एतत्ते उदकं स्वधा' इत्यनेन दद्यात् । ब्राह्मणाश्च ॐ अमृतस्यापिधानमसि स्वाहा'

---

१ ? दैवपूर्वं श्राद्धं कुर्वीत इति सूत्रणाद् दैवेऽपि विकिरदानं कर्त्तव्यम् । तत्रायं गोभिलपरिशिष्टोक्तो मन्त्रः । गोभिलस्यैतदिति हेमाद्रिप्रभृतयः ।

२ । तृप्तिं ज्ञात्वा अन्नं विकीर्य्य ये अग्निदग्धा जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिमिति । २८ । इति श्राद्धसूत्रम् । अत्र 'अग्निदग्धाश्च ये जीवा' इति केचित् पठन्ति । येषां न माता इत्यादि पुराणाद्युक्तश्च केचित् समुच्चिन्वन्ति ।

कुशम् [illegible]ह्मणपक्षेऽपि सर्वं प्रकृतं कल्पमनुजानात्याचार्यः । अतोऽदृष्टार्थ-स्तृप्तिप्रश्नः कर्त्तव्यः । ब्राह्मणपक्षेऽपि यथा अदृष्टार्थत्वात् तृप्तिं ज्ञात्वापि तृप्ति-प्रश्नः क्रियते । मन्त्रलिङ्गाद् भूमावेव विकिरदानं न कुशोपरि इति प्रतीयते । पित्र्ये कर्मणि सर्वत्रैव तिलानामभ्यर्हितत्वादत्रापि तिला मिश्रयितव्याः । तथाचाभ्युदयिके छन्दोगपरिशिष्टम् ।—

"यस्तत्र प्रकरोऽन्नस्य तिलवद् यववत्तथा ।

उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ॥ इति

इत्यनेन तदुदकं पिबेयुः। अथ मधुवाता इति त्र्यृचं मधुशब्दत्रयञ्च जप्त्वा ॐ तृप्ताः स्थ इति ब्राह्मणान् पृच्छेत। ४३। ॐतृप्ताः स्म इति सर्वैर्ब्राह्मणैरुक्ते ॐ अन्नशेषैः किं क्रियता मिति पृच्छेत्। ॐ इष्टैः सहोपभुज्यतामिति प्रत्युत्तरम्। ४४। ततः ॐ पिण्डदानमहं करिष्ये' इति पृच्छेत्। ॐ कुरुष्वेति प्रतिवचनम्।*

ततो ब्राह्मणसम्मुखे उच्छिष्टसमीपे वामहस्तान्वारब्धदक्षिणहस्तगृहीतेन पवित्रेण ॐ अपहता असुरा रक्षा ᳪसि वेदिषदः' इत्यनेन दक्षिणाग्रां रेखां कुर्यात्। ४५। तत्पूर्वस्यां दिशि मातामहपक्षेऽप्येवं रेखां कुर्यात्। तत्र

---

मन्त्रलिङ्गविरोधाद् मातामहपक्षे तु पृथग् विकिरो न देयः। पितृद्वारेण पितृकुलस्येव मातृद्वारेण मातामहकुलस्यापि तत्कुलत्वाद्वा।

३। सकृत्सकृदपो दत्त्वा पुनर्मधुवातां मधु च त्रिर्जप्त्वा तृप्ताः स्थेति पृच्छति। २६। इति श्राद्धसूत्रम्।

अत्र पुनःशब्दात् पूर्ववत् त्र्यचस्यैव लाभः। अत्र गायत्रीजपोऽस्माकं नास्तीति ज्ञापयितुं 'पुनर्मधुवातां मधु च त्रिर्जप्त्वा' इत्याह। अदृष्टार्थत्वात् तृप्तिप्रश्नः कुशमय ब्राह्मणपक्षेऽपि कर्त्तव्य इति प्रागुक्तम्;

४। "तृप्ताः स्म इत्युक्ते शेषमन्नमनुज्ञाप्य"। ३०। इति श्राद्धसूत्रम्। तथाच छन्दोगापरसूत्रम्,—"शेषमन्नमनुज्ञाप्यान्नशेषैः किं क्रियतामिष्टैः सहोपभुज्यता"मिति। प्राधान्यात् पितरो ह्यत्रेष्टाः। अतः शेषान्नेन पिण्डनानविधिः।

* पिण्डदानानुज्ञा अर्थायत्तेति तत्रभवता सूत्रकारेण न सूचिता।

५। "सव्येन पाणिना दर्भपिञ्जूलीं गृहीत्वा दक्षिणाग्रां रेखामुल्लिखेदपहता असुरा।" इति

अत्र प्रथमं सव्येन पाणिना ग्रहणं ततः सव्याद्दक्षिणहस्तेन गृहीत्वा इत्यर्थः। तथाच कात्यायनः,—"सव्येन पाणिनेत्येवं यदत्रासकृदीरितं। परिग्रहण-

तत्र दक्षिणाग्रान दर्भानास्तीर्य पितृनावाहयेत्। यथा तिलानादाय ॐ एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिर्दत्तास्मभ्य' द्रविणेऽभद्र ७ रयिञ्च नः सर्ववीरं नियच्छत। ४६। तिलांश्च त्यजेत्। एवं मातामहपक्षेऽपि आवाहयेत्। ततो वामान्वारब्धदक्षिणहस्तेन सतिलजलं गृहीत्वा ॐ अमुकगोत्र पितरमुकदेवशर्मन् असाववनेनिक्ष्व ये चात्र त्वामनु या७श्च त्वमनु तस्मै ते स्वधा' इत्यनेन पितृतीर्थेन प्रथमास्तृनकुशमूले निक्षिपेत्। ४७। एवं जलस्पर्शपूर्वकं ॐ अमुकगोत्र पितामह इत्यादिक्रमेण ॐ अमुकगोत्र प्रपितामह इत्यादिक्रमेण च आस्तृत कुशमध्याग्रयोरवनेजयेत्। ४८। एवं मातामहपक्षे * सतिलजलं गृहीत्वा ॐ अमुकगोत्र मातामहामुकदेवशर्मन्नसाववनेनिक्ष्व ये चात्र त्वामनु या ७श्च त्वमनु तस्मै ते स्वधा" इत्येनेनास्तृतद्वितीयकुशमूले निक्षिपेत्। एवं जलं स्पृष्ट्वा ॐ अमुकगोत्र प्रमातामह इत्यादि क्रमेण ॐ अमुकगोत्र वृद्धप्रमातामह इत्यादिक्रमेण च कुशमध्याग्रयोः अवनेजयेत्। ततः सर्वोप-

---

मातन्तत सव्यस्यादिशति व्रतम्। पिञ्जूल्याद्यभिसंगृह्य दक्षिणेनेतरात् करात्। अन्वारभ्य च सव्येन कुर्यादुल्लेखनादिकम्।" इति।

६। "अथ पितृनावाहयत्येत पितरः सोम्यास इति" ।४। इति गृह्यसूत्रम्। ( अन्वष्टकायां।

७। "सव्येनैव पाणिनोदपात्रं गृहीत्वाऽवमनविपूर्वस्यां कर्ष्वां दर्भेषु निनयेत् पितुर्नाम गृहीत्वाऽसाववनेनिक्ष्व ये चात्रत्वामनु या ७श्चत्वमनु तस्यैते स्वधेति।" ६। गृह्यसूत्रं। (अन्वष्टकायां) "अप उपस्पृश्यैवमेतरयोः"। ७। इति गृह्यसूत्रम्।। ( अन्वष्टकायां )

* "मातामहानाञ्चैवम्" इति श्राद्धसूत्रं प्राक् प्रदर्शितम्।

८। सर्वमन्नमेकत्रोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रीं स्त्रीन् पिण्डानवनेनिज्य दद्यात्।" इति। ३१। श्राद्धसूत्रम्।

करणात् किञ्चित् किञ्चिदुद्धृत्य शेषान्नेन मिश्रयित्वा बिल्वप्रमाणान् षट् पिण्डान् निर्म्माय सतिलमोदकमेकं दर्भां गृहीत्वा ॐ अमुकगोत्र

१। अस्मिन् सूत्रे दर्भेषु इति वैकृतविशेषोपदेशश्चोदकप्राप्तां प्राकृतींकर्षूं निवर्त्तयति। आधाराः खलु इमे दर्भाः प्राकृतं आधारान्तरमेव निवर्त्तयन्ति, न तु करणभूतामतिदेशागतां दर्वीम्। तथा च गृह्यसूत्रम्—सव्येनैव पाणिना दर्वीं गृहीत्वा सन्नीतात्तृतीयमात्रमवदायावमनविपूर्वस्यां कर्ष्वां दर्भेषु निदध्यात् पितुर्नामगृहीत्वाऽसावेष ते पिण्डो ये चात्र त्वामनु या ंश्च त्वमनु तस्मै ते

( क्रमशः )

## जयदेवकविः

विशदपदमालिका विमलरतिसाधिका यस्य भुवि भावसुगभीरा
नवकवनचारुता गीतिगतिलालिता मुदितनवरसरसिकधीरा।
भक्तिरसधारया परिहृतविकारया वासितं यस्य मृदु चित्तं
जयति जयदेवकविरखिलकविकमलरविरिह जगति स कविजनवित्तम्॥
ललितयमुनातटे तरुणतरुसङ्कटे नन्दसुतवेणुरवकान्ते
कुसुमकुलमञ्जुले विहगकलसङ्कुले नवजलदनीलगगनान्ते।
मदकलितराधिकासहितनवगोपिकाकौतुकोल्लसितमतिधारी
जयति जयदेवकविरखिलकविकमलरविरुदुगतो विकृतिशतहारी॥
नभसि घनकोमले सरसि विकचोत्पले भ्रमरभरमुखरितनिकुञ्जे
विमलयमुनाजले वीचिशतचञ्चले कानने मत्तशिखिपुञ्जे।
नीपधरणीधरे नवकुसुमसुन्दरे चेतनारसगतिविचारी
जयति जयदेवकविरखिलकविकमलरविरुदुगतो विकृतिशतहारी॥
जहदखिलसंसृतिं विषमविकृताकृतिं मानसं यस्य रसयुक्तं
कृष्णरससागरे परमरतिमन्दिरे मग्नमवसादलवमुक्तम्।

दयितपद्मावती युवतिरपि विन्दती कृष्णरसमन्वकृत गाढ़ं
जयति जयदेवकविरखिलकविकमलरविरुद्गतो भरतभुवि वाढ़म् ॥
प्रणतिशतमग्रतः प्रणतिरपि पृष्ठतः पार्श्वतः प्रणतिरपि नित्यं
सुमधुरपदोच्चयं गीतिमयवाङ्मयं प्रणतिरभि ललितरसनृत्यम् ॥
भक्तिरससुन्दरे तस्य विमलान्तरे प्रोद्गतां शक्तिमभिवन्दे
रसलसदलङ्कृतौ रचितनवसंस्कृतौ च्छन्दसि प्रतिपदममन्दे ॥

---

## वृत्तवर्त्तिका

एप्रिलमासस्य सप्तदशदिवसादारभ्य रविवारमन्तरेण निर्द्दिष्टदिवसेषु वङ्गीयसंस्कृतशिक्षापरिषदः प्रथमपरीक्षा मध्यमपरीक्षा उपाधिपरीक्षा च सुष्ठु सम्पन्नाः। पूर्वपूर्ववर्षेषु परीक्षायाः पूर्वमेव प्रश्नपत्रविशेषाणां कतिपयदुर्वृत्तानुसृतदुर्नीतिमूलकप्रचारेण यथा विपर्ययः समुपलब्धः, वर्षेऽस्मिन न तथेति परीक्षाप्रबन्धकारिणां कृत्यनिपुणानां कर्मसचिवादीनां भूयःप्रशस्तिमुद्घोषयामः।

एवमेव प्रतिवर्षमवधानेन चातुर्येण परिश्रमेण च परीक्षायाः प्रबन्धः कर्मसचिवादिभिः समनुसृतश्चेत् परीक्षाया विशेषतो गौरवं तथा शुद्धिः संरक्ष्येयाताम्।

इदमस्माकमत्र महदानन्दस्थानं यत् मुद्रायन्त्रालयं प्रति महतावधानेन कर्मसचिवादीनामियं परीक्षाया निर्विघ्नता समजनीति मुक्ताः प्रश्नकर्त्तारश्च प्रश्नपत्रपरीक्षकाश्च प्रश्नपत्रव्यवस्थाधिकृताश्च निरपराधाश्चान्ये प्रश्नपत्रसंसृष्टा-स्तद्दोषस्पर्शादिति।

एवमेवोत्तरोत्तरं परीक्षायाः प्रबन्धे कर्मसचिवादीनां परिषत्परि-वृढानां महते फलाय सादरमवधानमनुवर्तमानं कामयामहे, यतः सुरक्षितं स्यात् परिषदः परीक्षाया गौरवमिति।

# १८७१ शकाब्दीयसंस्कृत-साहित्य-परिषत्पत्रिकास्थ-

# विषयानुक्रमणी

( वर्णक्रमानुसारिणी )

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII.
No. 2.
३३श-वर्षस्य
२य-संख्या

June 1950






# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—14s.

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIII. | १८७२-शकीये ज्यैष्ठे | June |
|---|---|---|
| No. 2. | ३३श-वर्षस्य २य-संख्या | 1950. |


## गङ्गामङ्गलम्

हरिचरणचारिणी शिशिरगिरिदारिणी कलुषभरवारणतरङ्गा
नियतकलनादिनी विमलजलशालिनी तारिणी जयति भुवि गङ्गा ।
नित्यमिह तापसा धर्मचितमानसाः स्नानविधिलब्धनवदेहाः
कृतबहुलदुष्कृता अपि कलुषवर्जिता दधति मुदमाप्तसुरगेहाः ॥

पूततमसैकते धवलसिकतावृते योगिनो जपनियममग्नाः
स्वनयननिमीलना-गतविषयदर्शना ध्येयसुरसंस्मरणलग्नाः ।
बन्धविनिवृत्तये हसितजलसञ्चये प्रतिदिवसमत्र समवेताः
क्लेशशतमञ्जसा पुण्यचितचेतसा वृण्वते सम्मदमुपेताः ॥

वणिगुचितकर्मणा तरणिशतशोभना सुमपङ्क्तिमत्र भुवि धत्ते
मकरवरवाहना जनपदहितैषणाव्याकुला सुकृतमपि दत्ते ।
ऐहिकशुभाशया परमपदवाञ्छया यामिमां श्रयति जनमाला
जयति भयहारिका जह्नुमुनिदारिका सा चिरं विजितकलिकाला ॥

त्रिभुवनमिदं यया धन्यमनुवृत्तया लोकयुगकुशलशतसृष्ट्या
रोगगणनाशिनी पुष्टिपरिवेशिनी दशहरा शास्त्रविधिदृष्ट्या ।
तीरतरुमञ्जुला जलधिमभि चञ्चला सेयमतिमञ्जुलतरङ्गा
गिरिशशिरसा चिता सुरमनुजपूजिता पावनी जयति भुवि गङ्गा ॥

---

## मतिमञ्जरी

विपुलेऽस्मिन् भारतवर्षे प्रदेशभेदेन संस्कृतशिक्षाया विभिन्नाः पद्धतयः प्रचरन्ति। यत्र पृथक् पृथग् व्यवस्थिताः परीक्षाश्रेणीभेदाः विभिन्नास्तारतम्यभाजः पाठ्यग्रन्था विभिन्नाश्च देशभेदेन विद्यापारङ्गतानां प्रशस्तिसूचका उपाधयः। एतेन प्रदेशभेदाद् यथा प्रादेशिकानां विदुषां विद्यागतं तारतम्यं तथा पारस्परिकोत्कर्षापकर्षभावनापि दृढ़मात्मनः पदं दधाति। तेन च विभिन्नप्रदेशगतानां विदुषां मिथः समुपजायते रहश्च प्रकाशश्च विरोधभूमा। तदिदमतिमात्रमनभीष्टं स्वाधीनतायामुपनतायामैक्यमभिलषतः सर्वस्यास्य भारतवर्षस्य। एतदनुसन्धाय भारतनियामकप्रष्ठाः शिष्टसंहत्या सर्वस्य भारतवर्षस्य संस्कृतशिक्षायाः सर्वथैकरूप्यमुपपिपादयिषन्तः सम्प्रति वाराणस्यामेकं शिष्टसम्मेलनमाकारितवन्तः। तत्र तत्सम्बन्धी सामान्यविचारः प्रक्रान्तः। विद्याधिष्ठात्री देवता सर्वतः शुभमयं फलमस्य विधेयात्। परमिदमत्र सुमहद् विस्मयस्थानं यदेतावत्कालमस्मिन् विषये न दृष्टिलेशोऽपि निपतितः शिक्षाधिकृतानाम्। बहोः कालात् पूर्वमेव भारते वर्षे प्रवृत्ता जातीयहितचिन्ता, यस्याः प्रभावात् कालेनाद्य स्वाधीनता तत्र पदमकरोत्। किन्तु कदापि नैतया दिशा प्रवृत्ता हितभावना तत्तद्देशीयशिक्षाधिकृतानां चित्तेषु। संस्कृतविद्या नाम प्रधानमधिष्ठानं भारतीयप्राच्यसंस्कृतीनाम्। सेय-

मैकरूप्येण भारते वर्षे सर्वत्र सुप्रबन्धेन प्रचरन्ती महान्तमभ्युदयं जातीय-मैक्यञ्च सौष्ठवेन सम्पादयेदित्यत्र नास्ति सन्देहस्य लेशोऽपि। तदस्य शुभामायतिमुदीक्षमाणा वयं सिद्धान्तसरणिं प्रति समुत्सुकां दृष्टिं स्थापयामः।

---

# मासप्रकृतिः

अस्मिन् मासि पूर्णिमान्ते ज्येष्ठानक्षत्रसम्बन्धादयं चान्द्रो ज्यैष्ठो मास इत्याख्यायते। वृषराशिस्थ एव सूर्ये तत्सम्भवात् सूर्यस्य वृषराशिस्थिति-कालोऽपि सौरज्यैष्ठ इत्यभिधीयते। मासोऽयं निदाघर्त्तुसम्बन्धी। अत्र सम्भवत्सु विवाहादिकृत्येषु सङ्कल्पवाक्ये 'ज्यैष्ठे मासि वृषराशिस्थे भास्करे' इत्येवमुदाहर्त्तव्यम्।

अस्मिन् मासि सावित्रीव्रतादीनि बहूनि पुण्यकर्माणि सम्भवन्ति। दश-हरासमर्च्चनादिकमस्य मासस्य भूयान् विशेषः।

अस्मिन् मासे लब्धजन्मा जनः प्रवासी तीक्ष्णस्वभावः क्षमावान् दीर्घसूत्रः विचित्रधीः पण्डितश्च सम्पद्यते। अत्र प्रथमगर्भजातस्यापत्यस्य परिणयसंस्कारः प्रतिषिद्धः कारणविशेषेण तत्र तस्यावश्यमनुष्ठेयत्वे दश दिनानि वर्जयित्वैव तदनुष्ठानमुचितम्।

अत्र कर्कटसिंहधनुर्मीनराशिजातानां रविशुद्धिः, त्रयोदशदिनात् परन्तु मेषकर्कटसिंहधनुर्मकरमीनराशिषु समुत्पन्नानाम्।

अत्र मेषमिथुनसिंहतुलामकरराशीनामस्ति गुरुशुद्धिः। अस्य मासस्य सत्यपि निदाघान्तर्गतत्वे वर्षर्त्तुलक्षणभूता वृष्टिरत्रैव प्रवर्त्तते, तेन भूमावुप्तानां बीजानामङ्कुरजननादौ महानुपकारो भवति। अत्रामृतफलानि पनसफलानि च विशेषतः परिणतानि समग्रं जगदाप्याययन्ति शारीरिकीं बल

त्रिभुवनमिदं यया धन्यमनुवृत्तया लोकयुगकुशलशतसृष्ट्या
रोगगणनाशिनी पुष्टिपरिवेशिनी दशहरा शास्त्रविधिदृष्ट्या ।
तीरतरुमञ्जुला जलधिमभि चञ्चला सेयमतिमङ्गलतरङ्गा
गिरिशशिरसा चिता सुरमनुजपूजिता पावनी जयति भुवि गङ्गा ॥

---

## मतिमञ्जरी

विपुलेऽस्मिन् भारतवर्षे प्रदेशभेदेन संस्कृतशिक्षाया विभिन्नाः पद्धतयः प्रचरन्ति। यत्र पृथक् पृथग् व्यवस्थिताः परीक्षाश्रेणीभेदाः विभिन्नास्तारतम्यभाजः पाठ्यग्रन्था विभिन्नाश्च देशभेदेन विद्यापारङ्गतानां प्रशस्तिसूचका उपाधयः। एतेन प्रदेशभेदाद् यथा प्रादेशिकानां विदुषां विद्यागतं तारतम्यं तथा पारस्परिकोत्कर्षापकर्षभावनापि दृढ़मात्मनः पदं दधाति। तेन च विभिन्नप्रदेशगतानां विदुषां मिथः समुपजायते रहश्च प्रकाशञ्च विरोधभूमा। तदिदमतिमात्रमनभीष्टं स्वाधीनतायामुपनतायामैक्यमभिलषतः सर्वस्यास्य भारतवर्षस्य। एतदनुसन्धाय भारतनियामकप्रष्ठाः शिष्टसंहत्या सर्वस्य भारतवर्षस्य संस्कृतशिक्षायाः सर्वथैकरूप्यमुपपिपादयिषन्तः सम्प्रति वाराणस्यामेकं शिष्टसम्मेलनमाकारितवन्तः। तत्र तत्सम्बन्धी सामान्यविचारः प्रक्रान्तः। विद्याधिष्ठात्री देवता सर्वतः शुभमर्थं फलमस्य विधेयात्। परमिदमत्र सुमहद् विस्मयस्थानं यदेतावत्कालमस्मिन् विषये न दृष्टिलेशोऽपि निपतितः शिक्षाधिकृतानाम्। बहोः कालात् पूर्वमेव भारते वर्षे प्रवृत्ता जातीयहितचिन्ता, यस्याः प्रभावात् कालेनाद्य स्वाधीनता तत्र पदमकरोत्। किन्तु कदापि नैतया दिशा प्रवृत्ता हितभावना तत्तद्देशीयशिक्षाधिकृतानां चित्तेषु। संस्कृतविद्या नाम प्रधानमधिष्ठानं भारतीयप्राच्यसंस्कृतीनाम्। सेय-

मैकरूप्येण भारते वर्षे सर्वत्र सुप्रवन्धेन प्रचरन्ती महान्तमभ्युदयं जातीय-मैक्यञ्च सौष्ठवेन सम्पादयेदित्यत्र नास्ति सन्देहस्य लेशोऽपि। तदस्य शुभामायतिमुदीक्षमाणा वयं सिद्धान्तसरणिं प्रति समुत्सुकां दृष्टिं स्थापयामः।

---

# मासप्रकृतिः

अस्मिन् मासि पूर्णिमान्ते ज्येष्ठानक्षत्रसम्बन्धादयं चान्द्रो ज्यैष्ठो मास इत्याख्यायते। वृषराशिस्थ एव सूर्ये तत्सम्भवात् सूर्यस्य वृषराशिस्थिति-कालोऽपि सौरज्यैष्ठ इत्यभिधीयते। मासोऽयं निदाघर्त्तुसम्बन्धी। अत्र सम्भवत्सु विवाहादिकृत्येषु सङ्कल्पवाक्ये 'ज्यैष्ठे मासि वृषराशिस्थे भास्करे' इत्येवमुदाहर्त्तव्यम्।

अस्मिन् मासि सावित्रीव्रतादीनि बहूनि पुण्यकर्माणि सम्भवन्ति। दशहरासमर्च्चनादिकमस्य मासस्य भूयान् विशेषः।

अस्मिन् मासे लब्धजन्मा जनः प्रवासी, तीक्ष्णस्वभावः क्षमावान् दीर्घसूत्रः विचित्रधीः पण्डितश्च सम्पद्यते। अत्र प्रथमगर्भजातस्यापत्यस्य परिणयसंस्कारः प्रतिषिद्धः कारणविशेषेण तत्र तस्यावश्यमनुष्ठेयत्वे दश दिनानि वर्जयित्वैव तदनुष्ठानमुचितम्।

अत्र कर्कटसिंहधनुर्मीनराशिजातानां रविशुद्धिः, त्रयोदशदिनात् परन्तु मेषकर्कटसिंहधनुर्मकरमीनराशिषु समुत्पन्नानाम्।

अत्र मेषमिथुनसिंहतुलामकरराशीनामस्ति गुरुशुद्धिः। अस्य मासस्य सत्यपि निदाघान्तर्गतत्वे वर्षर्त्तुलक्षणभूता वृष्टिरत्रैव प्रवर्त्तते, तेन भूमावुप्तानां बीजानामङ्कुरजननादौ महानुपकारो भवति। अत्राम्रफलानि पनसफलानि च विशेषतः परिणतानि समग्रं जगदाप्याययन्ति शारीरिकीं बल

परिपुष्टिञ्च सुसम्पादयन्ति जीवानाम्। अत्रैव भूयान् प्रसारः सम्पद्यते जम्बूफलादीनाम्। स एष वसुन्धराया विशिष्टः फलसमृद्धिकालः।

अत्र निदाघतप्तानां शरीरे जलममृतायते, शान्तः समीरः सुतरां प्रीतिमातनोति, चन्दनादिशीतलेपः शान्तिं जनयति, तापो विषायते, कौक्षवैश्वानरह्रासादुदरामयः प्रादुर्भवति। स्वेदप्रस्रवणेन शरीरमवसीदति। गुरुव्यायामो नैव हिताय सङ्कल्पते। तदत्र व्यायामादौ भोजनादौ च सुतरां जनैरवहितैर्भाव्यम्।

अस्मिन् मासि निदाघातिशयेन पाठादीनामसौकर्यसमुत्पादाद् बहुत्र विद्यालयानामवकाशो विहितः। पुनः प्रशान्ते वर्षाविर्भावेन निदाघदोषे प्रवर्तते कृत्यं तत्तद्विद्यालयानाम्। एषा हि समासतो ज्यैष्ठमासप्रकृतिः।

---

## नवसूक्तिमाला

बुद्धिर्ममैव निपुणा न यथा परेषां
शक्तिर्ममैव फलदानविधानदक्षा।
लोके विमूढजनयोग्यविचारणैषा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥

अयोग्यतामात्मगतां विशालां
मोहाददृष्ट्वा न वृथाभिमानम्।
स्वयोग्यतालेशवशाद् दधीथाः
ज्ञेयं विधेयञ्च विभाव्यनेकम्॥

स्वल्पं विदित्वैव कृतार्थमानी
दृप्तो न जात्वभ्युदयं वृणीते ।
अज्ञाततत्त्वानि बहूनि लोके
विज्ञातुमाधेहि धिया प्रयत्नम् ॥

---

# विदुषो वृत्तम्

(अविनाशचन्द्रगुह-चतुर्धुरीणस्य)

[ निबन्धकः—श्रीवनमालिचक्रवर्त्ती वेदान्ततीर्थः ] *

संस्कृत-वाङ्मयस्य रहस्यग्राही कलिकाता-हाइकोर्ट-नामकोच्चधर्माधिकरणस्य ख्यातनामा व्यवहारजीवी अविनाशचन्द्रगुहचतुर्धुरीणः १३५४ वङ्गाब्दस्य फाल्गुने मासि अष्टादशदिवसे कुजवासरे ( १९४८ खीष्टाब्दीय-मार्च्चमासस्य द्वितीयदिवसे ) स्वकीयकार्यक्षेत्रे कलिकातामहानगर्यां पञ्चत्वमवाप । एतस्य पुरुष-पुंगवस्य जीवन-कथा विद्यार्थिनां गृहस्थानां च भूयसे कल्याणाय भविष्यतीति यथामति लिख्यते ।

वाकरगञ्जापर-नामधेये वरिशाल-मण्डले रामचन्द्रपुरग्रामे रत्नसू-गुह-

---

* *Vedāntatīrtha.* F. A. 1894; B. A. 1196 (Hons. in Philosophy & in Sanskṛit); M. A. 1897 (Philosophy); M. A. 1902 (Sanskṛit). 1897—1917, Professor, Rāj Chardra College, Barisal, Baṅgabāsī College, Calcutta, Centra Hindu College. Benāres, Sanskṛit College, Calcutta & Cotton College, Gouhāṭī; Some time Principal, Sree Pratāp College, Kāshmere, from 1917; Professor, Murārīchānd College, Sylhet; Secretary, Sanskrit College, Sylhet, from 1922; paper-setters & examiners in Sanskṛit, University of Calcutta; *village Suktāgar, district Barisal.*

वंशे १२८१ वङ्गाब्दे चैत्रमासस्य नवमदिवसे सोमाहे ( १८७५ खीष्टाब्दस्य मार्च्चमासस्य द्वाविंशदिवसे ) अविनाशचन्द्रः समजनि। उक्तं हि जन्मपत्रिकायाम्—एतच्छकीयसौरचैत्रस्य नवमदिवसे सोमवारेऽसितपक्षीयप्रतिपदि तिथौ नक्तं पञ्चविंशतिपलाधिक-कार्म्मिकचतुर्विंशतितम दण्डात् परं तत्कालोदितशुभमकरलग्ने शनेः क्षेत्रे रवोर्होरायां बुधस्य द्रेक्काननवांशयोः गुरोर्द्वादशांशे कवेस्त्रिशांशे गुरोर्यामार्द्धे रवेर्दण्डे हस्तानक्षत्राश्रितकन्याराशौ चन्द्रे शूद्रवर्णे बुधस्य दशायां श्रीयुक्तबाबुस्वरूपचन्द्रगुहस्य शुभ आत्मजः श्रीमत्पुरन्दरगुहराश्याश्रितनामा जातवांश्चिरं जीवतु नवग्रहप्रसादाद्द्विजाशिषश्चेति देवगणोऽयम्। अविनाशचन्द्रस्य जनकः स्वरूपचन्द्रस्तदानीं वरिशाल-नगरे प्रतिभावान् व्यवहाराजीव आसीत्, यस्य खलु आरवीय-पारसीक*-भाषयोः उर्दु-वङ्ग-भाषयोश्च प्रभूतं ज्ञानं तदानीन्तनानां विस्मय-पदं बभूव। तथाहि—

"हप्तैर्विवादशतसंशमनैर्ज्वलद्भिर्वादैरजस्रमुरजध्वनिधीरनादैः।
यस्याधुनाप्यनुरणन्तितरामिवामी धर्माधिकारनिलया वरिशालपुर्याम् ॥१॥

तत्रैव हर्म्ये स्वमितेऽमितात्माऽवसद्विशाले व्यवहारराजः।
आदीपयन्द्वीपमिमं हिमांशोः स्वरूपचन्द्रः स गुहान्वयार्कः ॥२॥

स्वामी स्वकालार्चितसर्ववाचामधीश्वरोऽदभ्रभुवः समन्तात्।
वोढापि धर्मार्थधुराः सहस्रं चतुर्धुरीणो धिषणैकनाथः ॥३॥

बालकोऽविनाशः स्व-ग्राम-पाठशालायां प्राथमिकीं शिक्षामधिगम्य ततः

* For references of the word cited in various works, See "Barisal Hitaishi", Vol. LVI; No. 51, 1949 (1355 B.S.) a supplement, *sub voce* "अविनाश-स्मृतितर्पणम्" foot-note of "पारसीक"। See also Pandit Jawaharlal Nehru's *The Discovery of India*, First Edition, March 1946, Calcutta, p. 160.

१८८४ खीष्टाब्दे वरिशालस्थे राजकीये आंलो † शिक्षायतने ( जिला स्कुले ) सप्तमश्रेण्यां प्रविष्टः। जिला-स्कुले अध्ययनसमयेऽनेन सुष्ठु अशिक्षि वङ्गभाषा संस्कृतभाषा आंलो-भाषा च। संस्कृतभाषायां "चपेट-मालिनी" नाम काव्यं च तदैव व्यरचि सरस्वती-पूजनवेलायाम्। वरिशाल-जिलास्कुले तदानीं विश्वम्भरभट्टाचार्यविद्यारत्नः (?) काशीश्वर-गुप्तकाव्यतीर्थः ईशानचन्द्रभट्टाचार्यश्च संस्कृताध्यापकाः आसन। विद्यालये एतेभ्यः स्वगृहे च सुगृहीतनाम्नः कालीशचन्द्रविद्यारत्नात् व्रजमोहनविद्यालय-शिक्षकात् अविनाशचन्द्रेण संस्कृतभाषा-ज्ञानं लब्धम्। प्रधानशिक्षको हरिप्रसादवन्द्योपाध्यायः आंलो-भाषाशिक्षक आसीत, श्यामाचरणगुप्तश्च गणितशास्त्रशिक्षकः। अस्मिन्नेत्र समयेऽयं वरिशालस्थेभ्यो व्याप्‌टिष्ट्-मिशनखृष्टधर्मप्रचारकेभ्यः (Baptist Mission Church) लातिन-नाम्नीं प्राचीनभाषामशिक्षत। स्कुले पाठ-समय एव तस्य संस्कृतभाषा-ज्ञानम् एतादृशम् आसीत् यत् टेष्टपरीक्षायां (Test examination) संस्कृत-प्रबन्ध-रचने पूर्णसंख्या तस्मै प्रदत्ताऽभूत्। प्रतापचन्द्रमुखोपाध्यायेन "काशी-पुर-निवासी"-सम्पादकेन प्रदत्तं संस्कृतभाषाज्ञानोत्कर्षलभ्यं पुरस्कारं १८९१ खीष्टाब्दे प्रवेशिकां परीक्षां समुत्तीर्णः आंलो-भाषा-ज्ञानोत्कर्ष-लभ्यं "टि, पि, डिसिल्भा" सुवर्णपदकं ( T. P. Desilva Gold Medal ) विंशति-राज-मुद्रा-परिमितां सर्वोच्चवृत्तिं ( First grade scholarship of Rs. 20/ per month, standing tenth ) च लब्ध्वा कलिकाता-प्रेसिडेन्सिकलेज-विद्यामन्दिरं प्रविष्टः।

तदानीं प्रेसिडेन्सि-कलेज-विद्यालये सुशिक्षकः हरिश्चन्द्रकविरत्नः महा-महोपाध्याय-पण्डितनीलमणिमुखोपाध्यायन्यायालंकारश्च संस्कृताध्यापकौ, रो-म्यान-पार्सिभ्याल ( Rowe, Mann, Parcival, &c. ) देवेन्द्र-नाथवसु-नीलकण्ठमजुमदारादयश्च आंलोभाषाशिक्षकाः, जगदीशवसुगिलि-

† See Indrathā Granthāvali, Calcutta, Vaṅgabāsi ed., 1332 B. S., p. 217.

ल्याण्डमहोदयौ च भूतविद्याशिक्षकौ, प्रफुल्लचन्द्ररायः पेडलारश्च रसायन-शास्त्रशिक्षकौ, लिटिल्-विपिनविहारिगुप्ताः गणिताध्यापकाः प्रथेरो-विनयेन्द्रनाथसेनौ च इतिहासाध्यापकौ बभूवुः।

प्रेसिडेन्सिकलेजविद्यालये प्रथमवर्षान्तपरीक्षायां प्रकटितेन तस्य आंलोभाषाज्ञानेन नितरां प्रीतः आंलोशिक्षकमूर्द्धन्यः पार्सिभ्याल-महोदयः तस्य उत्तराणि सर्वछात्राणां पुरतः स्वयमेव पठित्वा श्रावयामास इत्यपि श्रूयते। फाष्ट्-आर्ट्स् परीक्षां (First Examination in Arts now I. A. Examination—अधुना मध्यमपरीक्षेति नाम्नीं ) १८९३ खीष्टाब्दे समुत्तीर्णः विंशतिमुद्रावृत्तिम् (Second grade scholarship of Rs. 20/ per month, standing Thirteenth) अलभत। १८९५ खीष्टाब्दे बि-ए परीक्षां समुत्तीर्णः सहितां संस्कृते अनार्स् नामकविशेष-परीक्षायां ("A" Course, Honours) सर्वोच्चस्थानमासाद्य (First in class I, unique place) "राधाकान्तदेव-मेमोरियाल" (Radhakanta Dev Memorial) सुवर्णपदकं प्राप। तदानीं अनार्स्-परीक्षायां वरद-राजकृता पाणिनीयलघुसिद्धान्तकौमुदी अवश्यं पठनीया आसीत्। एम् ए परीक्षायां च भट्टोजीकृतसिद्धान्तकौमुद्याः कारक-समासप्रकरणे वैदिकी प्रक्रिया च पाठ्यानि आसन्। एतावदेव व्याकरणज्ञाने पर्याप्तं मेने तात्कालिकैः विश्वविद्यालयकर्णधारैः। अनार्स् परीक्षायां व्याकरण-परीक्षकः अविनाशस्य व्याकरणज्ञानगाम्भीर्येण विस्मितः समजनि। संस्कृतकलेजे तत्संलग्नस्कुले च मुग्धबोधमनधीत्य न कोऽपि बहिरागतः (Muffasil student) व्याकरणे सुष्ठु व्युत्पत्तिं लब्धुम् अर्हति इत्येव-मासीत् तात्कालिकानां परीक्षकादीनां (प्रायशः संस्कृतकलेजे लब्ध-शिक्षाणाम् ) दृढ़ा प्रतीतिः। एतस्याः प्रतीतेः भ्रान्तत्वमविनाशेन सम्यक् प्रमाणितम् स्वकीयव्याकरणज्ञानप्रकर्षेण।

# छन्दोगक्रियासारः

( निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः । )

[ पूर्वानुवृत्तः ]

पितरमुकदेवशर्म्मन्नसावेष ते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा' इत्यनेन पितृतीर्थेन प्रथमास्तृतकुशमूले अवनेजनस्थाने दद्यात् । ४६ ।

एवं जलं स्पृष्ट्वा द्वितीयपिण्डं पितामहाय कुशमध्ये अवनेजन-स्थाने एवं जलं स्पृष्ट्वा तृतीयपिण्डं प्रपितामहाय कुशाग्रे अवनेजनस्थाने दद्यात् । एवं जलं स्पृष्ट्वा चतुर्थपिण्डमादाय ॐअमुकगोत्र मातामहामुक देवशर्म्मन्नसावेष ते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा इत्यनेन पितृतीर्थेन आस्तृतद्वितीय-कुशमूले अवनेजनस्थाने दद्यात् । एवं जलं स्पृष्ट्वा पञ्चमपिण्डं प्रमातामहाय तथैव षष्ठं पिण्डं वृद्ध-प्रमातामहाय कुशमध्याग्रयोरवनेजनस्थाने दद्यात् । नाम्नामपरिज्ञाने तु स्वधा पितृभ्यः पृथिवीषद्भ्य" इति प्रथमं पिण्डं दद्यात् । स्वधा पितृभ्योऽन्तरीक्षषद्भ्यः इति द्वितीयं पिण्डं दद्यात् । स्वधापितृभ्यो

---

स्वधेति । पिण्डदानसूत्रे त्रीं स्त्रीनिति वीप्सा मातामहापेक्षयैव । मातामहानाञ्चैव-मिति ( इति । ८ । गृह्यसूत्रम् ) मातामहानां प्राप्तेः । वीप्सया षडेवात्र पिण्डा इति ज्ञाप्यते । ततो दैवे पिण्डो नास्तीति प्रतीयते । तथाच छन्दोग-परिशिष्टे,—"कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड़शम् । प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः ।" इति । तत्रैव पिण्डनिर्माणे कात्यायन आह,—"यावदर्थमुपादाय हविषोऽर्भकमर्भकम् । च कणासहसन्नीयपिण्डं दातुमुप-क्रमे ।" इति । एतेनान्नशेषभोजनार्थं किञ्चिदवशेष्यते इति प्रतीयते ।

श्राद्धसूत्रे—"दर्भेषु इत्यनन्तरम् मधु मध्वित्यन्नमीमदन्तेति पठित्वा" इत्यधिकः पाठः क्वचित् गौड़पुस्तके दृश्यते । पाश्चात्यपुस्तकेषु नैवम् । महा-यशसाऽप्येवं न पठितं । रघुनन्दनोऽपि 'मधुवाता इति ऋक्त्रयं मधुमधु च जपित्वा पितुर्नाम गृहीत्वा गृह्योक्तविधिना पिण्डं दद्यात् ।" इत्येतावन्मात्रमाह ।

श्वासं धृत्वा तेनैव पथा परावर्त्तमानः सर्वान् पितॄन् भास्वर-मूर्तिकान् ध्यायन् ॐ अमीमदन्त पितरो यथाभागमावृषायिषत'' इति जपेत्। ५५। ततः श्वासं त्यजेत्। ५६। ततः कृताञ्जलिः ॐ नमो वः पितरः पितरो नमो वः इति जपेत्। ५७। ततः गृहान्नः पितरोदत्त'' इति गृहिणीं पश्येत्। ५८। ॐ सदो वः पितरो देष्म' इति पिण्डान् पश्येत्। ५९। ततोनवमनवं वा वासःसूत्रमादाय विष्णुरोम् अमुकगोत्र पितर-मुकदेवशर्मन् अमुकगोत्र पितामहामुक देवशर्मन् अमुकगोत्र प्रपितामहामुक-देवशर्मन् एतदवस्तु पितरो वास इत्यनेन तन्त्रेण पिण्डत्रयोपरि निद-ध्यात्। ६०। एवं मातामहपक्षेऽपि। ततः पिण्डान् गन्धादिना तूष्णीं

---

५५। "अपपर्यावृत्य पुरोच्छ्वासादभिपर्यावर्त्तमानो जपेदमीमदन्त पितरो यथाभागमावृषायिषतेति। इति गृह्यसूत्रम्। ( १२ ) अस्यार्थमनुवदति कात्यायनः,—

५६। "आवृत्य प्राणानायम्य पितॄन् ध्यायन् यथार्हतः।
जपंस्तेनैव चावृत्य ततः प्राणान् विमोचयेत्॥ इति

५७। "अथाञ्जलिकृतो जपति नमो वः पितरो नमो व इति। इति पिण्डपितृयज्ञे अन्यजपनिषेधात् तद्धर्मातिदेशवनादत्रापि तद्वत्।

५८। "गृहानवेक्षते गृहान्नः पितरो दत्तेति'' ।२२। इति गृह्यसूत्रम्।

५९। "पिण्डानवेक्षते सदोवः पितरो देष्मति''। इति गृह्यसूम्। (२३) "पिण्डान्तिके पिण्डशेषविकरणमस्मत्शास्त्रे नास्ति''। यतकिञ्चित् पच्यते गेहे भक्ष्यं भोज्यमथापि वा। अनिवेद्य न भुञ्जीत पिण्डमूले कथञ्चन''॰ इतियत् शङ्खबचनं तत्श्राद्धार्थ-पाकादन्यदपि यतकिञ्चिद् भक्षणार्थं गृहे पच्यते तदपि पितॄणां निवेद्यैव भोक्तव्यमित्युपदिशति॥

६०। सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वाऽवसलवि पूर्व्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वाऽसावेतत्ते वासो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेति। २४। गृह्यसूत्रम्। अन्वष्टक्यधर्मस्य पिण्डपितृयज्ञे

पूजयेत्। ६।१। ततो देवपूर्वं तन्त्रेणाचमनं देयम्। यथा, विष्णुरोम् विश्वेदेवा एतत्ते आचमनं स्वाहा' इत्यनेन दद्यात्। पितृपक्षे विष्णुरोम्

---

अतिदेशलभ्यत्वेऽपि तत्र तत्रभवता सूत्रकारेण यत् पुनः "वासस्तु निदध्यात्" इति सूत्रितं, तेन वैकृतविशेषोपदेशेन प्राकृतं बासो बहुत्वं प्रत्येकेन दानञ्च निवर्त्तते। तन्निवृत्त्या च मन्त्रोऽपि तदीयो "येचात्र त्वामनु इत्यादिः निवर्त्तते। तेन एतद्वः पितरो वास इति यथाम्रातेनैव मन्त्रेण वाससोनिकानं सिध्यति। कात्यायनोऽपि—अर्घ्येऽक्ष्य्योदके एव इत्यादि परिगणितातिरिक्तस्थले तन्त्रतामभ्यनुजानाति। अन्यथा परिगणनस्यानर्थक्यापत्तेः। वैकृतेविशेषोप देशात् प्राकृतधर्मलोपः। तथाचोक्तम्। "अपि वा क्रमकालसंयुक्ताः सद्यःक्रियेत तत्रविधेयनुमानात् प्राकृतनधर्म्मलोपः स्यादिति। ( क्रमशः )

---

# वृत्तवर्त्तिका

श्रीमन्तः पारिषदाः। एकं दुःखवृत्तं श्रीमत्सु निवेदयामः,—अस्माकं परमश्रद्धेया विद्याप्रवीणाः शीलवन्तः कृत्यकुशलाः पश्चिमवङ्गशिक्षाध्यक्षाः श्रीस्नेहमयदत्तमहाभागा वयोनियतस्वकार्यकालावसानादनन्तरमपि कञ्चित् कालं राष्ट्राधिकारसम्मत्या तत्कृत्यमनुष्ठाय सम्प्रति कार्यावसरं गृहीतवन्तः। ते विभिन्नेषु राष्ट्रीयमहाविद्यालयेषु बहुकालं यावदध्यापनाध्यक्ष्यादिगुणैः प्रचितयशसः कतिचित् संवत्सरानतिनैपुण्येन राष्ट्रीयशिक्षाध्यक्षपदमधिष्ठाय सुविमलं यशः समर्जितवन्तः। तेषां विद्याचारकृतं शिक्षाविभागनियमनादिकौशलप्रभवञ्च विमलं यशः संस्मृत्य वयमभिनन्दनेन सार्द्धमान्तरिकीं कृतवेदितां वेदयामः।

सहैव विज्ञाप्यमिदं सुखवृत्तं यत् तदीये पदे शिक्षाव्रतिप्रकाण्डाः प्रेक्षावन्तः प्रचितकीर्त्तयः श्रीपरिमलरायमहोदयाः स्थापिता राष्ट्राधिकारेण। तदितः प्रभृति तैरधिष्ठितस्य पश्चिमवङ्गशिक्षाधिकारस्य भूयसीमुन्नतिं वयमैकान्तेन हृदा समाशास्महे।

---

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4.; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10, (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof, Akshayakumar Shastri, Re. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7 ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof, Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; [illegible] (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof. Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya. Rs. 5 ; Rs. 4-8 (for members).

Reg. No. C 1073

Vol. XXXIII. July 1950

No. 3. १८७२-शकीये

३३श-वर्षस्य आषाढे

३य-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—14s.

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सद्यं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामवाजार
कलिकाता

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIII. No. 3. | १८७२-शकीये आषाढ़े ३३श-वर्षस्य ३य-संख्या | July 1950.

## श्रीराममङ्गलम्

निकषानन्दनवंशनिषूदनमिन्दीवरवनकान्तं
हित्वा प्राज्यं करगतराज्यं यातं गहनवनान्तम् ।
कपिकुलमित्रं चित्रचरित्रं रघुकुलजलनिधिरत्नं
वन्दे रामं जगदभिरामं निर्जितनिखिलसपत्नम् ॥
रिपुहृतसीतां महसानीतां पत्नीं सत्त्वपरीतां
जनकृतशङ्काचरितकलङ्कादनिशं शीलविनीताम् ।
दुर्गतिसदने विजहौ विजने त्रातुं यः कुलमानं
वन्दे रामं जगदभिरामं तं भुवि लसदवदानम् ॥

---

## नवसूक्तिमाला

न केवलं स्वार्थविधिं विदध्याः कुर्या यथाशक्ति परार्थकृत्यम् ।
स्वार्थाभिसन्धानमपास्य लोके वृक्षोऽपि किं नैव परार्थकारी ॥
वर्षन्ति मेघा जगतो हितार्थं नद्यः परार्थाय वहन्ति नित्यम् ।
प्रभञ्जनो वाति परार्थमेव कुतः परार्था तव नास्तु वृत्तिः ॥
इतस्ततः किं न विचित्य खाद्यं काकोऽपि वा पूरयति स्वकुक्षिम् ।
कः स्वार्थमात्रे वृतया प्रवृत्त्या काकाद् विशेषो भवतो विभायात् ॥

---

# मासप्रकृतिः

यत्र चान्द्रमासे पूर्णिमान्ते पूर्वाषाढ़ानक्षत्रयोगः, स एव चान्द्र आषाढ़ इत्यभिधीयते। स चायं योगः सूर्यस्य मिथुनराशिस्थितिकाल एव सम्भवतीति तत्कालात्मको मास आषाढ़संज्ञां लभते। ततः सौरगणनयाप्येष मास आषाढ़ एव गण्यते। अस्मिन् मासे जातकादिसंस्कारकर्मसु संकल्पवाक्ये 'आषाढ़े मासि मिथुनराशिस्थे भास्करे' इत्युल्लेख्यम्। अस्य मासस्य सप्तमे दिवसे अम्बुवाचीप्रवृत्तिः दशमदिवसे च तन्निवृत्तिः। तत्र ब्रह्मचारिप्रभृतयो नियमनिष्ठाः पक्वमन्नं नाश्नन्ति। सर्पभयवारणार्थमत्र दुग्धपानं विधेयम्। अम्बुवाचीकालमध्ये बीजवपनादिकं निषिद्धम्। अत्र विशेषयात्रादिकमपि नैव कर्त्तव्यम्। अत्र सन्ति मनोरथद्वितीयाव्रतादीनि पुण्यकर्माणि। वर्षान्तरेषु प्रायेण अत्रैव मासे श्रीजगन्नाथदेवस्य रथयात्राया दृष्टत्वेऽपि वर्षेऽस्मिन् जातस्तद्व्यतिक्रमः। अस्य मासस्य त्रिंशदिवसे मलमासस्य निवृत्तिर्यः प्रवृत्तो ज्यैष्ठस्य द्वात्रिंशे दिवसे।

अस्मिन् मासे जातो जनो बहुभाषी प्रमदाप्रियः प्रमत्तो गुरुवत्सलः बहुव्ययी मन्दाग्निदोषग्रस्तश्च स्यात्। अत्र मेषसिंहकन्यामकरराशिषु जातानां रविशुद्धिः, तथा अस्य मासस्य त्रयोदशदिवसात् परं मेषवृषसिंहकन्यातुलामकरकुम्भराशिषु जातानां सर्वं मासम्। गुरुशुद्धिश्च मेषमिथुनसिंहतुलामकरराशिजातानाम्। अस्मिन् मासे पुरातनयवगोधूमशालितण्डुलहरिणमांसादिभोजनमुपकाराय सम्पद्यते। शरीरमार्जनं हरिद्रादिलेपनं स्नानं गन्धमाल्यादिधारणं लघुशुक्लवस्त्रपरिधानं क्लेदशून्ये स्थाने समवस्थानञ्च विधेयानि।

अस्मिन् मासि हैमन्तिकधान्यबीजानां वपनं तथा कृष्णमुद्गबीजानां वपनं कार्यम्।

अत्र पूर्ववङ्गप्रभृतिस्थानविशेषेषु वार्षिकजलोच्छ्वासेन क्षेत्रादिकानां

प्लावनमारभ्यते। इतः प्रभृति समग्रं वर्षाकालं लोकानां स्वेच्छया पथिसञ्चारः प्रतिरुध्यते। वार्षिकजलोच्छ्वासेन प्लावितेषु क्षेत्रादिषु नौयानादिकं विना भवनाद् भवनान्तरगतिरपि बहुत्र दुःशका भवति। सत्यपि तादृगसौकर्ये स्वास्थ्यविचारे तदिदमुपकाराय प्रतिभाति। तथाहि भवनप्रान्तेषु क्षेत्रादिषु च सञ्चिता मला जलप्लावनेन विशोध्यन्ते, सुचिरं जलान्तर्वर्त्तितया पृथिव्या उर्वरा शक्तिः परिवर्द्धते। जलस्य अतिसन्निधौ समवस्थानाद् भवनादिगतभूमिभागेष्वपि विपुलशस्यसमुत्पादशक्तिराविर्भवति। वापीप्रभृतिषु सुदूरागतसलिलप्रवाहेण समं प्रभूता मत्स्याः प्रविश्य तत्रत्यगभीरजलानुरागेण तत्रैवावस्थिता महते लोकोपकाराय प्रभवन्ति। वाणिज्यतरीणां तदा तदा प्रतिभवनसन्निधावागमनादिसौकर्येण गृहपतीनां वस्तुसंग्रहे सुतरां सौकर्यं भवति। तदसौकर्यापेक्षया सौकर्यमेव समधिकमत्र विचारेण प्रतिभाति।

---

## मतिमञ्जरी

स्वास्थ्यं सुखं सर्वेषाम्। सति स्वास्थ्ये विहरन्ति जनाः स्वच्छन्दम्। यथाप्रयोजनं कुर्वन्ति कृत्यानि। सुदृश्यानि तानेव सुखाकुर्वन्ति। सुसङ्गीतानि सन्तर्पयन्ति। शोभनानि व्याख्यानानि परिप्रीणयन्ति। सुभोज्यानि सुतरां रमयन्ति। प्रियवाचः समानन्दयन्ति। तेष्वेव कृत्योत्साहः पदं कुरुते। तैरेव वसुन्धरा प्राणवतीव प्रतिभाति। तेभ्य एव जनाः स्वकीयार्थसिद्धिमभिसन्दधते। ये स्वास्थ्यशालिनः। स्वास्थ्यवतां पादपतलाधिशयनमपि राजशय्यासुखमुपदिशति। दिनान्ते सकृद् भोजनमपि राजभोगसुखं जनयति। सति स्वास्थ्ये सर्वं दुःखं सुखमेवोपसम्पद्यते। असति पुनः स्वास्थ्ये सर्वाण्येव प्रथितानि सुखोपकरणानि दुःखमयान्युपजायन्ते। तत्र तत्र सर्वत्रैव महद् वैपरीत्यमनुभूयते तेषाम्।

तथाहि स्वास्थ्येन परिशून्यानां कुतः सुखसम्पर्कः सुहृदयावलोकनादिजन्यः कुतो वा यथाकामं प्रवृत्तिः सामर्थ्यं वा स्वीयप्रयोजनसाधनेषु। कुतः सुखलेशः साम्राज्यमधितिष्ठतोऽपि स्वास्थ्यपरिहीनस्य। सत्स्वपि तस्य निरवग्रहेषु भोगोपकरणेषु सत्यामपि भोगकामनायामस्वास्थ्येन प्राप्ता भोगविनिवृत्तिः। वृथैव तस्य साम्राज्यमपि, वृथैव चास्य शुभादृष्टजन्मा मानवदेहपरिग्रहोऽपि। दुःखमतिमात्रं तेषां, ये सत्स्वपि भोगोपकरणेषु द्रव्यादिसङ्घातेषु नालं भवन्ति यथाकाममुपभोक्तुम्। तत् सर्वेषामविशेषेण स्वास्थ्यं प्रति दृष्टिराधेया। तत्र च वातपित्तश्लेष्मप्रकृतिभेदेन भिन्नप्रकृतिषु जीवनिकायेषु नैकविधमेव वस्तु वा कृत्यं वा निमित्ततामधिरोहति निर्विशेषेण सर्वेषाम्। यदेकप्रकृतेरनुकूलं तदेव प्रतिकूलमन्यस्य। तद् विशेषविचारेण विधेयः पथ्याद्युपयोगो येन तत्र तत्र तत्प्रभवः सम्यक् स्वास्थ्योपलम्भः। लोभः पुनस्तत्र महद् वैरमाचरति जीवनिकायेषु। यदेव शारीरप्रकृतिः प्रतिकूलतया हेयमुपदिशति, लोभः पुनस्तदेव रसनादिसन्तर्पणोपकरणतया नियतमुपादेयं प्रतिपादयति। यदेव च प्रकृतिः पथ्यमाचष्टे, तदेव कामं रसनादिप्रतिकूलं कामो हेयमुपदिशति। तद् यदि शक्यो लोभादिदोषः परिहातुं, तदा शक्यमाधातुं प्रतिष्ठापयितुञ्च शरीरवता निखिलकुशलोपलम्भाय समुपयुक्तं शारीरस्वास्थ्यम्। तिक्तं वा कटुकं वा यदेव हितं प्रकृतिभेदेन शरीरस्य, तदेवोपयोक्तव्यं, नेतरत्। एवं कृते कुतः शरीरवतां स्वास्थ्योपघातः। कुतो वा स्वास्थ्यव्याघातजन्मा विविधदुःसहदुःखानुषङ्गस्तेषाम्। तदेतत् सर्वं सुष्ठु विचार्य सूक्तं खलु तात्त्विकैः,—

स्वास्थ्यं हितं दिशति तद्विपरीतमन्यत्
तद्रक्षणीयमिह यत्नशतेन लोके।
लोभादयो दधति तत्र महाविरोधं
मोदाय तत्परिहृतिः क्रियतां विवेकात् ॥

# विदुषो वृत्तम्

( पूर्वानुवृत्तम् )

अथ संस्कृतकालेजमहाविद्यालये एम्-ए-पाठ्यानि अधीत्य १८९६ खृष्टाब्दे तत्परीक्षायां प्रथमस्थानमधिकृत्य (First in class I) विश्व-विद्यालयदत्तं सुवर्णपदकं "सोणामणि-पुरस्कार" लब्धवान्। एम् ए-पाठ्याध्ययनकाले तात्कालिकश्रेष्ठाध्यापकानां शिष्यत्वं लब्ध्वा कृतकृत्यमिवात्मानं मेने। तथा च पण्डितश्रेष्ठात् महेशचन्द्रन्यायरत्नात् संस्कृत-कालेजाध्यक्षात् वेदान्तं, चन्द्रकान्ततर्कालंकारात् मनुसंहितां काव्यप्रकाशं च, गोविन्दशास्त्रिणः व्याकरणं, कामाख्यानाथतर्कवागीशात् सवृत्तिकं गौतम-न्यायसूत्रं सांख्यतत्त्वकौमुदीं च, ताराप्रसन्नविद्यारत्नात् काव्यम् च अध्यैष्ट।

अतः परं पाश्चात्यचिकित्साशिक्षार्थं कलिकाता-मेडिक्याल्‌कलेज-विद्यालयं प्रविष्टः. तत्र प्रथमवर्षान्तपरीक्षायां तेन रसायनविद्यायां प्रथमस्थानमध्यकारि। लब्ध्वा ततो वङ्गीयमहाचिकित्सापीठस्वर्णपदकम् —Medical college of Bengal Medal: Session 1898-90 सकल-विषयसंख्या अपि सम्भूय तस्मै कालेजे प्रदत्तं सर्वेषु प्राथम्यमदाद् यतः वेतनं तस्मै प्रत्यर्पितं परन्तु तदानीन्तनस्य मेडिक्यालकालेजाध्यक्षस्य वम्‌फोर्ड ( Principal G. Bomford) नामकस्य अन्यायाचरणेन क्षुभित-हृदयः तत्प्रतिवादार्थं तत्कालेजं परित्यक्तवान् अविनाशचन्द्रः। प्रायेण-तृतीयवर्षार्द्धकालं च तत्र अधीत्य अविनाशेन शारीरविद्या (Anatomy, Physiology) विशेषेणायत्तीकृता।

अथ वर्षद्वयं व्यवहारशास्त्रम् अधीत्य १९०३ खृष्टाब्दे वि-एल् परीक्षायां लब्धोपाधिकः राय-रामचन्द्रमित्रवाहादुरस्य वशे शिक्षार्थिरूपेण (Articled crerk) प्राक् शिक्षां समाप्य हाइकोर्टनामकमुख्यधर्माधिकरणं स्वकीयं कर्मक्षेत्रं रोचयामास (१४।४।१९०५ खृः)। तत्र च निसर्गविनीत-त्वेन सूनृतवाक्त्वेन प्रियदर्शनत्वेन व्यवहारशास्त्रज्ञानप्रकर्षेण च सर्वे-

षामेव प्रियतां जगाम। गुणगृह्याः सुगृहीतनामानः स्यर् आशुतोषमुखो-पाध्यायाः कलिकाताविश्वविद्यालयव्यवहारशिक्षायतने (University Law College) हिन्दुराजनीतिविषये तं अध्यापकपदं ग्राहयामास (१।७।१९३७ खीष्टाब्दं यावत् अध्यापनां चकार। हाइकोर्ट-वारएसोसियेशन समितेः सभापतिपदं कियन्तं कालम् अलङ्कृत्य वार्द्धकम् उपगतमिति मत्वा चतुः-षष्टितमवर्षे वयसि १९३९ खीष्टाब्दस्य जुलाइ मासि हाइकोर्ट इत्याख्य-मुच्चधर्माधिकरणं पर्यत्यजत। ढाका-विश्वविद्यालयस्य व्यवहारविभागस्य डीन् पदं (Dean of the Faculty of Law) तस्मै समर्पितमपि न स तद् अभिनन्दितवान्। कलिकाताविश्वविद्यालयस्य ठक्कुर-व्यवहार-शास्त्रा-ध्यापकपदमपि (Tagore Law Professorship) प्रदत्तमासीत् परं स्वाध्या-यान्तरायमवधार्य्य प्रतिवारमेव तेन सविनयं तत् प्रत्याख्यातम् अभूत्।

भारतीयासु विदेशीयासु च बहुषु प्राचीन-नवीन-भाषासु तस्य व्युत्-पत्तिरासीत्। स हि टेइन् (Taine, Henri—1828-1893; Baptised Hdolphe) प्रणीतं इंरेजि-साहित्ये-तिहासं फरासीभाषायामेव * अधीतवान्, न तु तस्य इंरेजिभाषानुवादम्। तस्य ग्रन्थ-संग्रहः अति-विपुल आसीत्, बहूनि भारते अलभ्यानि पुस्तकानि तेन शार्म्मण्यतः (Germany) इंलण्डतः (England) मार्किणतश्च (America) समानीतानि।

---

*Les Origines De La France Contemparaine Par H. Taine. La Rivolution Tome I, Tome II, La Conquete Jacobine, Paris 1878, 1881; Les Origines De La France Contemparaine Par H. Taine. L' Hncien Rigime, Paris 1879; Philosophie De L' Hrt Par H. Taine. Tome Deu-kieme, Paris 1904; Essai Sur Tite Live Par H. Taine. Paris 1904; Les Philosophes Classiques Du XIXE Siccle En France Par H, Taine. Paris 1905.

D. N. G.

अविनाशचन्द्रस्य स्वाभाविकी कवित्व-शक्तिः बह्वीषु वङ्गभाषा-कवितासु कतिपयासु संस्कृतकवितासु च आत्मप्रकाशं कृतवती। ताश्च कविता "वर्षा-गीति", "दामोदर", "छाया", "भीमकान्त", "एकाकी", "पुष्पाञ्जलि", "जीवन-संक्रान्ति", "ऋषिर भ्रम", "अन्त्येष्टि", "वाङ्गाली ब्राह्मण", "कस्तूरी", "कालोयाड़", "मङ्गलोपहार", नामभाजः "नव्यभारत", "भारती" (१३०६ वङ्गाब्दे अग्रहायणे "ऐन्द्र महाभिषेक") नामधेययोः मासिक-पत्रयोः प्रकाशिता बभूवुः (१२९९ वङ्गाब्दतः १३२५ वङ्गाब्दं यावत)। "नव्यभारते" "पूर्णवावुर नूतन चिन्ता", "समस्याकल्पलता", "क्षितीन्द्रनाथेर नूतन ग्रन्थ", "भाषातत्त्व", "मायावादपरीक्षा", "मुदीर दोकान", "एषार नामकरण" तस्य समालोचन प्रवन्धाश्च विद्वत्-समाजे भूयः समादरं लेभिरे। ते च उक्तपूर्वयोः मासिक-पत्रयोः प्रकाशिताः। भारतीयसङ्गीतपद्धतौ तस्य भूयान आदर आसीत। स स्वहस्तेन सेतार-तवलादियन्त्रं सुष्ठु वादयितुं शिक्षितवान्। अधुना-प्रचरच्चिह्नैः (Modern Natatien) सामगानस्य स्वरलिपि रचयितुं बृद्धवयसि तस्य कामना सञ्जाता, किन्तु कालस्तस्य प्रतिबन्धको बभूव।

स्वदेशीय-युगे वङ्गभङ्गविरोधान्दोलनसमये अविनाशचन्द्रः कर्मिश्रेष्ठस्य पूतचरितस्य अश्विनीकुमारदत्तमहोदयस्य सहकारी भूत्वा वरिशाल-मण्डले ग्रामं गत्वा प्रचार-कार्य्यम् अर्थसंग्रहञ्च कृतवान। अविनाशचन्द्रो हि नानाभाषाभिज्ञत्वेन बहुभाषाविदः शिक्षा-व्रतिनः अश्विनीकुमारदत्तमहोदयस्य प्रेमास्पदं बभूव।

वाकरगञ्जमण्डले स्त्रीशिक्षाविस्तारार्थं कलिकातावासि-वाकरगञ्ज-जनानां परस्परमेलनार्थं च तदानीं कलिकातायां "वाकरगञ्ज-हितैषिणी सभा" आसीत्। कियन्तं कालम् अस्यां सभायां सम्पादक-पदम् अविनाशेन अधिकृतमलङ्कृतञ्च। वरिशालसेवा-समितेरपि"सः अध्यक्षः आसीत्। राजनीतिक्षेत्रे अविनाशचन्द्रः उदारपथी (Liberal) आसीत।

भारतीयजातीयमहासभायां (Indian National Congress) कतिषु-चिदधिवेशनेषु तेन समुपस्थितेन बभूवे ।

अविनाशचन्द्रो हि एतत्-प्रबन्ध-रचयितुः समवयस्कः । यस्मिन् यस्मिन वर्षे अविनाशचन्द्रः प्रवेशिकादीः परीक्षाः समुत्तीर्णः, तद-व्यहितोत्तरवर्षेषु सोऽपि ताः ताः परीक्षाः एम्-ए-पर्य्यन्ताः समुत्तीर्णः । एकस्कुल-कालेजच्छात्रत्व-सर्मकर्मित्वादेश्च हेतोः कालेन तयोः महती प्रीतिः संजाता । यदाहं वङ्गवासीकालेज-विद्यालये संस्कृताध्यापकः आसं, तदा अविनाशचन्द्रः प्रायशः सायंकाले आमहार्ष्ट्-वर्त्मस्थं जीवानन्दविद्यासागरस्वामिकं छात्रावासगृहमुपगम्य तत्रत्ये अस्मत्-कुटीरे मया सार्द्धं कदाचिद् वा अन्यैरभ्यागतैः विद्वद्भिः सह विविधशास्त्रालापेन वा सत्कथाभिर्वा कदाचित् वेदान्तादिग्रन्थाध्ययनेन वा कियन्तं कालं यापयति स्म । वरिशालमण्डलस्थ-गाड़ुरियाग्रामनिवासी कुशाग्रीयमतिः नव्यन्यायसांख्यवेदान्तादि-शास्त्रेषु कृतभूरिश्रमः उत्तरकाले अल्पीयस्येव वयसि लब्धमहामहोपाध्यायोपाधिकः तदानीं वर्द्धमानराज-संस्कृत-विद्यालयाध्यक्षः अधुना स्वर्गवासी विश्वेश्वरतर्करत्नः अस्माकं सुहृत् अस्मिन् सान्ध्य-शास्त्रालापे असकृत् अंशी बभूव ।

अथैकदा कालिकाया देव्या ध्यानं मीमांसाविषयत्वेन गृहीतम् । तत्र खलु अविनाशचन्द्रेण "महाकालेन च सम विपरीतरतातुराम्" इत्यस्य वाक्यस्य एकमतिसमीचीनं व्याख्यानम् आविष्कृतम् । तद् यथा, यादृश्या रत्या प्रक्रियया "प्रकृतेर्महान ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः । तस्मादपि षोड़शकात् पञ्चभ्यः पञ्च भूतानि" इत्यादिक्रमेण आद्यया शक्त्या प्रकृत्य-परनामधेयया जगतः सर्गः क्रियते, तद्-विपरीतया जगतः प्रतिसर्गः तथैव क्रियते । प्रातिलोम्येन स्वस्वकारणे लयः विपरीत-पदार्थः यथा वायोराकाशे लयः, आकाशस्याहङ्कारे, अहङ्कारस्य च बुद्धौ इति । अस्य लयस्य कारणं कालिकैव ।

अस्मिन्नेव वर्षे सम्राजः सप्तमस्य एडोयार्डस्य मुकुटाधानोत्सवे

(Coronation) कलिकाता-दुर्गस्य सुविस्तृते परिसरप्रान्तरे आसीत् महती अग्नि-क्रीड़ा (Fire-works)। तां वीक्ष्य अविनाशचन्द्रोऽहञ्च गृहाभिमुखं प्रस्थितौ। अनतिविलम्बे कस्माच्चित् सेतोः अल्पोन्नतात् (Culvert) पतितोऽहं तत्पार्श्वस्थितायाम् अगभीरपरिखायाम्, संज्ञा च मे विलुप्ता। अविनाशचन्द्रः स्वकीयेन उत्तरीयप्रान्तेन मां व्यजयन् यदा भूयोभूयः पृच्छति कथं भवान् अधुना आस्ते तदैव मे प्राथमिकी पुनः संज्ञा आसीत्। लब्धसंज्ञश्चाहं सब्रह्मचारिणम् अविनाशचन्द्रमवोचम् "अर्द्ध-सम्पत्तेः स्वरूपं साक्षादनुभूतमिति।" ततः आमहार्ष्ट्-ष्ट्रीट्-पटलडाङ्गां जिगमिषुः अविनाशचन्द्रः मूर्च्छाजातदौर्बल्यं मां स्वबाहुनावष्टभ्य कथं कथमपि दिग्भ्रान्त्या गङ्गायाः पारमुपागतः। पथि मिलिताः केचन पञ्चनद-निवासिन ऊचुः "केनचिद् भूतेन भवन्तौ विपरीतदिशम् अभ्यानीतौ। यदि अस्मत्-समागमो नाभविष्यत् तर्हि भूतेन भवन्तौ व्यापादितौ अभविष्यताम्। बहूनामेव सन्निधौ भूतानां शक्तिर्हसति, न तु द्वयोः सन्निधौ।" इति। अथ आवां हाइकोर्ट-ट्रामं घोटकवाहितम् आरुह्य विश्वविद्यालय-सिनेटगृहसमीपे अवतीर्य्य पद्भ्यां मद्गृहमुपागतौ। ततः तस्यां रजन्यां दुग्धमात्रं मम पथ्यत्वेन व्यवस्थाप्य अविनाशचन्द्रः प्रिय-सुहृन्मे स्वगृहाय प्रतस्थे।

अस्य खलु समुदारचरितस्य महात्मनो जातचक्रमपि तदीय ज्ञान-गम्भीरतां पिशुनयति। अस्य जन्मचक्रे सर्वे एव ग्रहगणा अन्यो-ऽन्यानुकूलास्तदीयं विद्यास्थानं परिपुष्णन्ति।

अविनाशचन्द्रस्य जीवनं सर्वमेव मधुरमासीत्। तत्परिचिताः सर्वे जनाः तस्य व्यवहार-माधुर्य्येण तस्मिन् अनुरक्ताः बभूवुः। किं बहुना—अविनाशगृहे सकलं मधुरम्। अविनाश गृहे सकलं मधुरम्।

# छन्दोगक्रियासारः

( निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः । )

[ पूर्वानुवृत्तः ]

अमुकगोत्र पितरमुकदेवशर्मन् अमुकगोत्र पितामहामुकदेवशर्मन् अमुकगोत्र प्रपितामहामुकदेवशर्मन् एतत्ते आचमनं स्वधा इति दद्यात्। एवं मातामहपक्षेऽपि। ततो देवादिक्रमेण ॐ सुप्रोक्षितमस्तु इति ब्राह्मणाग्रभूमिं ब्राह्मणांश्चासिञ्चेत्। ॐ अस्तु इति प्रतिवचनम्। ॐ शिवा आपः सन्तु इत्यनेन पूर्ववदासिञ्चेत्। ॐ सन्तु इति वचनम्। ॐ सौमनस्यमस्तु इत्यनेन ब्राह्मणेभ्यः पुष्पाणि दद्यात्। ॐ अस्तु इति प्रतिवचनम्। ॐ अक्षतञ्चारिष्टञ्चास्तु इति ब्राह्मणेभ्यो यवान् दद्यात्। ॐ अस्तु इति प्रतिवचनम् (१)। ततो दिवे यवयुक्तजलं गृहीत्वा ॐ पुरूरवोमाद्रवसोः विश्वेषां देवानामक्षय्यमस्तु इति देवब्राह्मणहस्तेषु दत्त्वा तिलयुक्तजलं गृहीत्वा विष्णुरोम् अमुकगोत्रस्य पितुरमुकदेवशर्मणः अक्षय्य-

---

१। "आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकञ्च दद्यात्"। ३२। इति श्राद्धसूत्रम्। उदकादिदानप्रकारमाह—कात्यायनः,—

"अथाग्रभूमिमासिञ्चेत् सुप्रोक्षितमस्त्विति।
शिवा आपः सन्त्विति च युग्मानेवोदकेन तु॥
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम्।
अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतानपि दापयेत्॥ इति

अत्र युग्मानेव इति आभ्युदयिकविषयम्। अन्यत् सर्वमन्यत्राधिक्रियते। "अक्षतास्तु यवाः प्रोक्ताः" इत्यपि तस्य वचनम्। सहि प्रदीपवत् स्पष्टमुपदेष्टा।

अत्र अस्तु इति सन्तु इति च यथासम्भवमुत्तरं योग्यत्वात्। "प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः"। इति कात्यायनवचने सर्वपदेन व्याप्त्यवगतेश्च। एतदनन्तरं श्राद्धस्याक्षय्यार्थमुदकं दद्यात्।

मस्तु इत्यनेन पितृब्राह्मणहस्ते दद्यात् (२)। एवं जलं स्पृष्ट्वा पितामहादिपञ्चब्राह्मणहस्तेषु पृथक् पृथग् दद्यात्। सर्वत्र अस्तु इत्युत्तरम्। ततो ॐ अघोराः पितरः सन्तु इति प्रार्थना स्यात्। ॐ सन्त्विति प्रतिवचनम्। एवं मातामहपक्षेऽपि। ॐ गोत्रं नो वर्द्धताम्। इति प्रार्थना त्रिष्वपि पक्षेषु कर्तव्या। सर्वत्र ॐ वर्द्धतामिति प्रत्युत्तरम्। ततः पिण्डानामुपरि पवित्रमुत्पाद्य तेन सह दर्भानास्तीर्य ॐ स्वधां वाचयिष्ये इति पृच्छेत् (३)। पितृपक्षे मातामहपक्षे च सकृदेवायं प्रश्नः (४)। ॐ वाच्यतामित्युत्तरम्। ततः ॐ पितृभ्यः स्वधोच्यतामिति वदेत्। ॐ अस्तु स्वधेति प्रतिवचनम्। एवं पितामहेभ्यः स्वधोच्यताम्। प्रपितामहेभ्यः स्वधोच्यताम्। मातामहेभ्यः स्वधोच्यताम्। प्रमातामहेभ्यः

---

२। "अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते।

षष्ठ्यैव नित्यं तत् कुर्यात् न चतुर्थ्यां कदाचन। इति छन्दोगपरिशिष्टम्।

अत्रार्घ्यदानवदित्यनेन प्रत्येकं ब्राह्मणेषु दीयते इति ज्ञायते।

अक्षय्योदकदानञ्चेति चकारेणात्र 'अक्षतञ्चारिष्टञ्चास्तु' इति पूर्ववचनोपात्त'मस्तु' इत्यनुषञ्जनीयम्। "अक्षय्यमस्त्विति वाचयित्वा" इत्यपि छन्दोगपरसूत्रम्।

३। "अघोराः पितरः सन्तु, सन्त्वित्युक्ते, गोत्रं नो वर्द्धतां वर्द्धतामित्युक्ते स्वधा निनयनीयान् दर्भान् सपवित्रानास्तीर्य, स्वधां वाचयिष्ये इति पृच्छति"। इति श्राद्धसूत्रम्। ३३।

४। तत्र भवान् अत्र प्रश्नं सूत्रयित्वा उत्तरत्र षण्णामेव स्वधावाचनं सूत्रयिष्यति, ततोऽवगच्छामः,—षण्णामुद्देशेन सकृदेव प्रश्नोऽयम्। अन्यथा मातामहादिभ्यः स्वधावाचनसूत्रणमनर्थकं स्यात्। "मातामहानाञ्चैवम्" इत्यनेनैव तत्प्राप्तेः। पूर्वसूत्रे स्वधापदेन उदकं भण्यते। 'स्वधास्थ' इति मन्त्रलिङ्गात्। स्वधा निनीयते येषु ते स्वधानिनयनीयास्तानित्यर्थः।

स्वधोच्यताम्। वृद्धप्रमातामहेभ्यः स्वधोच्यतामिति प्रत्येकं वदेत् (५)। सर्वत्रैव अस्तु स्वधेति प्रतिवचनम्। ततो न्युब्जीकृतमर्घ्यपात्रमुत्तानीकृत्य सपवित्रकुशाच्छादितपिण्डोपरि ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन् इत्यनेन वामान्वारब्धदक्षिणहस्तेन वारिधारां दद्यात् (६)। एवं मातामहपक्षेऽपि। अत्र

---

५। "वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो-मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामिति"। इति श्राद्धसूत्रम्।

६। "अस्तु स्वधेत्युक्ते स्वधा निनयनीये धारां दद्यादूर्जं वहन्तीरित्युत्तानं पात्रं कृत्वा"। ३५। श्राद्धसूत्रम्।

कात्यायनोऽपि "प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः।
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत्" ॥ इति

(क्रमशः)

---

## वृत्तवर्तिका

निवेद्यते किञ्चिदानन्दवृत्तं परिषद्बान्धवेषु यथा,—परिषदः स्वीयगृहस्य प्रथमभूमिकानिर्माणकृत्यं परिसमाप्तप्रायम् अविलम्बितमेव तत्र परिषदः प्रथमप्रवेशमहोत्सवः सम्भाव्यते।

परिषदो वार्षिकमहोत्सवोऽपि सत्वरं भविता। तत्र संक्षिप्तमृच्छकटिकप्रकरणस्याभिनयार्थं परिषदा महान् प्रबन्धः क्रियते। आशास्महे परिषदः सुष्ठु विचारेण प्रक्रान्तः प्रबन्धोऽयं शुभामेवायतिमुपदिशेत्।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1949)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina-charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.




Reg. No. C 1073

Vol. XXXIII. August 1950

No. 4. १८७२-शकीये

३३श-वर्षस्य श्रावणे

४र्थ संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—14s.

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामबाजार
कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।

भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIII. | १८७२-शकीये श्रावणे | August |
|---|---|---|
| No. 4. | ३३श-वर्षस्य ४र्थ-संख्या | 1950. |


## श्रीमद्भागवतमङ्गलम्

कृत्वा पुराणनिचयं बहुतथ्यपूर्णं

वेदान्तसूत्रमथि भारतपुण्यकाव्यम् ।

द्वैपायनो मनसि नाप यदा प्रशान्तिं

तावच्चकार भुवि भागवतं रसालम् ॥१॥

श्रीराधया मधुरयापरगोपिकाभि-

र्वृन्दावने व्यधित गोपगणैश्च लीलाम् ।

अप्राकृतेन वपुषा भगवान् मुकुन्दो

व्यासश्चकार तदुपाश्रितकाव्यमेतत् ॥२॥

एतत् फलं विगलितं श्रुतिकल्पवल्ल्याः

पूतं शुकस्य वदनादमृतद्रवाढ्यम् ।

राजोपयुक्तमथ भावुकभावभव्यं

दुःखत्रयान्तकरणं शरणं नाराणाम् ॥३॥

अस्मिन्नहैतुकविशुद्धमुकुन्दभक्तिः

शिष्टा ययात्मनि भवेदमितप्रमोदः ।

यामन्तरेण निखिलागमतत्त्वबोधः

सत्यं भवेत्तनुभृतां श्रम एव लोके ॥४॥

बाल्यक्रीड़नया नयानुगतया गोपालबालादिभिः
श्रीकृष्णेन दधे वधादघवतां यद् यन्महावैभवम् ।
यच्चाप्यन्यविधक्रियापरिचयात्तत् सर्वमत्रादराद्
व्यासेन प्रतिपादितं भगवता तेनैतदत्युत्तमम् ॥५॥
एतद् भक्तिरसाभिषेकसुभगं सन्तापसन्तापनं
सन्तोषामृतवर्षणं भगवतो लीलारतिद्योतनम् ।
काव्यं काव्यरसानुषक्तमनसां तत्त्वप्रियाणां श्रुतिः
श्रीमद्भागवतं परं विजयते विज्ञानहेतुः सताम् ॥६॥
यत् सर्वार्थमयं प्रमाणममलं सद्वैष्णवानां चिरं
यस्याख्यानशतैरपास्तदुरितैः कृष्णे रतिर्जृम्भते ।
यस्मिन् रासमहोत्सवादिरनघः सङ्कीर्त्तितो मोदनः
श्रीमद्भागवतं परं विजयते पीयूषसारप्रियम् ॥७॥
श्रीमद्भागवतं रसैरुपचितं भक्तैः सदाधीयतां
तत्सन्दर्शितया दिशा भगवतो ध्यानं समाश्रीयताम् ।
संसारोचितपापराशिरनिशं यत्नेन निर्धूयतां
साध्या भक्तिरुपास्यतां नरजनिः साफल्यमानीयताम् ॥८॥
सर्वस्मिन भगवद्विभूतिरनघा नित्यं समालोक्यतां
श्रीमद्भागवतानुशिष्टसरणौ श्रद्धाभरैर्गम्यताम् ।
नित्यं श्रीभगवद्गुणोच्चयकथा श्रोत्रेण संसेव्यतां
तद्रूपं परिचिन्त्यतां प्रतिपदं तन्नाम सङ्कीर्त्यताम् ॥९॥

## नवसूक्तिरत्नमालिका

योग्ये महत्त्वे सति जागरूके सम्मानयिष्यन्ति जनाः स्वयं त्वाम् ।
बलेन मानो नहि शक्यलाभः तत्रासुरा देवगणाश्च मानम् ॥
मृषास्तवैरात्मजनानुवृत्तैर्मन्यस्व नात्मानममेयमानम् ।
ते शत्रवस्ते सुहृदो न भव्या ये तत्र मोहं भवतः सृजन्ति ॥
अहङ्कृतिर्वा परमत्सरो वा विमुच्यतां तत्त्वविबोधदोषः ।
स्वोत्कर्षमानं भवतस्तदानीं हृदि प्रकाशेत हितानुवृत्त्यै ॥

---

## मासप्रकृतिः

यस्मिन् चान्द्रे मासि पूर्णिमान्ते श्रवणानक्षत्रयोगः, सोऽयं चान्द्रः श्रावणो मास इत्याख्यायते। सूर्यस्य कर्कटराशिस्थितिकाल एव तत्-सम्भवात् स एव कालः सौरश्रावणाख्यया प्रथते। अत्र मासे विवाहादिसंस्कारकृत्येषु संकल्पादिवाक्ये 'श्रावणे मासि कर्कटराशिस्थे भास्करे' इत्युल्लेख्यम् ।

वर्त्तमाने वर्षे सौरश्रावणस्य प्रथमदिनं श्रीश्रीजगन्नाथदेवस्य रथ-यात्रापुण्यकृत्येन प्रशस्यतमम्। अस्यैव मासस्य नवमदिने भविता पुण्य-मयी श्रीश्रीजगन्नाथदेवस्य पुनर्यात्रा। श्रीश्रीहरेः शयनमपि तदैव ।

मासस्यास्य सप्तदशे दिवसे पुण्या नागपञ्चमी यत्र श्रीश्रीमनसादेव्या अष्टानाञ्च नागानां पूजा विहिता ।

श्रावणे मासि जातो जनः लोके प्रसिद्धः धनवान् दाता स्त्रीपुत्रभृत्यादि-बहुपरिजनजुष्टः प्रभूतलोकानुरञ्जकश्च स्यात्। अस्मिन् मासि गृहे निर्मातव्ये पश्चिमद्वारमेव तत् कार्यम्। तत्र वृषकन्यातुलाकुम्भराशि-कानां जनानां त्रयोदशदिनात् परञ्च वृषमिथुनकन्यावृश्चिककुम्भमीन-राशिकानां रविशुद्धिः। गुरुशुद्धिश्च मेषमिथुनसिंहतुलामकरराशिकानाम् ।

वर्षासु अग्निबलह्रासेन वायुपित्तकफानां सर्वेषामेव प्रकोपो जायते।

तेन दिवानिद्रा व्यायामः सूर्यकिरणोपभोगादिकञ्च परिहेयाणि। मधुयुक्त-पानीयादिव्यवहारश्च विधेयः।

---

# मतिमञ्जरी

मान्याः पारिषदाः! बहुकालात् प्रभृत्येव दृश्यते पृथिव्यां समन्ततो जुष्टभूमा विधातुः कोपः। क्वचित् वाष्पचालितरथानां पारस्परिक-सङ्घर्षेण, क्वचित् स्वच्छन्दं नभसि सञ्चरतां व्योमयानानां यन्त्रवैकल्यादि-विपत्पातेन, क्वचिदचिन्तितोपनतेन प्रबलजलोच्छ्वासेन, क्वचित् प्रबलवात्याद्युप-द्रवेण, क्वचिद् दुर्भिक्षजनितमहाविक्षोभेण, क्वचिदकाण्डे प्रथमानेन दुर्दमरोग-प्रसारेण, क्वचिद् विपुलहतकम्पसम्पादकेन भूमिकम्पादिसम्पातेन, क्वचित् साम्प्रदायिकभावप्रभवहिंसादिदोषप्रकरेण, क्वचिच्चान्यथान्यथापि दृश्यते लोकानां महानेव परिक्षयः। यदा तावज्जनपदेषु सर्वेषां प्राणवतां दुरदृष्टानि सहैव फलोन्मुखानि जायन्ते, तदैव सम्पद्यते दुर्भिक्षमहामारीप्रभृतिभि-स्तत्तज्जनपदध्वंस इति हि शास्त्रकाराः समामनन्ति। साम्प्रतमपि प्रायेण तमेव कालमुपनतं मन्यामहे। तदस्य कुटिलकालनिबन्धनस्य महा-विपर्ययस्य प्रतीकाराय श्रीभगवानेव नः शरणं विपत्प्रतीकारोपयुक्त-वैधयागादिविशेषानुष्ठानञ्च॥

प्राचीने काले राजतन्त्रेषु राज्येषु राजान एव देशविपत्प्रतीकाराय विविधानि वैधानुष्ठानानि समनुष्ठाय देशानुपकृतवन्तः। सम्प्रति प्रायेण सर्वत्रैव धर्मविशेषनिरपेक्षेषु राष्ट्रेषु स्वातन्त्र्यमुपगतेष्वपि दूरापास्तं तत्। तदत्र समाजविशेषैरेव स्वस्वधर्ममार्गानुमोदितक्रियाविशेषानुष्ठानेन सर्वं परिहृत्य विपत्प्रतीकाराय श्रीश्रीभगवतः शरणीकारेण शुभा गतिः साध-यितुं शक्या चेत् तदैव विपर्ययस्यास्य विनिवृत्तिर्नान्यथा। न हि तावान् विपर्ययः शक्यो विनिवर्त्तयितुं स्वल्पमात्रशक्तिकेन केनापि दृष्टोपायेन।

नियन्त्रिता हि तस्य शक्तिः स्वगोचरमर्थमल्पमेवालं संसाधयितुं, नत्व-गोचरमपि महान्तम्। तदस्य महतो विपर्ययस्य प्रतीकाराय महाशक्ति-कमदृष्टं साधनमपेक्षितम्। तदत्र सनातनधर्ममार्गं श्रद्धावतां जनपद-हितैषिणां धर्म्यक्रियापद्धतिनिष्णातानां सविशेषमवधानमपेक्षामहे।

---

# माधुकरी

१। मैथिलो गङ्गेशोपाध्यायो नव्यन्यायसम्प्रदायप्रवर्त्तकः। मिथिलायामेव पुरा नव्यन्यायशास्त्रसंप्रचार आसीत्। गङ्गेशोपाध्याय-प्रणीततत्त्वचिन्तामणिग्रन्थ एव नव्यन्यायशास्त्रस्य मूलभूतः। खृष्टीय-त्रयोदशवर्षशतकान्तिमभागस्तदीयः कालो युक्त्या व्यवतिष्ठते। नवद्वीपस्य नैयायिकचूडामणिः श्रीवासुदेवसार्वभौमो मिथिलायां नव्यन्यायशास्त्र-मधीत्य सर्वं तत्त्वचिन्तामणिग्रन्थं संस्कारारूढं कृत्वा प्रत्यावृत्य वङ्गेषु नव्यन्यायसम्प्रदायं प्रावर्त्तयत्। आसीत्तदानीं मैथिलनैयायिकानामेष दुराग्रहो यन्नव्यन्यायग्रन्था मिथिलाया बहिः क्वापि न देया इति। तत एव वासुदेवस्य तथा प्रवृत्तिरजनिष्ट। तदेतेन वङ्गजनपदः श्रीवासुदेव-सार्वभौमस्य समीपे सुतरामधमर्ण एव। तदनन्तरन्तु रघुनाथशिरो-मणिप्रभृतीनाम्।

२। भारतीयसाहित्ये सर्वतो वृहत्तमं काव्यं महाभारतं नाम। तदुक्तं तत्रैव 'महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते'। तच्च न केवलं पद्यमयं किन्तु गद्यमयमप्यंशतः। तत्रत्यं गद्यं वैदिकभाषादर्शेन ग्रथित-मिति विशेषः। तत्र प्राचीने काले प्रचारं गतानि यानि तत्त्वानि समुप-लभ्यन्ते, न तथान्यत्र क्वापि। तत् प्राचीनसमाजादिसकलावस्था सम्य-क्तया ज्ञातव्या चेत् श्रीमन्महाभारतमेव तदा प्रधानं शरणम्।

३। श्रीरामायणमादिकाव्यं लौकिककाव्येषु। क्रौञ्चशोकेन बाल्मीकि-महर्षेर्मुखात् प्रथमतो वेदाद् बहिश्छन्दस्वती वाणी प्रादुरभूत, यथा—

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

तदनन्तरञ्च ब्रह्मादेशाद्रामायणप्रणयनम्।

राजशेखरकविराजप्रभृतयस्तु सारस्वतकाव्यपुरुषं प्रथमं, महामुनिमुशनसं द्वितीयं, तृतीयञ्च प्राचेतसं बाल्मीकिं वेदाद् बहिः पद्यनिबन्धारमाचचक्षिरे। पद्यमयकाव्यं ग्रन्थरूपेण बाल्मीकिमुनेरेव प्रथमतः प्रवृत्तमित्येव तमादिकविमाचक्षते। तदुभयमेव समञ्जसम्।

४। स्वाधीनतामुपगते नवीने भारते निर्मितो यः समुद्रपोतः प्रथमं सागरे समवततार, तस्य संज्ञा 'जल-ऊषा' इति। यद्यपि प्राचीने काले एवं भारतनिर्मिता बहवः समुद्रपोता वाणिज्यार्थं सागरे समवतीर्णा बभूवुः, तथापि भारते वर्षे बहुकालात् प्रभृति तथाविधवृत्तस्य अप्रचरद्रूपतया नवीनमद्भुतञ्चैतत प्रतिभातीति विशेषतः सन्देशपत्रादौ तदुल्लेखः।

५। उद्भिदां प्राणस्पन्दननिरूपकयन्त्रस्य प्रथमाविष्कारको भारतवर्षान्तर्गतवङ्गदेशवास्तव्यः श्रीजगदीशचन्द्रवसुरेव। प्राचीनैर्महर्षिप्रभृतिभिस्तु तदिदमुद्भिदां प्राणस्पन्दनं सुचिरात पूर्वमेवानुभूतम्। तदुक्तं मनुसंहितायां श्रीमन्मनुमहाराजेन,—'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विता' इत्यादि। सांख्यसूत्रादावपि तदिदं स्पष्टमुद्घोषितमुपलभ्यते। स चायमनुभवः केन यन्त्रेणेति न जानीमहे। तदिदं यन्त्रं किञ्चिदलौकिकरूपमेव स्यात्। तथाविधलौकिकयन्त्रस्य काप्यनिर्देशात्।

# छन्दोगक्रियासारः

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः । ]

[ पूर्वानुवृत्तः ]

पवित्रमुत्पाद्य तेन सपवित्रं कुर्यात नत्वर्घ्यसम्बन्धिपवित्रेण (७)। ततो दैवे ॐ विश्वे देवाः प्रीयन्तामिति ब्रूहि इति वदेत्। ॐ विश्वे देवाः प्रीयन्तामिति प्रतिवचनम्। ततः पिण्डान् भोजनपात्राणि च चालयित्वा यथाशक्ति दक्षिणां दद्यात (८)। यथा प्रथमं दैवपक्षे ६। अद्येत्यादि

---

७। अत्र पवित्रमुत्पाद्य तेन पवित्रान्तर्हितान् पिण्डान् कुर्यां, नतु अर्घ्यपात्रसम्बन्धीनि यानि ब्राह्मणाय प्राक्प्रतिपादितानि तैः पितरो हि तैस्तर्पिताः कथं तेषां पुनरादानम्।

"श्राद्धे सेवनकाले तु पाणिनैकेन दापयेत्।

तर्पणे तूभयं कुर्यादेष एव विधिः स्मृतः ॥ इति छन्दोगपरिशिष्टम्।

अत्र "पाणिनैकेन" इति तु अञ्जलिकरणाभावाभिप्रायेण, नत्वन्वारब्धनिषेधार्थम्।

८। विश्वे देवाः प्रीयन्तामिति दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा यथाशक्ति दक्षिणां दद्यात्"। ३६। इति श्राद्धसूत्रम्। पात्रपदेनात्र भोजनपात्राणि परामृश्यन्ते"। 'सर्वमन्नमेकत्रोद्धृत्य' इयि सूत्रणात् पिण्डपात्रस्यैकत्वात् बहुवचनानुपपत्तेः।

६। "दैवपूर्वं श्राद्धं कुर्वीत" इति वचनात् दैवपूर्वं दक्षिणा दातव्या। दक्षिणापि खल्वङ्गं श्राद्धस्य। "दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद् भवेत्। पित्राद्यन्तन्त्वीहमानः क्षिप्रं नश्यति सान्वयम्" इति मनुवचनात् श्राद्धस्य दैवाद्यन्तत्वेऽपि परतोऽपि कर्माभिधानादिनानीं न तथेति। "ब्राह्मणे दक्षिणा

विश्वेषां देवानां कृतैतत्पार्वणश्राद्धकर्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनं तन्मूल्यं वा यथानामगोत्राय ब्राह्मणायाहं ददे। ततः पितृपक्षे अद्येत्यादि अमुकगोत्रस्य पितुरमुकदेवशर्मणः अमुकगोत्रस्य पितामहस्यामुकदेवशर्मणः अमुकगोत्रस्य प्रपितामहस्य अमुकदेवशर्मणः कृतैतत्पार्वणश्राद्धकर्मणः प्रतिष्ठार्थं दक्षिणामिदं रजतं तन्मूल्यं वा यथासम्भवनामगोत्राय ब्राह्मणायाहं ददे। एवं मातामहपक्षेऽपि। ततः कृताञ्जलिः ॐ दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा विगमद् बहुदेयञ्च नो अस्तु अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कञ्चन" इति पठित्वा एता एवाशिषः सन्तु इति प्रार्थयेत् (१०)। ततो ब्राह्मणैः सन्तु इत्युक्ते सर्वानेव ब्राह्मणान् ॐ स्वस्ति ब्रूहि इति पृच्छेत्। ब्राह्मणैः ॐ स्वस्ति इत्युक्ते (११)। पूर्वोक्ता आशिषः प्रतिगृह्य ॐ वाजे वाजे वत वाजिनो नो धनेषु

---

देया यत्र या परिकीर्तिता। कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्।" इति छन्दोगपरिशिष्टोक्तसामान्यवचनस्य विशेषविषयेऽत्राप्रवृत्तेश्च।

१०। "दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा विगमद्बहुदेयञ्च नो अस्तु अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु मा च याचिष्म कञ्चनेत्येता एवाशिषः सन्तु॥ इति गृह्यसूत्रम्। ३७। महायशःप्रभृतय एवमेव पठन्ति। तत्त्वकारस्त्वन्यथेमं ग्रन्थं पठति,—उत्तानं पात्रं कृत्वा इत्यादिम्। उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यात्, विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा, दातरो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यपगमद्बहुदेयञ्च नोऽस्त्विति। अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु मा च याचिष्म कञ्चन। अन्नं प्रवर्द्धतां नित्यं दाता शतं जीवतु। येभ्यः सङ्कल्पिता द्विजास्तेषामक्षया तृप्तिरस्तु एताः सत्या आशिषः सन्तु इत्याशिषः प्रतिगृह्य"।

११। "सन्त्वित्युक्ते स्वस्तिवाच्याशिषः प्रतिगृह्य"। ३८। इति श्राद्धसूत्रम्।

विप्रा अमृता ऋतज्ञा अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः इत्यनेन ब्राह्मणान् विसर्जयेत् (१२)। यथा सकृन्मन्त्रमुच्चार्य पितृब्राह्मणमङ्गुष्ठं गृहीत्वा उत्थापयेत्। तावतैव सर्वे ब्राह्मणा विसृष्टा भवन्ति (१३)। पश्चाद्दैवब्राह्मणमुत्थापयेत्। तत ॐ आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे आमागन्तां पितरामातरा चामासोमो अमृतत्वेन गम्यात् इत्यनेन ब्राह्मणाननुव्रज्य अभिवाद्य प्रदक्षिणीकृत्य

---

१२। "वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञा अस्य ध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरित्येतया विसृज्य"। ३६। ति श्राद्धसूत्रम्। विसर्जनप्रकारश्च छन्दोगपरिशिष्टोक्तो ग्राह्यः।

१३। यथा, "युग्मानेव स्वस्तिवाच्याऽनङ्गुष्ठग्रहणं सदा।
कृत्वा धूर्यस्य विप्रस्य प्रणम्यानुव्रजेत्तथा" ॥ इति

अस्माद् वचनादवगच्छामः—सकृन्मन्त्रमुच्चार्य धूर्यस्य विप्रस्यानङ्गुष्ठं पाणिं ृह्णीयात्। तावतैव सर्वे ब्राह्मणा विसृष्टा भवन्ति इति। सोऽयं धूर्यो ंप्रः पित्र्य एव भवति। पित्रर्थं हि श्राद्धं देवास्तु तदङ्गतयैवेज्यन्ते। तत्र च ाह्मणपरीक्षैव नास्तीति स्मर्तारो भवन्ति। अत्र युग्मानिति आभ्युदयिके वेशेषः। ( क्रमशः )

# वृत्तवर्तिका

१। श्रीमन्तः पारिषदाः! कश्चिदानन्दहेतुः सन्देशः सन्दिश्यते श्रीमतां संस्कृतोन्नतिप्रियाणाम्। मेदिनीपुरप्रदेशान्तर्गते कांथिनगरे राष्ट्रीयसंस्कृतमहाविद्यालयस्य प्रबन्धः प्रायेण सम्पूर्ण इव लक्ष्यते। तत्र व्याकरणे एकः, साहित्ये एकः, स्मृतिशास्त्रे एकः, न्यायशास्त्रे एकः, सांख्यवेदान्तशास्त्रयोश्चैक इति पञ्च शास्त्राध्यापका नियोक्तव्याः। ते

राष्ट्राधिकारनियुक्तनिर्वाचनसंसदा निर्वाचिताः ; परमिदानीं राष्ट्राधिकारस्यानुमोदनमपेक्ष्यते। राष्ट्राधिकारेण तत्र तत्र विषये निर्वाचितानामध्यापकानां नामानि यथाकालं प्रकाशितानि स्युः। विद्याधिदेवी कृतयथोचितप्रबन्धस्यास्य नवीनस्य संस्कृतमहाविद्यालयस्य सर्वथा समुन्नतिं निष्कम्पां स्थितिञ्च विधेयादिति कामयामहे। सम्भाव्यमानस्यापरसंस्कृतमहाविद्यालयस्यापि राष्ट्राधिकारेण करिष्यमाणं प्रबन्धमचिरभाविनमाशास्महे।

२। कलिकाताविश्वविद्यालये सन्देशपत्रपरिचालनविद्याशिक्षणार्थं कश्चिद् विभागः प्रवर्त्त्यते। सन्देशपत्राणि किल तनुभृतां भावविशेषप्रवृत्तिबीजभूतानि। तानि यदि सुपरिचालितानि न भवेयुः, यदि तानि विरुद्धं मार्गमनुवर्त्तेरन्, तदा जनपदगतानां जनानामन्तःकरणेषु हितप्रतिकूलभावसमुन्मेषेण महान् विप्लवः पदं दधीत। तदेषापि विद्या शिक्षया सुनियन्त्रिता नूनं जगतो महोपकारं विदध्यात्। स्वाधीनतामुपगते भारते वर्षे सन्देशविद्या तथा प्रवर्त्तयितव्या, यथा भारतीयजनसंघस्य चित्तवृत्तयः स्वदेशहितानुकूलवीर्याद्युपस्कृतास्तदानुकूल्येन सम्पद्येरन्। यथा च निरपेक्षदोषगुणादिप्रचारेण देशेषु दोषाणां निरासः सद्गुणसंवर्द्धनञ्च भूयो जायेत। एवमेव हि साफल्यं पत्रिकाणाम्। तत्र प्रथमतः स्वल्पसंख्यकाः शिक्षार्थिनः परिगृह्येरन्। अस्तु प्राथमिकप्रवृत्तिरेवम्। अनन्तरं क्रमेणास्य विभागस्य परिपुष्टिः काम्यते। देशगततद्विषयानुरक्तजनसंख्यानुपातेन सेयं संख्या स्वल्पमात्रैव। प्रारब्धस्यास्य प्रबन्धस्य साफल्यमस्तु।

३। कलिकातामहानगर्यां क्रमशः पाकिस्थानाद्यागतजनसमवायेन लोकसंख्या सुतरां वृद्धिमाप्ता। तत एव च तत्रत्यमहाविद्यालयेषु तथा महान् विद्यार्थिनां संमर्दः समजनि, येन शिक्षाया दानस्य तथा ग्रहणस्य सौकर्यं व्याहतमिव लक्ष्यते। तस्मादेव कारणात् कलिकाताविश्वविद्यालयाधिकारः कलिकातानगर्या बहिः पल्लीप्रान्तेषु महाविद्यालयप्रतिष्ठा-

सङ्कल्पं गृहीत्वा बहुत्र सङ्कल्पानुरूपं कार्यमपि प्रावर्त्तयत्। समीचीन एवायं प्रबन्धः कृतो विश्वविद्यालयेन। अनेन यथा शिक्षायाः सौकर्यं तथा पल्लीनां महती समुन्नतिरपि अनायासेन सम्भविता। अन्यच्च ये नाम विशेषविद्यानिष्णाता अपि रिक्तकृत्यपदाभावेन विपन्नास्तिष्ठन्ति, तेषां सुतरामपेक्षितेन तत्र तत्र पदे नियोगेन सुतरां विपन्निवृत्तिर्विद्याग्रहणसाफल्यञ्च सममेव सम्भवेताम्।

४। कलिकाताराष्ट्रीयसंस्कृतमहाविद्यालये सुचिरात् प्रभृत्येव प्राच्यविद्याविभागः प्रतीच्यविद्याविभागश्चेति द्वौ विभागौ प्रचलितावास्ताम्। तत्र प्राच्यविद्याविभागे न्यायस्मृतिवेदान्तव्याकरणशास्त्राणामध्यापनं नियतमासीत। स्वल्पकालात् पूर्वञ्च तत्र साहित्यसांख्यज्योतिषवेदशास्त्राणामध्यापनव्यवस्थापि विभिन्नाध्यापकनियोगेन कृता राष्ट्राधिकारेण। प्रतीच्यविभागे तु समवर्त्तत आङ्गलभाषासाहित्यसंस्कृतसाहित्यदर्शनेतिहासगणितादिविषयाणां प्रतीच्यविद्याग्रहणपद्धत्याध्यापनव्यवस्था। तथा विशेषरूपेण संस्कृतन्यायस्मृत्यादिग्रन्थविशेषाणामतिरिक्ततयाध्यापनव्यवस्थापि। साम्प्रतं पुनः तत्र आङ्गलभाषासाहित्याद्यध्यापनव्यवस्थां संस्कृतमहाविद्यालयादपसार्य तत्तद्विषयाणां राष्ट्रीयप्रेसिडेन्सीमहाविद्यालये अध्यापनव्यवस्था साकल्येन व्यधायि। तस्मान्महाविद्यालयात् संस्कृतशिक्षाव्यवस्थामपसार्य संस्कृतमहाविद्यालय एव केवलं कृता संस्कृताध्यापनव्यवस्था। तदनुसारेण च संस्कृतमहाविद्यालयस्य प्राक्तना आङ्गलसाहित्याद्यध्यापकाः प्रेसिडेन्सीमहाविद्यालये प्रेसिडेन्सीमहाविद्यालयस्य संस्कृताध्यापकाश्च सर्व एव संस्कृतमहाविद्यालये प्रेषिताः। तदिदानीमारभ्य संस्कृतमहाविद्यालयस्य प्रतीच्यविभागे केवलं संस्कृतविद्याशिक्षैव प्रसिडेन्सीमहाविद्यालये च केवलं तदितरविषयाणाम्। संस्कृतमहाविद्यालयस्य विद्यार्थिनः संस्कृतभिन्नविषयाणां शिक्षार्थं प्रेसिडेन्सीमहाविद्यालयं तथा प्रेसिडेन्सीमहाविद्यालयस्य विद्यार्थिनः संस्कृतशिक्षार्थं संस्कृतमहाविद्यालयमपेक्षेरन्। तदेवमुभयोर्महाविद्यालययोः

परस्परमपेक्षया शुभा गतिरशुभा वा गतिः स्यादिति न निर्णेतुमर्हामः। बहुभिः कारणैर्बहुभ्य एव नेदृशी नवीनव्यवस्था रोचते। अनेन विधानेन यदि संस्कृतविद्यायाः क्रमेण समुन्नतिः स्यात्, यदि केवलसंस्कृतविद्यायाः शिक्षणार्थमुत्तरोत्तरं नानाविधं मार्गमुद्भाव्य संस्कृतविद्याया विशेषसम्पदः स्वप्रकाशे दत्तहस्तावलम्बा राष्टाधिकारेण भवेयुस्तदा मन्ये कथञ्चित सान्त्वना समुत्पद्येत तेषाम्। वयमितः प्रभृति फलमुदीक्षमाणा वर्तिष्यामहे।

५। बहोः कालात् प्रभृत्येव श्रूयते कलिकाताराष्ट्रीयसंस्कृतमहाविद्यालये राष्ट्राधिकारेण संस्कृतशास्त्रतत्त्वगवेषणाविभागः कश्चित प्रतिष्ठाप्यत इति। किन्तु अद्यापि कथामात्रपर्यवसितमेव तदीक्षामहे। संस्कृतशास्त्रेषु सागरकल्पेषु संख्यातीतानि सन्ति तत्त्वरत्नानि, तानि प्रकाशितानि महान्तमुपकारं साधयिष्यन्ति तत्त्वबुभुत्सूनाम्। तदत्र राष्ट्राधिकारस्य परमौदासीन्यमीक्षमाणा वयं न मोदामहे। आशास्महे च विषयस्यास्य सुमहद् गौरवमनुभूय राष्ट्राधिकारेण विनैव कालात्ययमयं विभागः सर्वेषां हिताय प्रवर्त्तयिष्यत इति।

६। संस्कृतसाहित्यपरिषदि गवेषणाविभागस्य कार्यं प्रचलति। तदुपकाराय राष्ट्राधिकारेण वितीर्णा परिषदे किञ्चिदधिकाष्टसहस्री रूप्यकाणाम्। तदेतेन सुमहता प्रकर्षेणैव तत्कृत्यपरिचालनं सम्भाव्यते।

७। कलिकातावितन्त्रीकशब्दयन्त्रप्रतिष्ठानेन भासकविकृत-मध्यमव्यायोगरूपकाभिनयार्थं समाहूता संस्कृतसाहित्यपरिषदभिनयगोष्ठी। तत्र सुयोग्याभिनयदक्षरूपदक्षसमवायः सम्यक् प्रयतते। स चायमभिनयः सेप्टेम्बरमासस्य त्रयोविंशदिवसे रात्रेः सार्द्धाष्टमघटिकायामारभ्य नवमघटिकायां समापयिष्यते। तत्र परिषदः साफल्यमुत्तरोत्तरं तत्र संस्कृताभिनयानुवृत्तिश्च कामयामहे।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1949)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina-charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

---

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin.... .*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. | September 1950
No. 5. | १८७२-शकीये
३३श-वर्षस्य | भाद्रे
५म संख्या | मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम—रूप्यकषट्कम् ६)
Foreign price—14s.

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामवाजार
कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIII. | १८७२-शकीये भाद्रे | September |
| --- | --- | --- |
| No. 5. | ३३श-वर्षस्य ५म-संख्या | 1950. |


## श्रीश्रीचैतन्यचरितामृतमङ्गलम्

श्रीमद्भागवतं यथा नरकजिल्लीलामयं पावनं
शुद्धश्रीहरिभक्तिपूतमनसामानन्दसन्दीपनम् ।
तद्वद् गौरकथामृतेन महितं गौड़ीयभक्तोचितं
पूतं श्रीचरितामृतं विजयते श्रीकृष्णदासोदितम् ॥१॥

यस्यालोचनया भवामयभयं दूरं प्रयाति क्षणात्
ज्ञानालोकसमन्वयेन नितरां चैत्तं तमः क्षीयते ।
शब्दब्रह्ममयं विचित्रविभवं चैतन्यलीलाघनं
पूतं तच्चरितामृतं विजयते श्रीकृष्णदासोदितम् ॥२॥

रम्या यत्र विचित्रवाक्यघटना काव्यप्रियाणां विदाम्
आनन्दं विदधाति चेतसि चिरं नानागुणासादनात् ।
दिव्यं तत्त्वमयं प्रियं सुमनसां चैतन्यलीलास्पदं
पूतं तच्चरितामृतं विजयते श्रीकृष्णदासोदितम् ॥३॥

नानाशास्त्रवचःप्रमाणनिचयोपन्यासतः सुस्थिरं
नित्यानन्दगदाधरादिचरितप्रोल्लासनं पावनम् ।

अद्वैतप्रभया समुज्ज्वलमपि द्वैतप्रकाशायनं
सिद्धं तच्चरितामृतं विजयते श्रीकृष्णदासोदितम् ॥४॥
यत्रैकत्र विचित्रदर्शनकथाकाव्यश्रियोः संहतिः
भक्तिः शुद्धिमती विधूतविषया यत्र प्रकाशं गता ।
पुण्या यद्वचनावली श्रुतिकथातुल्या प्रमाणं परं
सिद्धं तच्चरितामृतं विजयते श्रीप्रेमधर्मायनम् ॥५॥
येनापूर्वरसोदयं सुरगिरा गोविन्दलीलामृतं
सत्काव्यं विहितं व्यजायत विदां सन्तोषणं केवलम् ।
तेनैवाखिलतृप्तये कृतमतो यद् वङ्गभाषामयं
पूतं तच्चरितामृतं विजयते सर्वार्थसम्पादनम् ॥६॥
श्रीचैतन्यमहाप्रभोः सुचरितान्यालम्ब्य पूर्वं हि ये
काव्यानि व्यदधुस्ततः सुनिपुणः श्रीकृष्णदासः कविः ।
वैलक्षण्यमदर्शयद् भगवतो लीलोचितं यत्कृतौ
क्षेमं तच्चरितामृतं विजयते श्रीगौरभक्तयर्थिनाम् ॥७॥
श्रीवृन्दावनदासदिष्टपदवीसञ्चारनिष्ठापरं
श्रीमद्भागवतानुबन्धपरमं श्रीवैष्णवानां प्रियम् ।
श्रीचैतन्यमहाप्रभोः समुदितोपाख्यानसंवेदनं
पूतं तच्चरितामृतं विजयते श्रीप्रेमधर्मायनम् ॥८॥
पुण्या जयन्ति चरितामृतपद्यमाला
लोका जयन्ति भुवि गौररसे विशालाः ।
सङ्कीर्त्तनं जयति नाममहाविभूत्या
भावान्वितो जयति गौरहरिः प्रकृत्या ॥९॥

---

# मासप्रकृतिः

यत्र चान्द्रे मासि प्रायेण पूर्णिमान्ते पूर्वभाद्रपदनक्षत्रयोगः, सोऽयं चान्द्रो भाद्र इत्याख्यायते। सूर्यस्य सिंहराशिस्थितिकाल एवास्य सम्भव इति स एव कालः सौरभाद्राख्यया प्रथते। अस्मिन् काले क्वापि वार्षिकजलोच्छ्वासेन नदीसरोवरक्षेत्रादीनि परिप्लाव्यन्ते। अस्मिन् मासि जातकर्मादि-संस्कारकर्मणां संकल्पवाक्येषु 'भाद्रे मासि सिंहराशिस्थे भास्करे' इत्येवं माससमुल्लेखः कर्त्तव्यः। अस्मिन् मासि भगवतः श्रीकृष्णस्य हिन्दोलोत्-सवादिकानि बहूनि पुण्यकृत्यानि सन्ति।

मासस्यास्य अन्तिमे दिवसे शिल्पवणिक्प्रभृतिभिरतिमात्रेणोत्सवेन विश्वकर्मपूजा क्रियते, नागरिका बाला युवानः केचिद् वृद्धा अपि क्रीड़ा-कौतुकपरा घूर्णिकापत्राणि गगने समुत्पातयन्तस्तैः परस्परं सहर्षं युध्यन्ते।

अस्मिन् मासे लब्धजन्मा धीरः सुन्दरो रमणीप्रियः शत्रुविजेता कुटिलप्रकृतिस्तत्त्वग्राही शरणागतपरिपालकः सहास्यवदनश्च जायते। सौर-भाद्रस्य शुक्लपक्षे कृष्णपक्षे वा चतुर्थ्यामुदितश्चन्द्रो नष्टचन्द्र इत्याख्या-यते। तस्य च दर्शनं न कर्त्तव्यम्। दैवादनिच्छतापि तस्य दर्शनं भवति चेत् पूर्वास्येन सता दर्शनकारिणा 'सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः। सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः'। इति मन्त्रमुच्चार्य जलपानम् आचारात् स्यमन्तकोपाख्यानश्रवणञ्च कृतञ्चेत् नष्टचन्द्र-दर्शनजनितमिथ्यापवादगोचरतादोषः प्रशाम्यति।

सौरभाद्रे मासि गौः प्रसूता चेत् तस्या गोः स्वामिनः षण्मासाभ्यन्तरे प्राणात्ययो भवतीति 'भानौ सिंहगते चैव यस्य गौः सम्प्रसूयते। मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः।' इति निर्णयसिन्धुसमुपदिष्टवचनेन विज्ञायते। तद्दोषप्रशमनार्थं प्रसूता गौर्ब्राह्मणाय दातव्या। सोपवासं घृताक्तराजसर्षपैः अयुतव्याहृतिहोमाः कार्याः। ब्राह्मणाय यथाशक्ति

च दक्षिणा देया। या गौः सौरभाद्रे प्रसूता गर्भवती वा तस्या दुग्धं तदीयदुग्धजातद्रव्यं वा किञ्चन दैवे वा पैत्रे वा कर्मणि न व्यवहर्त्तव्यम्।

अस्मिन् मासि मिथुनतुलावृश्चिकमीनराशिकानां त्रयोदशदिनात् परञ्च मेषमिथुनकर्कटतुलावृश्चिकधनुर्मीनराशिकानां रविशुद्धिः। मेष-मिथुनसिंहतुलामकरराशिकानां गुरुशुद्धिः।

शरदि प्रायेण शरीरे उष्णता पित्तवृद्धिश्च जायते। अत्रैव हिमपातस्य प्रक्रमो भवति। अत्र हिमातपोपभोगो निषिद्धः। तदुक्तं 'शरद्रौद्रं न गृह्णीयात् न गृह्णीयात् शरद्धिमम्' इति।

---

## मतिमञ्जरी

वाणिज्यसेवा महदुपकरणमर्थस्य। सा यथा स्वल्पेन कालेन पुरुष-मर्थसमृद्धं कुरुते, न तथा किमप्यन्यत्। किन्तु तत्र वाणिज्यं सेवमानस्य सुनिपुणा बुद्धिर्विशुद्धिश्च समपेक्ष्यते व्यवहारस्य। आधुनिकाः पुनस्तत्र सुनिपुणबुद्धिपरिशून्या अपि वाणिज्यस्य अर्थसाधकतामात्रे श्रद्दधानाः तत्र प्रवर्त्तन्ते। प्रवृत्ताश्च वाणिज्यसेवायाः प्रशस्तायां पद्धतौ मूढ़ा यावत्तया नार्थसमागमं बाहुल्येन समीक्षन्ते, तावदविशुद्धां गतिमाश्रयन्तः कदाचिद् यथासम्भवं विक्रेयवस्तुषु स्वल्पमूल्यवस्त्वन्तरसंयोजनेन कदाचिद् वस्तूनां परिमाणलाघवेन कदाचिदल्पमूल्यलभ्यस्यापि बहुमूल्य-ग्रहणेन कदाचिद् वचनकौशलादपकृष्टस्यापि वस्तुनः परमोपादेयताप्रत्याय-नेन कथञ्चिदन्यथान्यथा च क्रेतृपुरुषान् प्रतारयन्तो न केवलमुत्कटं पापं सञ्चिन्वन्ति, परं कियतः कालात् परं वाणिज्यमार्गं सुतरामुपजातेन दुर्यशःपर्यायेण पराभूताः स्वेष्टलाभं भूयसा विघटयन्ति। वणिक्समाजे निष्कम्पो विश्वास एव मूलं तदीयाभ्युदयस्य। स चेदस्य दुष्टव्यवहारेण

विपन्नः कुतस्तर्हि तदीयाभ्युदयस्य वार्त्तापि। तद् यदि वणिग्वृत्त्या स्वीय-समुन्नतिराधेया विधेया तर्हि सर्वथा समाजस्य प्रतारणाकर्मणो विनिवृत्तिः। यः किल सकृत् प्रतारितो भवति, स द्वितीये वारे न पुनस्तस्य प्रतारकस्य वणिजः पण्यवीथिकामारोहति। परितस्तदीयप्रतारणाव्यापारं व्याचक्षाणः परानपि ततो निवर्त्तयति। तदेवं क्रमेण विरलतामाश्रितेषु तदीयपण्यक्रेतृजनसमाजेषु विपद्यते सद्य एवास्य वाणिज्यम्। तद् वाणिज्ये समुन्नतिं लिप्सुना जनसमाजेन, मधुरवाङ्मयप्रयोगतः क्रेतारो-वश्यतां नेयाः। क्रय्यवस्तूनां दोषाः परिहरणीयाः। प्रतारणाबुद्धिर्वर्ज-नीया। मानविशुद्धिः परिरक्षणीया। वाणिज्यवृद्धिविषये महान् बुद्धिपूर्वो यत्नः समास्थेयः। भूरिलाभकाम्या दमनीया। यत्र यद् वस्तु स्वल्पमूल्यलभ्यं ततस्तद् वस्तु समाहृत्य यत्र तदेव बहुमूल्यलभ्यं तत्र तद् विक्रेतव्यम्। आयव्ययलिपिरालस्यमपहाय प्रयत्नेन निःशेषं रक्षणीया। समागमापेक्षया स्वल्पो व्ययः सम्यग् विचारेण व्यवस्थापनीयः। परेषु स्वीयैश्वर्यप्रत्यायनार्था प्रवृत्तिः परित्यक्तव्या। विलासनिष्ठा नाङ्गीकर-णीया। एवमेवं वाणिज्ये प्रवर्त्तमानस्य वणिजः क्रमेणाभिवृद्धिरभीष्टफल-लाभश्च स्वल्पमात्रकेणैव कालपर्यायेणेति तथा तथैव सर्वदा प्रवर्त्तितव्यं वणिजेति शम्।

---

## नवसूक्तिमुक्तावली

केशाः शुक्ला दन्तजालं विशीर्णं
लोलं चर्म क्षीणतामाप दृष्टिः।
श्रोत्रं मूढं शब्दतत्त्वोपलम्भे
चैत्तः कामो वर्द्धते तावतापि।

न निश्चितं जीवितमस्ति तादृग्
यथा भवे प्राणभृतां हि मृत्युः ।
तथापि नो विश्वसिमस्तदर्थे
नैवादरकं धर्म्यविधिं चरामः ॥

बाल्यं गतं क्रीड़नया समग्रं
कामेन तारुण्यमपेतमेवम् ।
शक्तिक्षये सम्प्रति सम्प्रपन्ने
वृथैव कल्याणविधौ दुराशा ॥

चिरं समीपे भगवन् ! भवन्तं
स्थितं सुदूरस्थमवैमि मोहात् ।
हे दीनबन्धो ! दवयाशु मोहं
त्वां यावता सर्वगतं समीक्षे ॥

---

वर्त्तमाने वर्षे श्रीरामसीताचरणरजःपूते नासिकमहातीर्थे प्रवृत्तायां भारतीयजातीयमहासभायां भारतीयसमधिकजनसम्मत्या अध्यक्षपदमध्यासीनानां राजाषकल्पानां स्वदेशसेवाव्रतानां श्रीपुरुषोत्तमदासटान्डन-महोदयानाम्

## अभिभाषणसारः

शासनतन्त्रम्—भारतीयशासनतन्त्रानुसारेण भारतीयशासनव्यवस्था धर्मनिरपेक्षया भवितव्यं सर्वैरेव नागरिकैः समानाधिकारश्च भोक्तव्यः। एषा व्यवस्था भारतसम्बन्धिन्या विज्ञताया दूरदर्शितायाश्च परिचायिका। नास्मिन् विषये पाकिस्थानादस्माकं किमपि शिक्षणीयम् ।

हिन्दीभाषा—संस्कृतभाषायाः सुमहत् सांस्कृतिकमवदानं हिन्दीभाषाद्वारा समधिकं प्रकाशं गमिष्यति। पञ्चदशसंवत्सरकालातिक्रमात् पूर्वमेव च आङ्गलभाषायाः पदे हिन्दीभाषायाः प्रतिष्ठा कर्त्तव्या।

वैदेशिकनीतिः—शक्तिद्वयस्य मिथो विवदमानस्य एकत्र भारतस्य पक्षपातविरहः विश्वराष्ट्रस्थापनादर्शसंघटने महदानुकूल्यं करिष्यति। विश्वराष्ट्रप्रतिष्ठाया नैतिकपरिकरस्य सुतरामभावो दृश्यते। स्वार्थान्वेषिसमूहः पाकिस्थानं मित्रतया स्वपक्षे व्यापारयितुं यतते। तदेव भारतस्य निरपेक्षतया समवस्थानं प्रति बलवानन्तरायः। स्याद् वा भाविनि काले तादृशी काचिदवस्था, यया भारतेन तथाभूतस्य विरोधिशक्तिद्वयस्य एकत्र विशेषपक्षपातचिन्ता नूनं करणीया।

कमनूओयेल्थ्—भारतं साधारणतन्त्रराष्ट्रतया विघोषितमस्ति। तथापि कमनओयेल्थ इत्यस्यान्तर्गतेन तेन स्थातव्यमिति यत् प्रधानमन्त्रिणा सिद्धान्तः क्रियते, तेन प्रधानमन्त्रिणो लण्डनप्रत्यावर्त्तनात् परं मया तस्य साधुवादः प्रयुक्तः। सभापतेरद्यापि तदेवाभिमतम्।

एशिया—पाश्चात्यसाम्राज्यवादिनां शोषकाणां कवलात् अस्य महादेशस्य सम्मोचनं भारतस्यैव कर्त्तव्यकोटिमभिनिविशते।

कोरिया—कोरियास्थाने सम्प्रति सर्वापेक्षया समधिकविपत्तिजनिका आन्तर्जातिकपरिस्थितिरुद्भूता। इदानीं यावद् विवादक्षेत्रं सीमानियन्त्रितमास्ते। अस्मिन् विषये भारतराष्ट्राधिकारः समीचीनां नीतिमनुसृत्य प्रवर्त्तते।

शरणार्थिनामानुकूल्यम्—जातीयकरसंग्रहव्यवस्था सुतरामुपकाराय भविष्यतीति मन्यते। किन्तु राष्ट्राधिकारो यदि तस्य वास्तवतां न प्रतीयात्, तदा तेन वास्तुत्यागिनामानुकूल्याय समपेक्षितार्थसंग्रहार्थमन्यः कश्चन पन्था निर्द्धारयितव्यः।

पाकिस्थानम्—पाकिस्थानस्याक्रमणकारिराष्ट्रतया विघोषणार्थं राष्ट्रसङ्घसविधे यो निर्बन्धः समुपस्थापितस्तत्र भारतीयजनमतस्य विशेषतः

न निश्चितं जीवितमस्ति तादृग्
यथा भवे प्राणभृतां हि मृत्युः ।
तथापि नो विश्वसिमस्तदर्थे
नैवादरकं धर्म्यविधिं चरामः ॥
बाल्यं गतं क्रीड़नया समग्रं
कामेन तारुण्यमपेतमेवम् ।
शक्तिक्षये सम्प्रति सम्प्रपन्ने
वृथैव कल्याणविधौ दुराशा ॥
चिरं समीपे भगवन्! भवन्तं
स्थितं सुदूरस्थमवैमि मोहात् ।
हे दीनबन्धो ! दययाशु मोहं
त्वां यावता सर्वगतं समीक्षे ॥

---

वर्त्तमाने वर्षे श्रीरामसीताचरणरजःपूते नासिकमहातीर्थे प्रवृत्तायां भारतीयजातीयमहासभायां भारतीयसमधिकजनसम्मत्या अध्यक्षपदमध्यासीनानां राजाषकल्पानां स्वदेशसेवाव्रतानां श्रीपुरुषोत्तमदासटान्डन-महोदयानाम्

## अभिभाषणसारः

शासनतन्त्रम्—भारतीयशासनतन्त्रानुसारेण भारतीयशासनव्यवस्थया धर्मनिरपेक्षया भवितव्यं सर्वैरेव नागरिकैः समानाधिकारश्च भोक्तव्यः । एषा व्यवस्था भारतसम्बन्धिन्या विज्ञताया दूरदर्शितायाश्च परिचायिका । नास्मिन् विषये पाकिस्थानादस्माकं किमपि शिक्षणीयम् ।

हिन्दीभाषा—संस्कृतभाषायाः सुमहत् सांस्कृतिकमवदानं हिन्दीभाषा-द्वारा समधिकं प्रकाशं गमिष्यति। पञ्चदशसंवत्सरकालातिक्रमात् पूर्व-मेव च आङ्गलभाषायाः पदे हिन्दीभाषायाः प्रतिष्ठा कर्त्तव्या।

वैदेशिकनीतिः—शक्तिद्वयस्य मिथो विवदमानस्य एकत्र भारतस्य पक्षपातविरहः विश्वराष्ट्रस्थापनादर्शसंघटने महदानुकूल्यं करिष्यति। विश्वराष्ट्रप्रतिष्ठाया नैतिकपरिकरस्य सुतरामभावो दृश्यते। स्वार्थान्वेषि-समूहः पाकिस्थानं मित्रतया स्वपक्षे व्यापारयितुं यतते। तदेव भारतस्य निरपेक्षतया समवस्थानं प्रति बलवानन्तरायः। स्याद् वा भाविनि काले तादृशी काचिदवस्था, यया भारतेन तथाभूतस्य विरोधिशक्तिद्वयस्य एकत्र विशेषपक्षपातचिन्ता नूनं करणीया।

कमनओयेल्थ्—भारतं साधारणतन्त्रराष्ट्रतया विघोषितमस्ति। तथापि कमनओयेल्थ इत्यस्यान्तर्गतेन तेन स्थातव्यमिति यत् प्रधानमन्त्रिणा सिद्धान्तः क्रियते, तेन प्रधानमन्त्रिणो लण्डनप्रत्यावर्त्तनात् परं मया तस्य साधुवादः प्रयुक्तः। सभापतेरद्यापि तदेवाभिमतम्।

एशिया—पाश्चात्त्यसाम्राज्यवादिनां शोषकाणां कवलात् अस्य महादेशस्य सम्मोचनं भारतस्यैव कर्त्तव्यकोटिमभिनिविशते।

कोरिया—कोरियास्थाने सम्प्रति सर्वापेक्षया समधिकविपत्तिजनिका आन्तर्जातिकपरिस्थितिरुद्भूता। इदानीं यावद् विवादक्षेत्रं सीमा-नियन्त्रितमास्ते। अस्मिन् विषये भारतराष्ट्राधिकारः समीचीनां नीति-मनुसृत्य प्रवर्त्तते।

शरणार्थिनामानुकूल्यम्—जातीयकरसंग्रहव्यवस्था सुतरामुपका-राय भविष्यतीति मन्यते। किन्तु राष्ट्राधिकारो यदि तस्य वास्तवतां न प्रतीयात्, तदा तेन वास्तुत्यागिनामानुकूल्याय समपेक्षितार्थसंग्रहार्थमन्यः कश्चन पन्था निर्द्धारयितव्यः।

पाकिस्थानम्—पाकिस्थानस्याक्रमणकारिराष्ट्रतया विघोषणार्थं राष्ट्र-सङ्घसविधे यो निर्बन्धः समुपस्थापितस्तत्र भारतीयजनमतस्य विशेषतः

समर्थनमस्ति। राष्ट्रसङ्घेन कोरियाविषये यादृशी व्यवस्था परिगृहीता पाकिस्थानविषयेऽपि तादृशव्यवस्थापरिग्रह एव समुचित आसीत्।

भारतीयमाहम्मदसमाजः—नालमभूद् भारतं पाकिस्थानसृष्टिं प्रतिरोद्धुम्, किन्तु भारतीयराजनैतिकादर्शे माहम्मदेषु समाजान्तरेषु वा नास्ति स्थानं पक्षपातित्वस्य। हिन्दवः माहम्मदाः शिखा बौद्धा जैनाः पारसीका खृष्टीयाश्चेति सर्व एव समाजा मिथः सम्भूय वसेयुः एकस्या एव भारतीयजातेरंशतया च परिगणिता भवेयुः। एष एवादर्शो भारतस्य।

कृषीबलः श्रमजीवी च।—विगतवत्सरत्रयं यावत् भारतस्य अर्थनीतिदुरवस्थाप्रतीकाराय तथा कृषीबलानां श्रमजीविनाञ्च दुर्गतिनिवर्त्तनाय राष्ट्राधिकारेण यत् साहसमुद्यमश्च प्रदर्शिते, तेन सोऽयं साधुवादमर्हति।

नियन्त्रणव्यवस्था।—समाजप्रकृतौ नियमानुवर्त्तिताप्रवर्त्तनमावश्यकम्। तदिदं व्यष्टिगतस्वल्पासौकर्य्यसृष्टिद्वारेणैव साधनीयम्। यत्र यत्र गत्यन्तरं नास्ति, तत्र तत्रैव केवलं नियन्त्रणव्यवस्था प्रचलद्रूपा कर्त्तव्या।

सामाजिकी तथा वैषयिकी परिकल्पना।—यावत्सम्भवं पल्लीष्वेव सम्पदभिवृद्धौ शक्तिः प्रयोज्या। किन्तु महते खलु दुःखायेदं यत् जातीयमहासभासम्बन्धिराष्ट्राधिकारः खद्दरसमुत्पादने नोत्साहमाधत्ते। मन्मते पल्लीषु स्वतः सम्पूर्णतासम्पादने समवायमूलकृत्यपद्धतिप्रसारः सर्वाधिकं गुरुत्वं धत्त इति।

जातीयमहासभासङ्घटनम्।—जातीयमहासभाया मूलभूत आदर्शः सेवा नाम। सम्प्रति प्रभुत्वलाभस्योपायरूपेण सेयं महासभा व्यवह्रियते। अस्माभिरेवं व्यवस्था प्रवर्त्तयितव्या, यया जातीयमहासभायाः सुतरां सदस्यसंख्याह्रासेऽपि केवलं नैष्ठिकाः सत्यसेविन एव तस्याः सदस्यपदे लब्धाधिकारा भवेयुः। अनेनैवोपायेन केवलं जातीयमहासभायाः प्रभावस्याक्षुण्णता शक्या परिरक्षितुम्।

—

## माधुकरी

वङ्गीयानां वैशिष्ट्यम् ।—वङ्गीयेषु श्रीज्ञानदीपङ्करो नाम पण्डितो बौद्धधर्मप्रचाराय तिब्बतप्रदेशं जगाम। श्रीशीलभद्रो नाम विद्वन्मुकुटमणिः नालान्दाविश्वविद्यालयस्य अध्यक्षः समजनि।

वङ्गप्रदेशरत्नभूतः श्रीरघुनन्दनभट्टाचार्यो जीमूतवाहनानुगत्या समग्रप्राचीनस्मृतिशास्त्रादिकमालोच्य वङ्गेषु नव्यस्मृतिप्रतिष्ठामकरोत्। ततः प्रभृति तत्स्मृतिसम्प्रदाय एव वङ्गेषु पप्रथे।

वङ्गीयो विजयसिंहो नाम राजा स्वीयशौर्येण लङ्कां विजित्य तत्र स्वमाधिपत्यं प्रतिष्ठापयामास वङ्गगौरवञ्च समुज्ज्वलमकरोत।

स्वामी विवेकानन्दो नाम श्रीश्रीरामकृष्णानुगृहीतः प्रतीच्यदेशं गत्वा तत्र भारतीयसंस्कृतेस्तथा हिन्दुधर्मस्य महद् गौरवं सदर्पं प्रतिपाद्य वैदेशिकसभ्यसमाजस्यापि वर्त्तमाने काले भारतं प्रति महतीं श्रद्धामुद्बोधयामास। येन तत्रत्याः केचित् तदीयशिष्या अभूवन्, तत्र तत्र बहवः सेवाश्रमादयोऽपि प्रतिष्ठिता अद्यापि प्रचरद्रूपास्तदीयं महाप्रभावं विघोषयन्ति।

---

## छन्दोगक्रियासारः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः ]

वामदेव्यं गीत्वा गृहं प्रविशति (१४)। ततोऽच्छिद्रावधारणं विष्णुस्मरणञ्च कुर्यात। ततः पुत्रकामा पत्नी मध्यमं पिण्डं प्राश्नीयात्

---

१४। "आमा वाजस्य प्रसवो जगन्यादेमे द्यावापृथिवी विश्वरूपे आमागन्तां पितरा मातरा चामा सोमो अमृतत्वेन गम्यानित्यासीमान्तमनुव्रज्याभिवाद्य प्रदक्षिणीकृत्य वामदेव्यं गीत्वा प्रविशति॥" इति श्राद्धसूत्रम्। ४०। "केचित्—" पितरा मातरा युवमामा तोमो अमृतत्वाय गम्यात् इति पठति।

समर्थनमस्ति। राष्ट्रसङ्घेन कोरियाविषये यादृशी व्यवस्था परिगृहीता पाकिस्थानविषयेऽपि तादृशव्यवस्थापरिग्रह एव समुचित आसीत्।

भारतीयमाहम्मदसमाजः—नालमभूद् भारतं पाकिस्थानसृष्टिं प्रतिरोद्धुम्, किन्तु भारतीयराजनैतिकादर्शे माहम्मदेषु समाजान्तरेषु वा नास्ति स्थानं पक्षपातित्वस्य। हिन्दवः माहम्मदाः शिखा बौद्धा जैनाः पारसीका खृष्टीयाश्चेति सर्व एव समाजा मिथः सम्भूय वसेयुः एकस्या एव भारतीयजातेरंशतया च परिगणिता भवेयुः। एष एवादर्शो भारतस्य।

कृषीबलः श्रमजीवी च।—विगतवत्सरत्रयं यावत् भारतस्य अर्थनीतिदुरवस्थाप्रतीकाराय तथा कृषीबलानां श्रमजीविनाञ्च दुर्गतिनिवर्त्तनाय राष्ट्राधिकारेण यत् साहसमुद्यमश्च प्रदर्शिते, तेन सोऽयं साधुवादमर्हति।

नियन्त्रणव्यवस्था।—समाजप्रकृतौ नियमानुवर्त्तिताप्रवर्त्तनमावश्यकम्। तदिदं व्यष्टिगतस्वल्पासौकर्य्यसृष्टिद्वारेणैव साधनीयम्। यत्र यत्र गत्यन्तरं नास्ति, तत्र तत्रैव केवलं नियन्त्रणव्यवस्था प्रचलद्रूपा कर्त्तव्या।

सामाजिकी तथा वैषयिकी परिकल्पना।—यावत्सम्भवं पल्लीष्वेव सम्पदभिवृद्धौ शक्तिः प्रयोज्या। किन्तु महते खलु दुःखायेदं यत् जातीयमहासभासम्बन्धिराष्ट्राधिकारः खद्दरसमुत्पादने नोत्साहमाधत्ते। मन्मते पल्लीषु स्वतः सम्पूर्णतासम्पादने समवायमूलकृत्यपद्धतिप्रसारः सर्वाधिकं गुरुत्वं धत्त इति।

जातीयमहासभासङ्घटनम्।—जातीयमहासभाया मूलभूत आदर्शः सेवा नाम। सम्प्रति प्रभुत्वलाभस्योपायरूपेण सेयं महासभा व्यवह्रियते। अस्माभिरेवं व्यवस्था प्रवर्त्तयितव्या, यया जातीयमहासभायाः सुतरां सदस्यसंख्याह्रासेऽपि केवलं नैष्ठिकाः सत्यसेविन एव तस्याः सदस्यपदे लब्धाधिकारा भवेयुः। अनेनैवोपायेन केवलं जातीयमहासभायाः प्रभावस्याक्षुण्णता शक्या परिरक्षितुम्।

# माधुकरी

वङ्गीयानां वैशिष्ट्यम्।—वङ्गीयेषु श्रीज्ञानदीपङ्करो नाम पण्डितो बौद्धधर्मप्रचाराय तिब्बतप्रदेशं जगाम। श्रीशीलभद्रो नाम विद्वन्मुकुटमणिः नालान्दाविश्वविद्यालयस्य अध्यक्षः समजनि।

वङ्गप्रदेशरत्नभूतः श्रीरघुनन्दनभट्टाचार्यो जीमूतवाहनानुगत्या समग्रप्राचीनस्मृतिशास्त्रादिकमालोच्य वङ्गेषु नव्यस्मृतिप्रतिष्ठामकरोत्। ततः प्रभृति तत्स्मृतिसम्प्रदाय एव वङ्गेषु पप्रथे।

वङ्गीयो विजयसिंहो नाम राजा स्वीयशौर्येण लङ्कां विजित्य तत्र स्वमाधिपत्यं प्रतिष्ठापयामास वङ्गगौरवञ्च समुज्ज्वलमकरोत।

स्वामी विवेकानन्दो नाम श्रीश्रीरामकृष्णानुगृहीतः प्रतीच्यदेशं गत्वा तत्र भारतीयसंस्कृतेस्तथा हिन्दुधर्मस्य महद् गौरवं सदर्पं प्रतिपाद्य वैदेशिकसभ्यसमाजस्यापि वर्त्तमाने काले भारतं प्रति महतीं श्रद्धामुद्बोधयामास। येन तत्रत्याः केचित् तदीयशिष्या अभूवन्, तत्र तत्र बहवः सेवाश्रमादयोऽपि प्रतिष्ठिता अद्यापि प्रचरद्रूपास्तदीयं महाप्रभावं विघोषयन्ति।

---

## छन्दोगक्रियासारः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः ]

वामदेव्यं गीत्वा गृहं प्रविशति (१४)। ततोऽच्छिद्रावधारणं विष्णुस्मरणञ्च कुर्यात्। ततः पुत्रकामा पत्नी मध्यमं पिण्डं प्राश्नीयात्

---

१४। "आमा वाजस्य प्रसवो जगन्यादेमे द्यावापृथिवी विश्वरूपे आमागन्तां पितरा मातरा चामा सोमो अमृतत्वेन गम्यानित्यासीमान्तमनुव्रज्याभिवाद्य प्रदक्षिणीकृत्य वामदेव्यं गीत्वा प्रविशति॥" इति श्राद्धसूत्रम्। ४०। "केचित्—" पितरा मातरा युवमामा तोमो अमृतत्वाय गम्यात् इति पठति।

समर्थनमस्ति। राष्ट्रसङ्घेन कोरियाविषये यादृशी व्यवस्था परिगृहीता पाकिस्थानविषयेऽपि तादृशव्यवस्थापरिग्रह एव समुचित आसीत्।

भारतीयमाहम्मदसमाजः—नालमभूद् भारतं पाकिस्थानसृष्टिं प्रतिरोद्धुम्, किन्तु भारतीयराजनैतिकादर्शे माहम्मदेषु समाजान्तरेषु वा नास्ति स्थानं पक्षपातित्वस्य। हिन्दवः माहम्मदाः शिखा बौद्धा जैनाः पारसीका खृष्टीयाश्चेति सर्व एव समाजा मिथः सम्भूय वसेयुः एकस्या एव भारतीयजातेरंशतया च परिगणिता भवेयुः। एष एवादर्शो भारतस्य।

कृषीबलः श्रमजीवी च।—विगतवत्सरत्रयं यावत् भारतस्य अर्थनीतिदुरवस्थाप्रतीकाराय तथा कृषीबलानां श्रमजीविनाञ्च दुर्गतिनिवर्त्तनाय राष्ट्राधिकारेण यत् साहसमुद्यमश्च प्रदर्शिते, तेन सोऽयं साधुवादमर्हति।

नियन्त्रणव्यवस्था।—समाजप्रकृतौ नियमानुवर्त्तिताप्रवर्त्तनमावश्यकम्। तदिदं व्यष्टिगतस्वल्पासौकर्य्यसृष्टिद्वारेणैव साधनीयम्। यत्र यत्र गत्यन्तरं नास्ति, तत्र तत्रैव केवलं नियन्त्रणव्यवस्था प्रचलद्रूपा कर्त्तव्या।

सामाजिकी तथा वैषयिकी परिकल्पना।—यावत्सम्भवं पल्लीष्वेव सम्पदभिवृद्धौ शक्तिः प्रयोज्या। किन्तु महते खलु दुःखायेदं यत् जातीयमहासभासम्बन्धिराष्ट्राधिकारः खद्दरसमुत्पादने नोत्साहमाधत्ते। मन्मते पल्लीषु स्वतः सम्पूर्णतासम्पादने समवायमूलकृत्यपद्धतिप्रसारः सर्वाधिकं गुरुत्वं धत्त इति।

जातीयमहासभासङ्घटनम्।—जातीयमहासभाया मूलभूत आदर्शः सेवा नाम। सम्प्रति प्रभुत्वलाभस्योपायरूपेण सेयं महासभा व्यवह्रियते। अस्माभिरेवं व्यवस्था प्रवर्त्तयितव्या, यया जातीयमहासभायाः सुतरां सदस्यसंख्याह्रासेऽपि केवलं नैष्ठिकाः सत्यसेविन एव तस्याः सदस्यपदे लब्धाधिकारा भवेयुः। अनेनैवोपायेन केवलं जातीयमहासभायाः प्रभावस्याक्षुण्णता शक्या परिरक्षितुम्।

# माधुकरी

वङ्गीयानां वैशिष्ट्यम् ।—वङ्गीयेषु श्रीज्ञानदीपङ्करो नाम पण्डितो बौद्धधर्मप्रचाराय तिब्बतप्रदेशं जगाम। श्रीशीलभद्रो नाम विद्वन्मुकुटमणिः नालान्दाविश्वविद्यालयस्य अध्यक्षः समजनि।

वङ्गप्रदेशरत्नभूतः श्रीरघुनन्दनभट्टाचार्यो जीमूतवाहनानुगत्या समग्रप्राचीनस्मृतिशास्त्रादिकमालोच्य वङ्गेषु नव्यस्मृतिप्रतिष्ठामकरोत्। ततः प्रभृति तत्स्मृतिसम्प्रदाय एव वङ्गेषु पप्रथे।

वङ्गीयो विजयसिंहो नाम राजा स्वीयशौर्येण लङ्कां विजित्य तत्र स्वमाधिपत्यं प्रतिष्ठापयामास वङ्गगौरवञ्च समुज्ज्वलमकरोत।

स्वामी विवेकानन्दो नाम श्रीश्रीरामकृष्णानुगृहीतः प्रतीच्यदेशं गत्वा तत्र भारतीयसंस्कृतेस्तथा हिन्दुधर्मस्य महद्गौरवं सदर्पं प्रतिपाद्य वैदेशिकसभ्यसमाजस्यापि वर्त्तमाने काले भारतं प्रति महतीं श्रद्धामुद्दीपयामास। येन तत्रत्याः केचित् तदीयशिष्या अभूवन्, तत्र तत्र बहवः सेवाश्रमादयोऽपि प्रतिष्ठिता अद्यापि प्रचरद्रूपास्तदीयं महाप्रभावं विघोषयन्ति।

---

## छन्दोगक्रियासारः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः ]

वामदेव्यं गीत्वा गृहं प्रविशति (१४)। ततोऽच्छिद्रावधारणं विष्णुस्मरणञ्च कुर्यात्। ततः पुत्रकामा पत्नी मध्यमं पिण्डं प्राश्नीयात्

---

१४। "आमा वाजस्य प्रसवो जगन्यादेमे द्यावापृथिवी विश्वरूपे आमागन्तां पितरा मातरा चामा सोमो अमृतत्वेन गम्यान्नित्यासीमान्तमनुव्रज्याभिवाद्य प्रदक्षिणीकृत्य वामदेव्यं गीत्वा प्रविशति॥" इति श्राद्धसूत्रम्। ४०। "केचित्—" पितरा मातरा युवमामा तोमो अमृतत्वाय गम्यात् इति पठति।

(१५)। भोजनकाले श्राद्धशेषं भुञ्जीत (१६)। ततः पात्रप्रक्षालनम् (१७)। पिण्डान् जले अग्नौ वा क्षिपेत्। ब्राह्मणाय गवे वा दद्यात् १८। श्राद्धदिने श्राद्धोत्तरकाले श्राद्धशेषेण वलिवैश्वदेवौ कर्तव्यौ।

---

१५। "मध्यमं पिण्डं पत्नी पुत्रकामा प्राश्नीयादादत्त पितरो गर्भमिति।" इनि गृह्यसूत्रम्।

१६। "यो वा तेषां ब्राह्मणानामुच्छिष्टभाक् स्यात्।" इति गृह्यसूत्रम्।

१७। "द्वन्द्वं पात्राणि प्रक्षाल्य प्रत्यतिहारयेत्।" इति गृह्यसूत्रम्।

१८। "अप्सु पिण्डान् सादयेत्।" इति प्रणीते वाऽग्नौ। इति ब्राह्मणं वा भोजयेत्। इति गवे वा दद्यात्। इति गृह्यसूत्राणि। ३१।३२।३३।३४।

---

## वृत्तवर्त्तिका

श्रीरामसीतालक्ष्मणानां पवित्रचरणरजःपूते नासिकमहातीर्थे भारतीयजातीयमहासभायाः षट्पञ्चाशत्तममधिवेशनं महता समारम्भेण सेप्टेम्बरमासस्य विंशदिवसे समारब्धम्। महता प्राकृतिकविपर्ययेण तत्र समवेतानां नानादिग्देशागतानां स्वदेशसेवाव्रतानां जनसङ्घानां सत्यपि महत्यसौकर्ये सभाकृत्यनिर्वहणादौ महानुत्साहः संलक्ष्यते। विगताधिवेशनसभापतीनां पट्टभीश्रीसीतारामियामहोदयानां स्थाने भारतीयसमधिकजनसम्मत्या आकृत्या च प्रकृत्या च राजर्षिकल्पा स्वदेशसेवार्थं बहुविधविपत्पातसहा अभिजातशिरोमणयः श्रीपुरुषोत्तमदासटाण्डनमहोदयाः सभापतिपदमलङ्कुर्वन्ति। तेषामभिभाषणं नितरामनर्घमपि

पत्रिकाया अस्याः स्वल्पकायतया साकल्येन प्रकाशयितुमशक्यमिति तदीयः संक्षिप्तः सारोऽस्यामेव पत्रिकासंख्यायामस्माभिः प्रकाश्यते ।

माननीयपट्टभीश्रीसीतारामियामहोदयानां विगताधिवेशनसभापतीनां स्वपदपरित्यागावसरोपहृतेनाभिभाषणेन यद्यपि वयं भाविक्षेमप्रत्याशाहतास्तथापि स्वदेशसेवाव्रते दृढ़व्यवसायिनां व्यतीतसंख्यातिगकृत्यकलापैः सुविदितस्वातन्त्र्याणां माननीयटाण्डनमहोदयानां वैयक्तिकप्रभावप्रत्ययेनैव महतीं कल्याणप्रत्याशां वहामः । सर्वनियन्ता श्रीभगवानमीषां सुदीर्घमनामयमायुः कर्मशक्तिमकुण्ठितां स्वदेशसेवाव्रते सुदृढ़व्यवसायमात्मतन्त्रतयैव च कृत्यकलापाध्यवसायमनारतं विधेयादिति ।

पश्चिमवङ्गसंस्कृतमहासम्मेलनम्—

वर्त्तमानभाद्रपदस्य त्रयोविंशदिवसे चतुर्विंशदिवसे च 'हाओड़ा टाउनहल्' इत्याख्य हाओड़ाप्रदेशीयपौरसभाभवने कलिकाताराष्ट्रीयसंस्कृतमहाविद्यालयाध्यक्षाणां माननीयश्रीयुक्त-सदानन्दभादुड़ीएम्-ए-पि एइच् डि महोदयानां प्रधानाध्यक्ष्येण हाओड़ासंस्कृतसाहित्यसमाजेन विशेषतः कृतप्रबन्धं पश्चिमवङ्गसंस्कृतमहासम्मेलनस्य महता समारम्भेणाधिवेशनं समजनि । तत्र सुयोग्यानां विभागीयाध्यक्षाणामाध्यक्ष्येण विभागीयशास्त्रतत्त्वेषु सुनिष्णातानां तत्त्वव्याख्यातॄणां समन्वयेन विभिन्नशास्त्रतत्त्वेषु रसिकानां श्रद्धावतां नानादिग्देशागतानां सामाजिकानां समवायेन च सम्मेलनस्य सर्वथा साफल्यमन्वभूयत । तत्रापि प्राच्यसंस्कृतौ निरतिशयश्रद्धाशालिनां हाओड़ाप्रदेशवास्तव्यानां धनिकादिवैषयिकसमाजानामेव महानुत्साहो बीजमिति त एते सुतरां परितुष्टेन चेतसास्माभिरभिनन्द्यन्ते ।

द्वितीयदिवसे समाप्ते प्रधानसभाकृत्यनिवहे मुख्यसभापतिभिरतिगभीरार्थं ललितभाषामयं महदभिभाषणं वाचितम् । यत्र संस्कृतस्य प्राचीनसमृद्धिः वर्त्तमानदुरवस्था तत्प्रतीकारोपायाः राष्ट्रभाषादि-

विचारः सामाजिकानां संस्कृतसमुन्नतये कर्त्तव्योपदेशादिकञ्च सुस्पष्ट-मात्मलाभमकुर्वन्। अथ माननीयपश्चिमवङ्गराष्ट्रपालानां डाः श्रीकैलास-नाथकाट्जु महोदयानामाध्यक्ष्येण हाओड़ा-संस्कृतसाहित्यसमाजस्य वार्षिक महोत्सवः प्रावर्तिष्ट। तत्र प्रथमतो नियमेन सभापतिवरणादिक्रियानन्तरं राष्ट्रपालेन सभाध्यक्षमहोदयेन हिन्दीभाषया वितीर्णमभिभाषणम्। यत्र संस्कृतविद्यायाः सुमहद् गौरवं तथा संस्कृतभाषाया अनायासेन शिक्षणार्थं भूरिप्रचारार्थञ्च मार्गो विनिर्दिष्टस्तदर्थं समितिसङ्घटनप्रस्तावश्च समुप-स्थापितः। महोत्सवसभाया अन्ते समाजसदस्यैः कालिदासकृताभि-ज्ञानशकुन्तलस्य समयलाघवार्थं लघूकृतस्य सुष्ठु प्रयोगेण नानादिग्-देशागताः समुत्साहवन्तः सामाजिकाः सुसन्तर्पिताः। अभिनयात् पूर्व-मेव सभापतिसाधुवादविघोषणानन्तरं सभा समाप्ता।

हिन्दीभाषा—पश्चिमवङ्गराष्ट्राधिकारेण पश्चिमवङ्गराष्ट्रान्तर्गतेषु सर्वेषु माध्यमिकविद्यालयेषु प्रधानशिक्षकाणां समीपे एवं निर्देशो दत्तः, यत् आगामिवर्षारम्भात् प्रभृति पञ्चमश्रेण्यां षष्ठश्रेण्याञ्च हिन्दीभाषाया अवश्यपाठव्यवस्था कर्त्तव्येति। हिन्दीभाषायाः शिक्षाप्रदानाय सुयोग्य-शिक्षकलाभे सति परवर्त्तिसंवत्सरात् प्रभृति उच्चतरश्रेणीष्वपि हिन्दी पाठनं प्रवर्त्तयितव्यमिति।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1949)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14 ; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2-8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada. Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

---

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learned editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. No. 6.
३३श-वर्षस्य
६ष्ठ-संख्या

October 1950
१८७२-शकीये
आश्विने
मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषद्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६).
Foreign price—14s

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामबाजार

कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIII. No. 6. | १८७२-शकीये आश्विने ३३श-वर्षस्य ६ष्ठ-संख्या | October 1950.


## श्रीश्रीदुर्गामङ्गलम्

देवी दुर्गतिदारिणी भगवती भीमा भयध्वंसिनी
दुष्टोत्पातविमर्द्दिनी स्थितिभृतां सर्वार्थसन्दायिनी ।
कैलासाचलचारिणी करुणया काले धरागामिनी
भव्यायास्तु भवप्रिया प्रतिपदं त्रैलोक्यसन्धारिणी ॥१॥

हेरम्बं भवविघ्नराशिहरणे सैषा नियुङ्क्ते सदा
स्कन्दं शत्रुनिवर्हणे तनुभृतां शक्तेस्तथा साधने ।
वाणीं वाङ्मयकौशलप्रणयने शास्त्रार्थसन्धारणे
दीनानामसमा गतिर्भगवती कात्यायनी शाश्वती ॥२॥

आदौ सा सुरथेन मेधसमुनेरादेशतः पूजिता
वैश्येनापि समाधिना हितकृते कृत्वाकृतिं मृन्मयीम् ।
तेनाभूत् सुरथो मनोरथवशात् सावर्णिनामा मनुः
प्राप्तश्चापि समाधिना बहुमतं ज्ञानं चिरान्मुक्तये ॥३॥

लङ्काधीश्वररावणक्षयकृते त्रेतायुगे तत्परं
श्रीरामेण समुद्रसैकतगता कात्यायनी पूजिता ।
पौरोहित्यमधत्त यत्र विबुधश्रेष्ठो विरिञ्चिः स्वयं
यातो येन यमक्षयं रिपुरसौ युद्धे नवम्यां तिथौ ॥४॥

कृत्वा शैलसुतार्च्चनं यतहृदा हत्वा तथा रावणं
श्रीरामो विजयोत्सवं परिजनैश्चक्रे दशम्यां तिथौ ।
तस्मादुत्तरमेव देवमनुजैः सम्पूज्यते पार्वती
सर्वत्र प्रतिवत्सरं भगवती सर्वार्थसंसिद्धये ॥५॥

सा देवी समुपास्यते नरगणैर्वारद्वयं वत्सरे
श्रीपूर्णे शरदागमे नवरुचा कान्ते वसन्ते तथा ।
विस्तारं समधत्त शारदमहो यद्यप्यकाले कृतः
साक्षात्तत्र फलेक्षणात् फलजुषां हेतुः प्रवृत्तौ फलम् ॥६॥

कृत्वा दैवतसुप्तिमोहसमये मन्त्रैः शुभं बोधनं
पुण्ये श्रीफलपादपे सुरचिते रूपे तथा मृन्मये ।
पूजापद्धतिदिष्टमन्त्रविहितैः प्राणप्रतिष्ठामुखैः
कृत्यैश्चिन्मयता जडस्य मनुजैः साध्या लसद्भक्तिभिः ॥७॥

सैषा बोधनमन्त्रतन्त्रविधिना कात्यायनी बोधिता
गन्धाद्यैरधिवासिता प्रियपदैर्मन्त्रैस्तथामन्त्रिता ।
नानाकल्पनियन्त्रिता गिरिसुता ध्याता समभ्यर्चिता
स्वैरङ्गैः परिवेष्टिता वितरतु क्षेमं सदा प्रार्थिता ॥८॥

## नवसूक्तमालिका

सौजन्यमन्येषु कुरुष्व नित्यं विहाय दौर्जन्यविधिं दुरन्तम्।
येनापरे त्वय्यपि साधुवृत्ता वाढं भविष्यन्ति हिते प्रवृत्ताः ॥
यत्नेन पुष्टा जलसेचनाद्यैः फलैः प्रसूनैरपि शाखिसङ्घाः।
सम्भावयन्ति स्वत एव लोकान् सार्वत्रिकी रीतिरियं जगत्याम् ॥
परेषु वाचं परुषां वदन्तो वृथैव वाञ्छन्ति जनाः सुवाचम्।
पदाहतश्चेद् भुजगो जनेन स तं दशत्येव विना विलम्बम् ॥

---

## मासप्रकृतिः

यस्मिन् मासे अश्विनीनक्षत्रे पूर्णिमाया अन्तो भवति, स चान्द्र आश्विन इत्याख्यायते। सूर्यस्य कन्याराशिस्थितिकाल एव तस्य सम्भवात् स कालः सौराश्विनसंज्ञां भजते। अस्मिन् मासे संस्कार-कर्मसम्बन्धिसङ्कल्पवाक्येषु 'आश्विने मासि कन्याराशिस्थे भास्करे' इत्येवं माससमुल्लेखः कार्यः। अस्य मासस्य सौरदिनगणनया नवम-दिवसे पितृलोकमुद्दिश्य श्राद्धानुकल्पतिलतर्पणप्रारम्भः ; यस्य महालया-मावास्यायां परिसमाप्तिः। अष्टादशदिवसे कृष्णायां नवम्यां नवम्यादि-कल्पारम्भो देव्या बोधनञ्च। तन्मते ततः प्रारभ्य शुक्लां दशमीं यावत् प्रतिदिनं देव्याः कात्यायन्याः पूजा सप्तशतीस्तोत्रपाठश्च। तदुक्तम्, 'आरभ्य तस्यां दशमीञ्च यावत् प्रपूजयेत् पर्वतराजपुत्रीम्' इति। तथा, 'शरत्काले महापूजा क्रियते या च वार्षिकी। तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः। सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः। मनुष्यो मत्प्रसादेन भविष्यति न संशयः।' इति।

अस्य चतुर्विंशे दिवसे महालयापार्वणश्राद्धम्। अशक्तानां पितृ-लोकस्वर्गकामनया भोज्यादिदानम्। पञ्चविंशदिवसे प्रतिपदादिकल्पा-रम्भो नवरात्रिकव्रतारम्भश्च। अस्य नवरात्रिकव्रतस्य वङ्गेतरेषु देशेषु

भूयान् प्रचारः। ये प्रतिपदादिकल्पमनुवर्त्तन्ते तेषां ततः प्रभृत्येव सप्तशतीस्तोत्रपाठः प्रत्यहं नवमीं यावत्। एकोनत्रिंशद्दिवसे षष्ठ्यादिकल्पारम्भः सायं देव्या बोधनम् आमन्त्रणाधिवासौ च। त्रिंशे दिवसे भगवत्याः श्रीदुर्गायाः शारदपूजारम्भः सप्तम्यादिकल्पारम्भश्च।

अस्मिन् मासे जातो जनो राजप्रियः काव्यनृत्यसङ्गीतकुशलः कुशाग्रबुद्धिर्दानशीलो माननीयो भक्तिमांश्च।

मेषकर्कटवृश्चिकधनूराशिषु जातानां रविशुद्धिः, त्रयोदशदिवसादुत्तरञ्च मेषवृषकर्कटसिंहवृश्चिकधनुर्मकरराशिषु जातानाम्। गुरुशुद्धिस्तु मेषमिथुनसिंहतुलामकरराशिषु समुत्पन्नानाम्।

एष शरत्समयः। अस्मिन् काले शरीरे पित्तवृद्धिर्जायते। तदनुसारेण पित्तोपशमसाधनवस्तुव्यवहारादिकं कार्यम्।

---

प्रतिवर्षमेव वसन्त तथा
सपरिवारा भगवती कात्यायनी
को विशेष इति प्रश्नस्योत्तरमाह

शृणु राजन् प्रवक्ष्या
शरत्काले विशेषेण
वसन्ते च प्रकर्त्तव्यं
द्वावृतू यमदंष्ट्राख्यौ
शरद्वसन्तनामानौ
तस्माद् यत्नादिदं
द्वावेव सुमहाघोरावृ
वसन्तशरदावेव ज

तस्मादत्र प्रकर्त्तव्यं चण्डिकापूजनं बुधैः।
चैत्रे शिवने शुभे मासे भक्तिपूर्वं नराधिप ॥ इति ।

वयन्तु तत्र तमेव हेतुं न पर्याप्तं मन्यामहे। न हि कालान्तरेऽपि न वयमिदानीमामयमुदित्वरं पश्यामः। तदुक्तहेतुमुपादाय कात्यायनी-पूजायाः कालनिर्णये कर्त्तव्ये प्राप्तं तत्र कालान्तरमपि।

तदत्र कारणान्तरमप्यनुसन्धेयम्। तदत्र वयं ब्रूमो यथा,—

ऋतूनां परमोत्कृष्टौ वसन्तशरदावृतू।
प्रकृतिस्तत्र शोभाढ्या पत्रपुष्पफलादिभिः ॥
पूजायामुपयुज्यन्ते पत्रपुष्पफलादयः।
उपचारा विशेषेण न तु कालान्तरे तथा ॥
दीना एवाधिका लोके मातृभक्ता विशेषतः।
पूजोपकरणं तेषां पत्रपुष्पफलादिकम् ॥
धनिकोचितसम्भार-संग्रहस्तैः सुदुष्करः।
तस्मात्तत्रैव पूजाया विधानं विनियन्त्रितम् ॥

किञ्चानेन फलान्तरमपि निष्पन्नम्। तथाहि ;—

दक्षिणोत्तरभेदेन वर्षे स्यादयनद्वयम्।
वर्षमेकमहोरात्रो देवानां परिमाणतः ॥
अयनं दक्षिणं रात्रिरहः स्यादुत्तरायणम्।
देवानामात्मवत् सेवा कर्त्तव्येति विधानतः।
पूजा दिने तथा रात्रौ देवानामुचिता यतः।
दक्षिणायनवर्त्तिन्यां रात्रौ शरदि पूजनम्।
उत्तरायणगे तद्वद् वसन्ते दैवते दिने ॥
वर्षार्द्धमाश्विनो मासो वैशाखाद् वत्सरादितः।
कार्त्तिकादथ चैत्रः स्यात् समः कालस्ततो द्वयोः ॥

# ब्रह्मसूत्र-मितभाष्यम्

( जन्माद्यस्य यतः )

[ निबन्धकः—श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तम् )

न च विश्वं सदसद्भिन्नं सत्त्वेनाबाधितप्रत्ययात्। नाशात् परं च भवत्यसत् कालभेदेनाविरोधात्, न च सत्यत्वे ब्रह्मवत् सदानन्तत्वापत्तिः, अनित्यत्वात् 'अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यमि'ति श्रुतेः, अनित्यैर्हविरादिभिर्द्रव्यैर्नित्यं ब्रह्म प्राप्तवानस्मीत्यर्थः। 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व मामि'ति स्मृतेरुपलब्धेश्च। न च मिथ्याभूतैर्द्रव्यैरिति क्वचिदप्युक्तम्। 'सच्च त्यच्चाभवत्' 'ततो वै सदजायत' 'कथमसतः सज्जायेत' 'अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्' इत्यादिश्रुतिषु जगतः सत्यत्वाभिधानात्, सत्यम् भूतपञ्चकम्। तथाच कारणं त्रिकालवृत्ति, कार्य्यं तु वर्त्तमानकालिकमिति विशेषः। तस्मात् 'मृत्तिकेत्येव सत्यमित्युक्तम्; सत्यं त्रिकालवृत्ति गौणनित्यमिति यावत्। अन्यथाऽधिष्ठानमृत्तिकाज्ञानाद् घटो विलीयेत, व्यवहारिकत्वात् न तथेति चेत्, तर्हि मृत्तिकेत्येव सत्यमिति व्यर्थं, दृष्टतत्त्वानामपि शुकव्यासादीनां यथायथव्यवहारदर्शनाच्च। न च व्यवहरन्नपि मिथ्येति मन्यमानो न श्रद्धत्ते इति वाच्यं, जातायां बुभुक्षायामन्नादावेव प्रवृत्तिदर्शनात्, न मृदादौ, कृते च भोजने स्वस्थतादर्शनाच्च। वशिष्ठश्च ज्ञानी शोकात् रोरुद्यमानः आत्मघातार्थं प्रवृत्तः, व्यासश्च सुतविरहशोकात् रोरुद्यमानस्तदनु चलितस्तथापि न श्रद्धत्ते इति बालभाषितम्। पित्ताक्रान्तश्च तिक्तार्थी प्रवर्त्तते निम्बे, न गुडे। न च ब्रह्मैव सत्यमिति श्रुतिराह। न च तात्त्विकव्यवहारिकप्रातिभासिकभेदेन वस्तुत्रैविध्यं, बुद्धोच्छिष्टं च तत्। तथाहि बोधिचर्य्यावतारपञ्जिकायां तथ्यमिथ्याभेदेन संवृतद्वैविध्यमुक्तम्। अदुष्टेन्द्रियजातं तथ्यसंवृतिर्दुष्टेन्द्रियजातं च मिथ्यासंवृतिरिति। तदुक्तं—

विनोपघातेन यदिन्द्रियाणां षण्णामपि ग्राह्यमवैति लोकः।

सत्यं हि तल्लोकत एव शेषं विकल्पितं लोकत एव मिथ्या" ॥ इति,

इतरच्च परमार्थसत्यं बुद्ध्यतीतं शून्यं मन्यन्ते। तदप्युक्तं ;—

"संवृतिः परमार्थं च सत्यद्वयमिदं मतम्।
बुद्धेरगोचरस्तत्त्वं बुद्धिः संवृतिरुच्यते" ॥ इति।

नागार्जुनकारिकाव्याख्यायां चन्द्रकीर्त्तिनाप्युक्तम् ;—

"प्रमाणभूतं व्यवहारसत्यं प्रमेयभूतं परमार्थसत्यम्" इति।

यां च बौद्धैर्मिथ्यासंवृतिरुच्यते, सैवोच्यते मायिकैः प्रातिभासिकीति। तदिदं सुष्ठूक्तं—"मायावादमसच्छास्त्रं, प्रच्छन्नं बौद्धमुच्यते" इति। नैव वदन्ति वेदान्ता, ब्रह्मजगतोर्द्वयोरेव सत्यत्वाम्नानात् नित्यानित्यभेदेन च भेदात्। रज्जुसर्पादयश्च तुच्छा एव ज्ञानमात्रस्वरूपत्वात्, तत एव स्वप्नवत् भयकम्पाद्युत्पत्तेः कृतं विषयस्वीकारेण, विसंवादे दोषसमवहितात् कुप्रकारणात् जायते विपर्यासप्रत्यय इत्युक्तम्। रज्जुसर्पखपुष्पयोस्तुच्छत्वाविशेषेऽपि दृष्टपूर्वत्वात् सर्पस्य बाधाभावाच्च प्रत्यक्षं, न खपुष्पस्यातथात्वात्। अतएव वस्तुसतोऽप्यदृष्टपूर्वस्य न भ्रमः, तस्मात् बाधकाले नात्र सर्पो दृष्टः, किन्तु रज्जुरेव सर्पत्वेन प्रत्यभात्, न वा प्रातिभासिकः सर्पो जातः, स इदानीं विनष्ट इति व्यवहारः। निर्दोषत्वादस्य प्राबल्याच्च, रज्जुसर्पादेस्तुच्छत्वात् सर्पकार्य्यं न दंशगत्यादि किन्तु प्रतीतिमात्रत्वात् तत्कार्य्यं भयकम्पाद्येवेति बोध्यम्। न चासौ मायाकार्य्यः, तथात्वे न नियमेन सदृशं रज्ज्वाद्यपेक्षेत मायायास्तदपेक्षाभावादित्युक्तं, भवति च भ्रमः सदृश एव रज्ज्वादाविति तत् निमित्तमात्रमिति। एतेन तद्दृष्टान्तेन जगतो वेदस्यापि मिथ्यात्वकल्पनं हेयम्; उभयसम्मतस्यैव दृष्टान्तत्वात्। तथा च पारमर्षं सूत्रं "लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त" इति। "यथा यमर्थं लौकिका बुध्यन्ते, तथा परीक्षका अपि, सोऽर्थो दृष्टान्तः। दृष्टान्तविरोधेन च प्रतिपक्षाः प्रतिषेद्धव्या भवन्ति"। इति च प्रामाणिकाः। अतः सर्वे लौकिकाः परीक्षका वेदान्ताश्च पारमार्थिकसत्यतामेव जगतो वदन्ति। जगन्मिथ्यादुराग्रहैर्बौद्धैरेव मिथ्यात्वानुमानदृष्टान्तार्थं कल्पिता रज्जुसर्पालातचक्रादयः। तथाहि—

"अलातचक्रनिर्वाणस्वप्नमायाम्बुचन्द्रकैः ।
धूमिकान्तप्रतिश्रुत्कामरीच्यद्भिः समो भवः" ॥

इति, नातः शुक्तिरूप्यरज्जुसर्पादीनां नामाप्युपलभ्यते प्रस्थानत्रिके, उपलभ्यन्ते च भूम्यौषधिक्षीरदध्यादयो विकारदृष्टान्ताः श्रुतिसूत्रयोः ;— "यथा भूमेरोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्" इति श्रुतिः, 'क्षीरवद्धीति सूत्रं च, न चैते रज्जुसर्पादिसाम्यं भजन्ते ।

नचात्मज्ञाने विश्वप्रलयो मानाभावात । नच "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येदि"ति श्रुतेस्तत्त्वज्ञानदशायां प्रलय एवेति वाच्यं, कुत इति चेत्, शृणु, मैत्रेयीमात्मतत्त्वमुपदिशता याज्ञवल्क्येनोक्तं, यथा सैन्धवखण्डो जलक्षिप्तो जलेनैकीभवति, अदृश्यमानोऽपि तत्रैव वर्तते तथा सर्वव्यापी परमात्मापि महाभूतैः पञ्चभिरेकीभूत एव स्थितो महाभूतेभ्यः शरीरैः सहोत्पद्य तैः सह विनश्यति । अनुः सहार्थे । किन्तु तस्य प्रेत्यसंज्ञा नास्ति, प्रेत्य एव मृत इति नाम न भवति न म्रियते इति यावत् । नचास्य ज्ञानिपक्षे व्याख्यानं युक्तं, ज्ञानिनां जन्मान्तराभावात् ल्यबन्तप्रेत्यशब्दस्य जन्मान्तरपरत्वात्, 'प्रेत्यामुत्र भवान्तरे' इति कोषात्, विनश्यतीति न प्रेत्य संज्ञास्तीति विरुद्धं मत्वा मैत्रेय्याभिहितं, 'मा भगवानमूमुहत्' 'न वा अहमिमं विजानामी'ति अत्रोत्तरमुक्तं, "न वा अहं मोहं ब्रवीमि, अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा" "अलं वा अरे इदं विज्ञानाय" आत्मनोऽमृतत्वमेव विज्ञानाय पर्याप्तमित्यर्थः । अतो 'भूतेभ्यः समुत्थाय तान्येवानु विनश्यतीति' उत्पन्नविनष्टवद् व्यपदिष्टो भवतीत्यर्थो वाच्यः । तत्र जलनिक्षिप्तसैन्धवखिल्यवत् यद्यात्मा सर्वानुगतो नित्य एव तर्हि केनापीन्द्रियेण किमिति न ज्ञायते इति प्रश्ने आत्मन इन्द्रियायोग्यत्वमेव हेतुं दर्शयितुमाह यत्र हीति, यत्र सृष्ट्युत्तरकाले, नत्वविद्यावस्थायां, यत्र त्वस्य सर्वमात्मैवाभूदित्यस्य विद्यावस्थापरत्वस्य प्रतिवक्ष्यमाणत्वात् । द्वैतमिवेति ब्रह्मजगतोरुपादानोपादेयभावाद् वस्तुतोऽद्वैत-

त्वेऽपि द्वैतवद् भासमानत्वात् द्वैतमिव भवति विश्वमित्यर्थः, हिः प्रसिद्धौ, तत्र तस्मिन् काले इतरः संसारो जीव इतरं स्वभिन्नमाघ्रेयं विषयं घ्राणेन जिघ्रति, एवमुत्तरत्र। तथाच स्थितिकाले जीवो गन्धादिविषयमेवानुभवति, न तु सर्वव्यापिनमात्मानं कर्ममालिन्याद् बुद्धेरिति भावः। तर्हि प्रलये पश्यतु, तत्राह ;—यत्रेति। यदा प्रलयकाले अस्याङ्गुलिनिर्दिष्टस्य परिदृश्यमानस्य जगतः सर्वं प्रपञ्चजातम् आत्मैवाभूत्, कारणब्रह्मात्मना संपद्यते, वैदिके नये लङ्लुङ्लिटां सर्वकालिकत्वात्, तत् तदा केन इन्द्रियेण कमाघ्रेयं जिघ्रेदित्यादि। तदानीं विषयेन्द्रिययोरभावात् ज्ञानसामान्याभावः। यदि स्थूलस्य विषयस्यैव ज्ञानाभावस्तदा, क्वैव कथातिसूक्ष्मस्यात्मन इति सर्वथातीन्द्रियत्वमात्मनो दर्शितम्। एतदेव द्रढ़यति येनेदं सर्वमिति। त्वं तु देहात्मभ्रान्त्या इन्द्रियैरेव विषयजातं गृह्णासि, आत्मनस्त्वतीन्द्रियत्वादविषयत्वाच्च ज्ञानाभाव इति भावः। देहात्मभ्रान्तां मैत्रेयीं देहव्यतिरिक्तत्वमात्मनो वदन् देहस्य यावद्धर्मवैलक्षण्यं तस्याः प्रपञ्चयति,—स एष नेति नेतीति। स एष आत्मा नायं देहो नायं देहो यत आत्मा अगृह्य इत्यादि, दार्ढ्यार्थं वीप्साप्रयोगः, एतादृशात्मज्ञानमेवामृतत्वसाधनमित्युपसंहृतम्।

अत्र यत्र त्वस्येति श्रुतेर्विद्यावस्थापरतया व्याख्यानं न समीचीनं, विद्योत्पत्तौ विश्वप्रलये मानाभावात्। न हि विश्वमविद्याजातं, येन विद्यया तद्विनाशे तत्कार्यं विश्वं विलीयेत। वेदान्तेषु ब्रह्मण एव जगत्कारणत्वश्रवणात्, श्रौतेषु सौत्रेषु च सृष्टिप्रकरणेषु अविद्याशब्दादर्शनात् श्रौताविद्याशब्दस्य कर्मपरत्वाच्चेत्युक्तम्। नचानिर्वाच्याविद्या श्रौती बौद्धोच्छिष्टत्वात्, बौद्धैरेव च तत्त्वज्ञानादविद्यानाशे विश्वप्रलय इष्यते तैरेवाविद्याजातत्वाभ्युपगमाद् विश्वस्य। "अविद्या संस्कारो विज्ञानं नामरूप"मिति तेषामेव हि सृष्टिप्रक्रिया। उक्तं च चन्द्रकीर्तिना बौद्धेन विवर्ताचार्यप्राक्तनेन "तत्त्वदर्शने हि सर्वपदार्थानामेवानुपलम्भात् नास्ति किञ्चित् यदालम्ब्य कर्म कुर्यात्, तथा अविद्वान् कारकस्तस्मात् न विद्वान् तत्त्वदर्शनादि"ति।

आह च बौद्धप्रक्रियायां माधवाचार्यः—"भावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदयः" इति। तथा "तदेवं भावनाचतुष्टयवशात् निखिलवासनानिवृत्तौ परिनिर्वाणं शून्यरूपं सेत्स्यतीति"। तेषां नये शून्यमेव परमार्थसत्यम्।"

किञ्च तत्त्वज्ञानाद् विश्वप्रलये केन कमिति विषयेन्द्रियाधिक्षेपवत् 'कः केन कं पश्येदि'ति कर्तुरप्यधिक्षेपोऽकरिष्यत, भवतां नये तत्त्वज्ञानादविद्याकल्पितजीवस्यापि प्रलयात्। यदि च तत्त्वज्ञानाद् विषयेन्द्रियाभावः श्रुत्याभिप्रेयेत, तदा "विज्ञातारमरे केन विजानीयात्" इति विज्ञातृत्वनिबन्धनेन्द्रियागम्यत्वाधिक्षेपः श्रौतो नोपपद्येत। न च 'ब्रह्मविदो विज्ञातैव केवलोऽद्वयो वर्त्तते' इति श्रुतिराह, तस्मादात्मन इन्द्रियागम्यत्वपरमेवेदं ज्ञेयम्।

यच्चोक्तं सामुद्रलवणस्य स्वकारणे जले प्रविलयवत् खिल्यभावापन्नजीवस्य स्वकारणे ब्रह्मणि प्रविलय इति तन्न, पार्थिवलवणविशेषे रूढ़स्य सैन्धवशब्दस्य योगेन जलविकारोक्तेरन्याय्यत्वात्, "लब्धात्मिका सती रूढ़िर्भवेद् योगापहारिणी। कल्पनीया तु लभते नात्मानं योगबाधतः"॥ इत्यनुशासनात्। सैन्धवखण्डश्च जलसंयोगात् काठिन्यं विहाय द्रवत्वं भजते, वह्निसंयोगात् स्वर्णादिरिव, नातः कारणे कार्यलयदृष्टान्तो युक्तः। नचाविद्यया ब्राह्मणखिल्यभावत्वं जीवस्य वेदान्ता वदन्ति, तदंशत्वोक्तेः। न वा नित्यस्य ब्रह्मयोनित्वं युज्यते, येन तस्मिन् विलयस्तस्य कल्प्येत। न च जलसूर्यादिप्रतिबिम्बवत् स्फटिकस्यालक्तरागरक्ततावद्वा जीवभावं ब्रह्मणः श्रुतयो वदन्ति, प्रतिबिम्बवादस्य योगिसम्मतत्वात् याज्ञवल्क्येन योगप्रकरणे तथैवोक्तेः;—"तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्" इति। न च जीवो विनश्यति, 'न जीवो म्रियते' इति श्रुतेः, "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य" इति न्यायाच्च। न च मैत्रेय्या मोहापनोदनार्थं आविद्यकखिल्यभावस्य विनाश उक्तः श्रुतौ स्वकल्पितत्वात् तस्य, किन्तु अविनाशित्वोक्त्या निवारितो मोह इति

( क्रमशः )

# छन्दोगक्रियासारः

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः । ]

( पूर्वानुवृत्तः )

## अथ सपिण्डीकरणम्

वर्त्तिष्यते,—इति सूत्रशेषः। समानः पिण्डो यस्य, असौ सपिण्डः प्राप्तपितृलोको भण्यते। तस्य हि पिण्डः समानः साधारणो भवति। यतः सपिण्डीकरणात् परतः खल्वयं पार्व्वणभाग् भवति। तत्र च पितामहादिभिः सममस्य पिण्डदानं प्रवर्त्तते। तदानीञ्च यदस्मै दास्यते मात्रादीनामपि तत्र भाग इति। पूर्व्वञ्च सपिण्डीकरणात् न पितामहादिभिः समानोऽस्य पिण्डो भवति, नवा तत्रान्यस्य भाग इति। तस्मादसपिण्डस्य सपिण्डकरणं सपिण्डीकरणमिति कर्म्मणो नामधेयम्।

पार्व्वणमेकोद्दिष्टञ्चाभिधाय सपिण्डीकरणस्याभिधानात् पार्व्वणैकोद्दिष्टाभ्यामेतद् विक्रियते। स्मरन्ति च।

"श्राद्धद्वयमुपक्रम्य कुर्व्वीत सहपिण्डताम्।
तयोः पार्व्वणवत् पूर्व्वमेकोद्दिष्टमथापरम्"। इति

पूर्णसंवत्सरादिरस्य कालः। ( १ ) तत्र कृतनित्यक्रियः शेषमासिकं समाप्य यथासम्भवं दानादिकमुत्सृज्य अपराह्णे राक्षसीवेलातः प्राक् सपिण्डीकरणं कर्त्तव्यम्। तत्र क्रमः। पादौ प्रक्षाल्याचम्य श्राद्धपूर्व्वकाले वास्तुपुरुषादीनभ्यर्च्च्य दैवे पश्चिमायां दिशि यवोदकप्रोक्षितपूर्व्वाग्रदर्भद्वितययुक्तमासनद्वितयमेकं वा तत् पित्र्ये दक्षिणस्यां दिशि तिलोदकप्रोक्षितदक्षिणाग्रैकदर्भयुक्तानि आसनानि आसनं वा परिकल्प्य प्रेतपक्षे च तत्पूर्व्वतो दक्षिणस्यां दिशि तिलोदकप्रोक्षितदक्षिणाग्रैकदर्भयुक्तमासनं परिकल्प्य तत्र तत्र ब्राह्मणान् स्थापयेत्। दैवे युग्मानेकं

वा पित्र्ये अयुग्मानेकं वा प्रेतपक्षे चैकं स्थापयेत्। सर्वं दैवकृत्यं प्राङ्मुख उपवीती पातितदक्षिणजानुर्यवोदकेन ऋजुदर्भैश्च कुर्यात्। पितृकृत्यञ्च दक्षिणामुखः प्राचीनावीती पातितवामजानुर्द्विगुणदर्भैस्तिलोदकेन च कुर्यात्। तत उपवीतित्वादिना दैवब्राह्मणमभ्यर्च्य तस्मै जलं दत्त्वा कुशादीनादाय विष्णुरोम् अद्येत्यादि अमुके मासि अमुके पक्षे अमुकतिथौ अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मणः सपिण्डीकरणार्थम् अमुकगोत्रस्य पितामहस्यामुकदेवशर्मणः अमुकगोत्रस्य प्रपितामहस्यामुकदेवशर्मणः अमुकगोत्रस्य वृद्धप्रपितामहस्यामुकदेवशर्मणः पार्वणविधिकश्राद्धे कर्तव्ये पुरुरवोमाद्रवःसंज्ञकानां विश्वेषां देवानां पार्वणविधिकसपिण्डीकरणश्राद्धं दर्भमयब्राह्मणयोः ब्राह्मणे वा अहं करिष्ये" इत्यनुज्ञां प्रार्थयेत्। ॐ कुरुष्वेत्यनुज्ञानम्।

---

१। पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा" इति श्राद्धसूत्रम्। १२।
"यदहर्वृद्धिरापद्येत"। इति श्राद्धसूत्रम्। १३।

(क्रमशः)

---

## वृत्तवर्त्तिका

श्रीमतां पारिषदानां विशेषविज्ञानाय वृत्तमिदं निवेद्यते ;—वर्त्तमानवर्षीयस्य एप्रिलमासस्य अष्टादशदिवसे बुधवासरे वङ्गीयसंस्कृतशिक्षापरिषदः प्रथमपरीक्षायाः विंशदिवसे शुक्रवासरे द्वितीयपरीक्षायाः त्रयोविंशदिवसे सोमवासरे च उपाधिपरीक्षायाः प्रारम्भो भवितेति तदीयव्यवस्थालयादवगतम्।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1949)**

.. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4. (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudāsa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. November 1950

No. 7. १८७२-शकीये

३३श-वर्षस्य कार्त्तिके

७म-संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)।
Foreign price—14s

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्यत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIII. | १८७२-शकीये कार्त्तिके | November |
| --- | --- | --- |
| No. 7. | ३३श-वर्षस्य ७म-संख्या | 1950. |


## श्रीश्रीश्यामामङ्गलम्

श्यामा दुर्दमरक्तबीजदलनी घोरा श्मशानैषिणी
प्रोच्चण्डासुरचण्डमुण्डदमनी भक्तप्रियाधायिनी ।
रौद्री विघ्नविमर्दिनी शवकरैः काञ्चीकृतैः शोभिनी
काली कालकरालभीतिशमनो भव्यास्तु लीलार्थिनी ॥१॥

सद्यश्छिन्नशिरःकृपाणकलिता वामे स्वहस्तद्वये
दक्षे चापि वराभयेन सहिता भीमा प्रसन्ना तथा ।
पञ्चाशन्नरमुण्डवर्त्तितबृहन्माला करालाकृतिः
घोरध्वानशिवागणैः परिवृता काली शिवायास्तु नः ॥२॥

कृष्णस्तस्तकचोच्चया रसनया रक्तं पिबन्ती मुहुः
सृक्कद्वन्द्वगलत्सपत्नरुधिरा दिव्या चतुर्वर्गदा ।
बालार्कोज्ज्वललोचनत्रययुता शम्भोरुरःसंस्थिता
दुष्टादुष्टभयाभयप्रदपदा श्यामा चिरं पातु नः ॥३॥

या सृष्टिस्थितिसंहृतीः प्रतनुते लीलावशात् सर्वतो
नीरूपापि हिताय भक्तभविनां रूपं विचित्रं श्रिता।
यन्मन्त्रं जपतां लसन्ति करयोः सर्वा विभूतिः परा
सेयं शाश्वतशान्तिदा दवयतु ध्याता सतां कल्मषम् ॥४॥

यस्याः शक्तिलवेन तीक्ष्णकिरणः प्राचीतटादुद्गतो
ध्वान्तं संहरति प्रवर्त्तयति च क्षेमं महीमण्डले।
यस्याः शक्तिलवो हुताशनगतः सर्वं विदग्धुं क्षमः
सा विश्वान्वयिशक्तिमूलविभवा श्यामा शिवायास्तु नः ॥५॥

विद्याद्या विविधाकृतिः सुकृतिनां चिन्तावशादुद्गता
घोरा कापि तथा शिवा शिवमुखैर्देवैः समाराधिता।
प्रत्यब्दं शरदागमे निशि निजैर्भक्तैः समभ्यर्चिता
नित्यं तेषु वरप्रदा भगवती श्यामास्तु नः श्रेयसे ॥६॥

यन्मन्त्राक्षरवेधजापविधिना सिद्धिं गताः केचन
भ्रष्टाः केचन वा परे नियमतो व्यापत्तिमभ्यागताः।
या शिष्टेन पथार्चितैव शुभदा लोकेषु नैवान्यथा
सा तन्त्रोदितसाधनक्रमपथा भव्यं विधत्तां शिवा। ७॥

दुष्टानां भयवर्द्धनाय दधती खड्गं नृमुण्डं तथा
शिष्टानामभयाय तद्वदभयं दिव्यं वरं बिभ्रती।
एकत्रैव शिवाशिवान्वयवती कृत्यप्रभेदाशया
श्यामा सर्वहितानि साधयतु नः प्रत्यब्दमाराधिता ॥८॥

## मासप्रकृतिः

यस्मिन् मासि शुक्लप्रतिपदादिदर्शान्ते कृत्तिकानक्षत्रे पूर्णिमाया अन्तो भवति, स चान्द्रकार्तिक इत्याख्यायते। सूर्यस्य तुलाराशिस्थितिकाल एव तस्य सम्भवात् स कालः सौरकार्तिकसंज्ञां भजते। अस्मिन मासि जातकर्मादिसंस्कारकृत्येषु संकल्पवाक्ये 'कार्त्तिके मासि तुलाराशिस्थे भास्करे' इत्येवं माससमुल्लेखः।

अस्य सौरकार्तिकस्य प्रथमदिवसे वीराष्टमीव्रतं, तृतीये दिवसे विजया दशमी श्रीरामचन्द्रविजयोत्सवश्च। अष्टमे दिवसे प्रदोषे श्रीश्रीलक्ष्मी-पूजा। द्वाविंशदिवसे भूतचतुर्दशीकृत्यं प्रदोषे चतुर्दशदीपदानञ्च। त्रयोविंशदिवसे श्रीश्रीश्यामापूजा प्रदोषे उल्कादानं श्रीश्रीलक्ष्मीपूजा अलक्ष्मीपूजा च। पञ्चविंशे दिवसे भ्रातृद्वितीयाकृत्यम्। त्रिंशे दिवसे सर्वजयाव्रतं श्रीश्रीकार्तिकेयपूजा च।

कार्तिके मासि जातो जनो विक्रयदक्षो धनाढ्यो बहुभाषी कुटिलबुद्धिः श्रीमान् युद्धविशारदश्च भवति। अस्मिन मासि गृहमुत्तरद्वारं निर्मातव्यम्। अत्र वृषसिंहधनुर्मकरराशिषु जातानां तथा त्रयोदशदिनात् परं वृष-मिथुनसिंहकन्याधनुर्मकरकुम्भराशिषु जातानां रविशुद्धिः। मेषमिथुन-सिंहतुलामकरराशिषु जातानां गुरुशुद्धिः। अस्मिन् मासि ऋतुः परिवर्तते। तस्मादत्र सर्वैः सावधानैः स्थातव्यम्। अत्र बलजननं भोज्यं व्यवहर्तव्यम्। परिष्कृते स्थाने वसतिः कार्या। रात्रौ हिमसेवा परिहर्तव्या तथा उष्णं वस्तु व्यवहर्तव्यम।

# नवसूक्तिमालिका

यावत् स्वदेहः प्रतिभाति सुस्थ-
स्तावन्न मृत्युं मनसा स्मरामि ।
अस्वास्थ्यलेशे वपुषि प्रवृत्ते
प्राप्तं तमीक्षे सुतरां समीपे ॥

दोषोदयात् प्राग् यदि तन्निरोधो
योग्यैरुपायैः क्रियते मनुष्यैः ।
स्थितिस्तदा विघ्नविनाकृता स्यात्
तत्रैव लोका नहि सावधानाः ॥

रोगं लघुं केचन चिन्तयन्तः
केचिच्च दैवे बहु विश्वसन्तः ।
केचिच्चिकित्साव्ययभीतचित्ता
नश्यन्त्यकाले निजबुद्धिदोषात् ॥

रोगो लघुः कश्चन नैव भाव्यो
न केवलं वा फलदायि दैवम् ।
न वा चिकित्साव्ययभीतिरिष्टा
तथापि विघ्नो यदि नास्ति दोषः ॥

---

# मतिमञ्जरी

एष यान्त्रिकसमुन्नतेः कालः । विज्ञानं किल नानाविधानि यन्त्राणि समुद्भाव्य जगति प्राचीचरत् तानि चोपयुज्यन्ते नानाविधेषु जगतः कार्यकलापेषु । विमानयन्त्रमाकाशमार्गेण विमानसञ्चारोपयुक्तमत्यल्पया कालकलया विमानचारिणो देशान्तरं प्रापयत् कालविलम्बजनितमसौकर्यं

निवर्तयति प्राणवताम्। वाष्परथमारुतरथयन्त्रादिकमपि तथैव। समुद्र-पोतयन्त्रादिकमपि वाणिज्यवृत्तादौ सुतरामुपयुक्तं सर्वं जगदुपकुरुते। वस्त्रतैलशर्करादियन्त्रालयेष्वपि समुपलभ्यते सुमहान यन्त्रस्योपयोगः। किं बहुना हालिकसम्पादनीयं हलकर्षणादिकृत्यमपि साम्प्रतं बहुत्र यन्त्रानुकूल्येनैव सम्पद्यते। तेन सर्वं कृत्यमविलम्बितं श्रमातिशयविनाकृतं सुतरामुत्कर्षकलितञ्च जायते। परन्त्वेवं यन्त्रानुकूल्येन जगति सुतरां प्रचरत्यपि कृत्यादिसौकर्ये तदधीना महाविपत्तयोऽपि दरीदृश्यन्ते प्रत्यहमेव बहुत्र समुपजायमानाः। तथाहि कदाचिद् वाष्परथद्वयस्य चालकप्रमादादिप्रसूतेन मिथः संघट्टनेन, कदाचिदाकाशचारिणो विमानस्य आकस्मिकयन्त्रवैकल्यादिप्रभवेण विपत्पातेन, कदाचित् तस्य दैवादुपनतेन वस्त्वन्तराभिघातेन, कदाचिदन्यथान्यथा च संख्यातीताः प्राणिनो यमसदनमकाले गच्छन्ति। तदनयोस्तारतम्यविचारे शुभमशुभं वा प्रधानपदमधिकर्त्तुमर्हतीति नैव विनायासं शक्यते निर्णेतुम्। अशुभस्य प्राधान्येऽपि जगति साम्प्रतं कार्यकलापेषु यावान यन्त्रस्य प्रभावो लब्धास्पदो जातस्तस्य लाघवं नैव कथञ्चित् शक्यसम्पाद्यं भवति।

जगति यन्त्राणां महता प्रचारेण गृहशिल्पादिविशेषा अपि नितरां ह्रासमुपेताः समुपयन्ति च प्रत्यहमेव महता वेगेन। तथाहि वस्त्रयन्त्रादीनां तावता प्रसारेण तन्तुवायादीनां कृत्यानि विघटितानि। तद् वयं जगति यन्त्राणामतिप्रचारेण हितापेक्षया अहितमेव समेधमानं पश्यामः। किन्तु साम्प्रतमीदृशदशायां वयमुपगता येन सत्यपि कामे न शक्यतेऽद्य हिताय पश्चादपसर्त्तुम्। तद् यान्त्रिकव्यापारेषु प्रचलत्स्वेव यथा यथासम्भवं शक्यो विपत्प्रतीकारस्तथैव पदे पदे यतितव्यमिति।

तथा "चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि काव्यादेव" इति साहित्यदर्पणे च निर्दिशन्ति। पाठकास्तु विपुलानन्दलाभाय काव्यं पठितुमारभन्ते। परन्तु काव्यस्य करुणामयी ह्यधिष्ठात्री देवता स्वकीय-दिव्यप्रभावानुषङ्गतः तान् निर्मलीकरोति। अकामयमानेष्वपि पाठकेषु सत्-प्रभावस्थापने भारतीयकवयोऽप्रतिद्वन्द्विन एव। नह्येषातिशयोक्तिः। ये हि महाकवय इत्थं स्वकीयालौकिककवितावलेन पाठकानामन्तःकरणान्युल्लास-यितुं वशीकर्त्तुं च समर्थास्तेषु कालिदास एव श्रेष्ठः। अतः स हि प्रागेवा-लोचनीयः।

## द्वितीयाध्याये—कालिदासः

तत्रभवान् कालिदासो भारतीवरपुत्रो भारतकविमुख्यः कीदृशकवित्व-शक्तेराधार आसीत्,—तदेव वर्णयित्वान्येषां रसबोधोन्मेषचेष्टा व्यर्थप्रयास एव। ये हि काव्यशास्त्राणां रसास्वादने यथार्थमेवाधिकारिणस्तादृशाः सहृदया जना एव बोद्धुं समर्थाः,—कालिदासः कीदृशीं कवित्वशक्तिं सहचरीकृत्य धरातल आविर्बभूवेति। स हि संस्कृतभाषायामुत्कृष्टतमं महाकाव्यमुत्कृष्टतमं खण्डकाव्यमुत्कृष्टतमं नाटकं च रचितवान्। कस्यापि देशस्य कोऽपि महाकविः कथमपि कालिदासातिशायी नासीत्, नास्ते चाद्यापि पृथिव्या अत्यल्पसंख्यका एव कवयस्तत्तुल्या इति निर्देशे कोऽप्यत्युक्तिदोषो नास्ति।

यदा वयं कालिदासस्यामृतमयीं काव्यावलीं पठामस्तदैकेन व्यापारेण मुग्धतामधिगच्छामः। पृथिव्यां यदेव सुन्दरं हृदयोन्मादकरमपापविद्धं महोदारमनुपमञ्च, तदेव कालिदासकाव्यानामुपजीव्यम्। जगति द्वे एव कवीनां वर्णनीये,—अन्तर्जगद् बहिर्जगच्च। नीरेन्द्रप्रतिमं सुनीलं प्रशान्तं नभोमण्डलं, नील-नीरद-प्रभोऽनन्तो जलराशिः, पूर्वापरसमुद्रावगाहिन्य-भ्रभेदिनी पर्वतमाला, वसन्तावताररमणीया प्रकृतिलीलामयी श्यामायमाना वनभूमिः, सैकतलीनहंसमिथुना कलवाहिनी स्रोतस्विनी, केकामुखरं वर्षण-रक्तं काननं, तथा वाडवाग्निप्रभृति बहिर्जगतः सुन्दरवस्तूनि। अन्तर्जगत्श्च

प्रीतिः स्नेहो दया परार्थ आत्मोत्सर्गः सहृदयता तितिक्षा चेत्यादीनि । तानि सर्वाणि कालिदासस्य स्वकीया सम्पत्तिरिव । तेषां वस्तूनां यथेच्छं विनियोगः कृतः प्रयोजनवशात् कालिदासेन । यत्र यस्य शब्दस्य विनियोगाद् भावप्रकाशसौष्ठवं जायते, यस्य भावस्य विकाशान्निसर्गसुन्दरीणामालेख्य-मालानां चारुता शतशो वर्द्धते, तत्र तेन तथैवशब्दाः पदार्थाश्च स्थापिताः । येनैव चित्रेण प्राणेषून्मादो न जायते, येनैव शब्देन कर्णयोरमृतवर्षणं न भवति, न तच्चित्रं चित्रितं न वा तादृशः शब्दः परिगृहीतः कालिदासेन । अथवा किमधिकेन,—येनैव रसेन हृदयं विधौतं स्वच्छदर्पणवन्निर्मलं सम्यग् भावग्रहणोपयोगि च न भवति—तादृशो रसो हि कालिदासकाव्येषु नास्ति ।

मोहविद्धा जीवाः पार्थिव-यन्त्रणया बहुशो व्यथिता निरन्तरं विलपन्तो दुर्वहजीवनभारं कथञ्चिल्लघुनां नयन्ति । तेष्वेव विलापेषु य एव दारुणः सर्वथा मर्मस्पर्शी च,—यदेव विलपितं श्रुत्वा मन्यते कथमप्यस्योपशमः कार्य्य इति,—तदेव मर्मस्पर्शि विलपितं कालिदासेन स्वकीय-करुण-कल्पना-वीणया झङ्कृतम् (यथा, रघुवंशस्य अष्टमे सर्गे अजविलापः ; चतुर्दशे निर्वासित-सीताया विलापः ; कुमारसम्भवस्य चतुर्थसर्गे रतिविलापः ; पूर्वमेघश्च तत्रोदा-हरणानि) । येषु गुणेषु सत्सु मनुष्यो देवता भवति, पृथिव्याः सर्वमेव सुन्दरं प्रतिभाति—किं बहुना,—धरित्री स्वर्गातिशायिनी भवति, कालिदासस्तेषा-मेव गुणानाधारान् कृत्वा स्वकाव्यानां नायकान् निर्ममे । वासन्ती कोकिला हि तस्य कल्पनादूती, मधुकुसुमगुच्छो हि तस्य कल्पनालङ्कारः, शारदीया निर्मला कौमुदी तस्य कल्पनावसनं, भागीरथी-निर्झरशीकरो हि तस्य कल्पनापाद्यं, हिमालयगुहामुखजातं निर्झर-शीकरसिक्तं श्यामलदूर्वाञ्चलं तस्य कल्पनार्घ्यम् ।

उन्मादिनी हि तस्य कल्पना कदा वाकाशपथे सञ्चरन्ती लवणाम्बु-राशेस्तमाल-ताली-वनराजि-नीलां वेलाभूमिं लावण्यमयीं पश्यति, (यथा रघु-त्रयोदशसर्गे) । कदा वाभ्रभेदिन-पर्वतनितम्बेषु सञ्चरणशीलां चञ्चलां घन-कृष्ण-मेघमालां क्रीडामयीं दृष्ट्वात्मन्येवात्मानं विलोपयति (यथाकुमारस्य

प्रथमे पञ्चम-श्लोकेः )। अन्यत्र च सैवोन्मादिनी कल्पना स्वयमेव मेघमयी सती सुनीले विशालाकाशपथ उड्डीयमाना नितरामज्ञेयलोकाभिमुखं धावति, प्रमाणं यथा विक्र—चतुर्थाङ्के उर्वशीं प्रति पुरूरवसः—

"अचिरप्रभाविलसितैः पताकिना सुरकार्मुकाभिनवचित्रशोभिना।
गमितेन खेलगमने! विमानतां नय मां नवेन वसतिं पयोमुचा॥" इत्युक्तिः।

कदा वा शान्तरसास्पदे तपोवने जीवच्छान्तिप्रतिमाभिर्मुनिकन्याभिस्तदीया कल्पना बालिकेव कुसुमचयन आलवालपूरणे वा प्रवृत्ता, भ्रमरेण मृगेण चेतस्ततो धावति (यथा शकु—प्रथमाङ्के )। ततो वा राजान्तःपुर उपेक्षिताभिमानिनी महिषीव सकरुणाश्रुधारां भृशं विमुञ्चति, क्षणान्तरे च पुनरभिनवमधुलोलुपस्य राज्ञः सुगभीरं हृदयान्तःस्थलं प्रविश्य जन्मान्तरीयां कथां स्मारयति, विमुग्धं नरपतिं पर्युत्सुकं च करोति (यथा शकु—पञ्चमाङ्के हंसपदिकागीतिः)। अन्यत्र च राजराजेश्वरस्य नयनानन्ददायिनीं स्नेहपुत्तलिकां जटावल्कलधारिणीं सन्न्यासिनीं विधाय पर्वतेषु गुहासु च परिभ्रमयति। कदा वा तदीया कल्पनोदासिनीं राजनन्दिनीं स्वहस्ताभ्यामशोक-कुसुम-सम्भारैरलंकरोति, कदा वा काञ्चनकान्ति-कर्णिकारपुष्पैस्तस्या वेश-विन्यासं साधयति, कदा वा दुग्ध-धवल-सिन्धुवार-प्रसूनैर्माल्यं रचयित्वा तदीयबन्धुरकण्ठे दोलायमानं करोति। तदङ्किता वसन्तकुसुमानां वसन्तपल्लवानाञ्चाभरणेन सज्जीभूता कुमारी यदा मन्थर-गमनेन पथिचर्य्यां करोति, मन्ये तदा हि पुष्पस्तवकनम्रा पल्लविनी सञ्चारिणी कापि वासन्ती लतिका त्वस्माकं दृष्टिपथवर्त्तिनी भवति। तस्य हि कल्पनावीणाया मोहनतानेन मृगी पुलकाद् भावावेशाच्च निमीलिताक्षी जायते। तदीया हि प्रगल्भा कल्पना वशंवदं भ्रमरं भ्रमरी-पीतावशिष्टं मधु साग्रहं पाययति।

यैरेव चित्रैर्दर्शकानां हृदयं स्निग्धत्वं गच्छत्यौदार्य्यं च लभते, अनुषङ्गतो लोकशिक्षा च भवति, दर्शकाश्चात्मविस्मृता जगज्जनेषु प्रीतिमन्तो भवन्ति, तादृशानि मधुराण्येव चित्राणि कालिदासतूलिका प्रसूते। पुत्रलाभार्थं गुरो-

रादेशेन पृथिवीपतिर्लताप्रतानैर्जटासंयमनपूर्वकमसूर्य्यम्पश्यया देव्या सह वनाद् वनान्तरे विचरन् धेनुपरिचर्य्यां करोति। अयं हि सनातनधर्मिणामेको महानादर्शः। स्वयंवर-सभायां समवेतेषूज्ज्वलनेपथ्येषु नृपतिषु लज्जावनतमुखी राजकन्या वरमाल्यहस्ता सह परिचारिकया सञ्चरति। कन्याललामलिप्सूनां राजन्यकानां हृदयनभसि राजनन्दिन्याः प्रतिपादक्षेपमाशाविद्युल्लता शोभना नैराश्यमेघो वा भीषणः प्रकटीभवति, पुष्पमालिकाघातेन कुसुमकोमला राजमहिषी मूर्च्छिता भवति ; तस्या हेमकान्ति कलेवरं क्रमशो निष्प्रभतां याति। तद्दर्शनात् पत्नीमयजीवितो धरणीश्वरः स्वकीयां सहजधीरतां विसर्ज्य सकरुणं रोदिति। भुवनमोहनस्यानन्तरूपाधारस्य विलास-भङ्गीभिर्विश्वविजयिनो जीवितेश्वरस्याद्भुतमरणादनन्यशरणायाः कुसुमायुधबध्वा—'अयि जीवितनाथ जीवसी'त्यादि पाषाणद्रवकरं—करुणमुच्छ्वसितं वज्रस्यापि मर्म स्पृशति। निरपराधाया अग्निपरीक्षिताया देवीप्रतिमायाः प्रजारञ्जनानुरोधात् पत्या निर्वासनं तथा तस्याः पतिगतप्राणाया गर्भभरालसाया भयातुराया गहनवने—

"निशाचरोपप्लुत-भर्तृकाणां
तपस्विनीनां भवतः प्रसादात्।
भूत्वा शरण्या शरणार्थमन्यं
प्रपतस्ये त्वयि दीप्यमाने॥

* * *
* * *

भूयो यथा मे जननान्तरेऽपि
त्वमेव भर्ता न च विप्रयोगः॥"

इत्यादिका मर्मविदारिणी विलापगाथा पाठकान् नूनमेवाभिभवति। बहुभिः प्रयासैर्दुस्तरजलधिं बद्ध्वासहनीयकष्टैः पत्नीमुद्धृत्याकाशपथे तया सह सञ्चरण-काले भर्तातीतकालस्मृतिभिरुद्वेलितहृदयसिन्धुर्जातः। पूर्वानुभूतस्थानानि प्रदर्शयतो भर्त्तुरुक्तिं श्रुत्वा तस्या हि पतिरताया निर्वाण

दृष्टिर्नीरवमश्रुवर्षणमित्येवं मनोरमं दृश्यं कालिदासस्तस्यामरभाषया चित्रितवान्।

अपरत्र च,—विलासी यक्षः प्राङ् मुहूर्तमपि प्रियाविरहं न ज्ञातवान्। स हि भाग्यविपर्य्ययेण यदा सुदूरवर्तिपर्वताश्रमे निर्वासितो विलपति। तदा निर्जने वनप्रदेशे तं हि दुर्भाग्यं शान्तिं लम्भयितुं कोऽपि नासीत्। यदा स हि हतभाग्यो हृदयदाहेन कदाचित् जले पतति, कदाचित् स्थले धावति, कदाचिद् वा प्रस्तरशय्यायां वक्षो निष्पीड्य शेते, क्षणान्तरे वोपविशति,—कति वा चेष्टा दुर्भाग्येण विधीयन्ते, परन्तु कथमपि तस्य मर्मवेदना लघुत्वं न याति ; प्रत्युत दावानलशिखेव भृशं वर्द्धते। तदा किल प्रणयिसखः कालिदासस्तत्रावतीर्य्य कल्पनामोहनमन्त्रेण मेघस्य प्राणप्रतिष्ठां विधाय जलमुचं यक्षस्य दौत्ये नियुक्तवान्। यक्षो हि मेघेन प्रियासमीपे सन्देशं प्रेरयति। अलकायां च विषादिनो चिन्ताकृशा प्राणमात्रसारा यक्षवधर्भविष्यन्मिलनाशया कथमपि प्राणैर्न वियुक्ता।

यदा अकालवसन्तप्रादुर्भावात् तरुवल्लीसहिता समस्ता वनभूमिरकस्माद्धसन्ती पुलकाञ्चिता जाता। सह सहचरीभिर्मृग करि-भ्रमर-कोकिल-चक्रवाकाः समन्तादानन्दमत्ता वनस्थलीं चोन्मादयन्ति स्म [illegible] निरवच्छिन्नसुखलालसाप्सरोमण्डली वनाभ्यन्तरे प्रतिकुञ्जं सौन्द[illegible]भुञ्जाना विचरति स्म। तदा सावधानः कालिदासस्तस्यातिमानुषीं कल्प[illegible]हचरीकुञ्ज तद्वनस्य प्रतिकृतिं गृहीतवान्। पुत्रविरहितः संसारविरक्तो नरपतिः शून्यहृदयो दूरादेव कस्यापि शिशोरकारणहास्यलीलायितं कुन्द-कुट्मल-निभ-क्षुद्रदशन-मुक्ता-समुज्ज्वलमव्यक्तमधुरवचनं मुग्ध-सुन्दरं मुखचन्द्रं यदा पश्यति, चिन्तयति च,—अहो! यो हि जगत्येतादृशदुर्लभरत्नाद्वञ्चितस्तस्य जीवनं हि विडम्बनभूतमेव। तदा क्षितीश्वरोऽदृष्टवैगुण्यात् स्वपुत्रमपि परपुत्रं मत्वा मनसि भृशमान्दोलयतीति विमोहनं चित्रम्।

राजकन्या राजभगिन्यनिन्द्य-सुन्दरी बालिका दैव-दुर्विपाकाद् दस्युनापहृता पश्चात् पलायिता भिक्षुकवेशिनी नानादेशान् पर्य्यटन्ती

चान्यस्य नरपतेरन्तःपुरे परिचारिकावृत्तिं गृहीतवती, सुकोमला बालिका-परिसीममनोवेदनामनुभवति स्म। सहृदयः कालिदासस्तस्याः सहायो जातः।

रघुदिग्विजयकाले विशालस्य भारतवर्षस्य विभिन्नदेशानां रम्यचित्राणि जाज्वल्यमानानि कालिदासेन पाठकानां पुरतः स्थापितानि। तदेव विचिन्त्य वयं विस्मयाप्लुताः स्मः।

यदा वयं पश्यामो 'मा भूत् परीवाद-नवावतारः' इत्युक्त्वा सजलनयनो गद्गदवचनो 'मृत्पात्रशेषविभूति' नृपो रघुर्गुरुदक्षिणार्थिनो ब्रह्मचारिण आतिथ्यसत्कारं विदधाति,—तदा हि कालिदासस्य वर्णनाया नूतनत्वेन सुन्दरत्वेन च वयमुद्भ्रान्ततामधिगच्छामः, आनन्देन विस्मयेन श्रद्धया चास्माकं प्राणा अवनम्रा जायन्ते।

(क्रमशः)

---

## वृत्तवार्त्तिका

प्रतिवर्षमत्र [illegible]कातानगर्य्यां बहुभिः सङ्घैः पृथक्तया प्रवर्त्तिता बहुसंख्याः सार्वजनी[illegible]श्यामापूजाः सम्पद्यन्ते। तत्र च नानाविधोत्सवसम्पादनाय [illegible]व्ययो भवति। प्रतिसङ्घं सङ्घान्तरापेक्षया पूजोत्सवसमुत्कर्षसम्पादनार्थं महता परिकरेण न केवलं प्रभूतवित्तव्यय एव किन्तु जातीयमहाहानिजनकं मिथो महद् वैरमपि पदं दधाति। तदेतत् सर्वमभिसन्धाय वर्षेऽस्मिन् केचन महान्तः स्वदेशहितकामा अनेकेष्वेव पदेषु बहूनां सङ्घानामेकीकारेण समवायतः श्रीश्रीश्यामापूजाव्यवस्थां विधाय महान्तमेव देशोपकारं कृतवन्तः। सार्वजनीनपूजायाः सार्वजनीनतामनेन पथा नियतं भाविनीं मन्यमाना वयमस्या व्यवस्थायाः स्थैर्य्यं परिवृद्धिञ्च कामयामहे।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1949)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4-(for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24 **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learned editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. December 1950

No. 8. १८७२-शकीये

३३श-वर्षस्य अग्रहायणे

८म-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—14s.

## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामबाजार

कलिकाता-४

संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIII. No. 8. | १८७२-शकीये अग्रहायणे ३३श-वर्षस्य ८म-संख्या | December 1950.

# हेमन्तप्रकृतिमङ्गलम्

शस्यानां परिपाकतो वसुमती जाता परं पिङ्गला
कीराः स्वैरमितस्ततः प्रसृमराः श्यामाभपत्रश्रियः ।
श्यामाकोच्चयमञ्जरीं सुनिपुणं चञ्च्वा दशन्तो मुदा
हेमन्तप्रकृतेरपूर्वसुषमां विज्ञापयन्त्यञ्जसा ॥

दृष्ट्वा पक्विमशस्यराशिमनघं श्रान्तेः फलं पुष्कलं
मोदं यान्ति कृषीवलाः कृषिकलाविद्यासु पारं गताः ।
आनन्देन शुभे दिने स्वभवने धान्यप्रवेशक्रियां
कृत्वा वार्षिकमङ्गलेषु दधते चित्ते दृढप्रत्ययम् ॥

धान्यस्तोमभरेण नम्रशिरसो धान्यद्रुमाः क्षेत्रगा
दत्तापूर्वफलां नमन्ति वसुधां नूनं कृतज्ञा इव ।
व्याकीर्णा शिथिलस्ववृन्तगलितैः शस्योच्चयैः क्षेत्रभू-
र्दानस्याति फलं भजन्ति कृतिनो दानात् परं किं कलौ ॥

पल्लीप्रान्तकृषीवलाः क्वचिदमी क्षेत्रे जलैराप्लुते
पादालम्बितकुम्भचारिवपुषः कृन्तन्ति शस्यावलीम् ।

अन्ये पादचरा विनैव कलसं स्वल्पोदके भूतले
तोयस्पर्शविवर्जिते क्वचन वा केचिद् विनैव श्रमम् ॥
तापः शापवशादिव प्रतिहतो दूरं प्रदेशं गतः
शीतं भीतिविवर्जितं क्षितितले लब्धास्पदं प्रैधते ।
जाड्यादाढ्यजना भजन्ति सुतरामुष्णं वपुःप्रच्छदं
पीयूषायितमुन्नयन्ति तपनोत्तापं प्रगे देहिनः ॥
सायं सायकवेधवद् गणयति प्राप्तं समीरं जनः
पल्लीवासगतास्तथा हुतभुजः सेवारताश्चत्वरे ।
नीहारस्रुतिजर्जरं सरसिजं जातं सरोजाकरे
भृङ्गा भग्नमनोरथा विमुखतामासाद्य दूरं गताः ॥
शुभ्रांशुः शिशिरोत्करावृततनुर्नो पूर्ववद् दृश्यते
मालिन्यं व्यजनिष्ट शारदरुचा मुक्ते नभोमण्डले ।
प्राप्ता कुज्झटिका दिगावरणतां पान्था दिगन्धाः स्थिता
हेमन्तर्त्तुरयं शुभाशुभमयः प्राप्तोऽद्य कालक्रमात् ॥
हे हेमन्त ! तनोषि शस्यनिवहैः पृथ्वीहितं सन्ततं
वह्निं दीपयसि प्रकाममभितः क्षेमङ्करं जाठरम् ।
सुप्तिं लुम्पसि दक्षिणायनजनिं नित्यं सुधाधायिनां
कल्याणघ्न तदद्य भूरिमहसे सौम्याय तुभ्यं नमः ॥

## मासप्रकृतिः

यत्र चान्द्रे मासि प्रायेण मृगशीर्षनक्षत्रे पूर्णिमाया अवसानं जायते, स एव चान्द्रमार्गशीर्ष इत्याख्यायते। सूर्यस्य वृश्चिकराशिस्थितिकाल एव तस्य सम्भवात् सूर्यस्य वृश्चिकराशिस्थितिकालः सौरमार्गशीर्ष इत्याख्यां भजते। अस्मिन् मासे विवाहादिसंस्कारकर्मणां सङ्कल्पवाक्येषु 'मार्गशीर्षे मासि वृश्चिकराशिस्थे भास्करे' इत्येवं राशिसहकारेण मासनिर्द्देशः कार्यः।

अस्मिन् पृथिव्यां प्रभूतशस्यसमुत्पादेन यथा मासान्तरापेक्षया तस्याः सौन्दर्यवृद्धिस्तथा लोकोपकारे भूयानुपयोग इत्यत एव मासोऽयमग्रहायणसंज्ञया प्रथते। केचित् पुनः कालान्तरे कदाचिन्मासगणनायामस्यैव मासस्यादित्वमासीदित्यतो मासस्यास्य तत्संज्ञेत्याहुः।

अस्मिन् संवत्सरे मासस्यास्य प्रथमदिवसे गोष्ठाष्टमी, द्वितीये दिवसे श्रीश्रीजगद्धात्रीपूजा, चतुर्थदिवसे उत्थानैकादशी, सप्तमे दिवसे श्रीश्रीकृष्णस्य रासयात्रा, अन्यत्र चान्यानि कानिचित् पुण्यकर्माणि सम्भवेयुः।

अस्य मासस्य प्रतिरविवासरं कार्त्तिकस्य त्रिंशदिवसे प्रतिष्ठापिते मित्रघटे मित्रस्य पूजा। एतन्मासस्य त्रिंशदिवसे तद्घटविसर्जनम्।

अस्मिन् मासि जातो जनस्तीर्थाभिलाषी प्रवासप्रियः परोपकारी सत्प्रकृतिः सद्वृत्तिः ललनाप्रियश्च भवति। अयं मासो यद्यपि विवाहकृत्ये प्रशस्तस्तथापि प्रथमगर्भोत्पन्नानामपत्यानामत्र विवाहो निषिद्धः।

अस्मिन् निर्मातव्यं गृहं पूर्वद्वारं कर्त्तव्यम्। अत्र मिथुनकन्यामकरकुम्भराशिषु जातानां त्रयोदशदिनात् परञ्च मिथुनकर्कटकन्यातुलामकरकुम्भमीनराशिषु जातानाञ्च रविशुद्धिः।

मेषमिथुनसिंहतुलामकरराशिषु जातानां गुरुशुद्धिः। अस्मिन् मासि पुष्टिकरं द्रव्यमभ्यवहार्यम्। परिष्कृते देशे स्थातव्यम्। निर्मलं जलञ्च पेयम्। शरीरे हिमसेवा नोचिता।

# नवसूक्तिमालिका

दोषो गुणो वा नहि केवलात्मा लब्धास्पदः क्वापि जने जगत्याम् ।
दोषं परित्यज्य ततो गुणस्य परिग्रहं साधुजनो विधत्ते ॥
सर्वत्र शेते भगवान परेशः स्वया विभूत्या परिषेव्यमाणः ।
कीटं पतङ्गं मनुजं पशुं वा सेवस्व देवं सदृशं तरुं वा ॥
मृत्योः परस्ताद् यदि नास्ति लोकस्तदापि लोकेऽत्र हिताय लोकैः ।
सेवा कथं नैव जनेषु कार्या मैत्री नवा लौकिकमङ्गलार्था ॥

---

# मतिमञ्जरी

आसीत पुरा पूर्ववङ्गप्रदेशे सुमहतसंस्कृतपरीक्षादिकृत्यसम्पादनार्था परिषद् या पूर्ववङ्गसारस्वतसमाजनाम्ना व्यपदिष्टा। तस्या उपकाराय कतिचित प्रादेशिका भूपतयो वित्तं विसृष्टवन्तः, दत्तस्तथा भूयानर्थस्तदानीन्तनैः पाश्चात्त्यैरपि राजपुरुषप्रकाण्डैः। सेयमद्य सारस्वतसमाजनाम्नी परिषत पाकिस्थानराज्याधिकारेण सर्वथा समुपेक्षिता पाकिस्थानराष्ट्रीयसंस्कृतपरीक्षासमितिरिव नाममात्रशेषा स्मरणीयामिव दशामारूढ़ा संस्कृतविद्यानुरक्तचेतसां महते दुःखाय समकल्पत। तदत्र वयं प्रस्तुमो यत पुरा येषां संस्कृतप्रिय-जनविशेषाणां महता प्रयत्नेन समुतसाहेन स्वार्थत्यागेन च पूर्ववङ्गसारस्वतसमाजः प्राचलत, सन्ति तेषु बहव एवाद्यापि। यदि ते समुद्दीप्तसमुतसाहाः समाजमिमं पश्चिमवङ्गप्रदेशगतं कृत्वा पुनः सञ्चालयितुं प्रयतेरन, तदा नूनं तेषां प्रयत्नः सफलो भविता। तदत्र तेषां समाजप्रियाणां साभिनिवेशं दृष्टिपातं सुफलाय वयं कामयामहे।

---

# कालिदासीय-कुमारसम्भवम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीकरुणाकुमारशास्त्री ]

तस्य हि शब्दविन्यासनैपुण्यमीदृशं यत् तदीयकाव्येषु यत्र कुत्रापि स्थाने कस्यापि शब्दस्य परिवर्तनं परिवर्द्धनं परिवर्जनं वा सौन्दर्य-लाघवायैव। तस्य श्लोकानां प्रत्येकं हि किञ्चिदालेख्यमिव। अतः श्लोका-नामावृत्तेः परिसमाप्तौ पाठकानां श्रोतॄणाञ्च मानसपटे काचिन्मनोहारिणी प्रतिकृतिः स्वत एवोपतिष्ठते। अत्र हि वक्ष्यमाणरूपाणि पद्यानि प्रायशो दृष्टान्तीभूतानि भवन्ति—

(क) "स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम्।
दृदर्श चक्रीकृतचारुचापं प्रहर्त्तुमभ्युद्यतमात्मयोनिम्॥"

(ख) "कार्य्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्ण-मृगस्य वामनयनं कण्डूयमानां मृगीम्॥"

इति। अलमतिविस्तरेण।

अत्यल्पभाषणेन सुन्दराणां प्रकाण्डानाञ्च पदार्थानां चित्रणे, तेनैव च चित्रेण दर्शकानां चित्तविमोहने कामना-परिपूरणे च कालिदासतुल्यः कविर्नासीदिति मन्ये।

कालिदासस्य एवंविधायाः कवित्वशक्तेर्निदानं हि तस्य शब्दाधिकारो मात्राज्ञानं जनहृदयानुभूतिश्च। अनयानन्यसाधारण्या शक्त्या विजयते कालिदास एव,—न हि तथा भारविर्न वा माघो न वा बाणो न वा श्रीहर्ष इति। कालिदासस्य रामसमीपे भारवेरर्जुनो माघस्य श्रीकृष्णो वा निष्प्रभः; कालिदासस्य दिलीपसमीपे नैषधस्य नलोऽकिञ्चित्कर एव। कालिदासस्य कुशो बाणभट्टस्य चन्द्रापीड़ात् श्रीहर्षाद्वा सर्वथातिशयी। कालिदासस्य "पर्वतराजपुत्री" सीता शकुन्तला मालविका धारिण्युर्वशी वा कवेर्निरुपमैव सृष्टिः। महाकविः कालिदासस्तदीयालौकिकप्रतिभाबलेन

व्यासं वाल्मीकिश्चापि क्वचित् क्वचित् निष्प्रभं प्रत्यपादयत्। रामायणे महाभारते वा ये ये विषया अतिविशेषेण वर्णिताः सन्तः प्रायेण पाठकानां धैर्य्यच्युतिं विदधति, त एव कालिदासेन सनैपुण्यं सुतरां संशोधिताः। यावत्येव वर्णना पाठकानां हृदयग्राहिणी तावत्येव कालिदासेन विहिता। अतएव व्यास-वाल्मीक्यादीनां वर्णनायास्तस्य वर्णना समधिकं मनोहारिणी जाता। रामायणे महाभारते च येषां सविस्तरं वर्णनमस्ति कालिदासकाव्येषु तेषां संक्षिप्तनिर्देश एव। अपरन्तु रामायणे महाभारते वा येषां संक्षिप्तवर्णनं दृश्यते, कालिदासग्रन्थेषु तेषां परिपुष्टिरेव। अतएव नास्ति तुलनावसरः कोऽपि।

अपि च दृश्यते कवीनां कस्यापि कवे रचनाशक्तिर्मनोहारिणी, नतु सृष्टिचातुरी। अपरस्यापि वा कल्पनाशक्तिर्निरतिशयहृदयग्राहिणी, रचनाशक्तिर्न पुनः प्रशंसनीया। परन्तु कालिदासः उभयतः सुदक्ष एव। तदीया कल्पना रचना चाप्रतिहतगत्याक्लिष्टं धावतः।

स तु माहेन्द्रक्षणे तस्योपास्यदेवतायाः सार्थकमाराधनां विधायप्राणमत्—

"वीणा-रञ्जित-पुस्तकहस्ते! भगवति! भारति! देवि। नमस्ते"॥ इति

( क्रमशः )

---

# ब्रह्मसूत्र-मितभाष्यम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीचारुकृष्णदर्शनाचार्यः ]

न च ब्रह्मज्ञानाद् विश्वप्रलये ज्ञानिनः सर्वज्ञता घटते, छान्दोग्ये एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, अत्रापि "मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमि"त्युक्तम्, कारणब्रह्मज्ञानात् निखिलकार्यस्य ज्ञानं भवतीत्यर्थः, तत्त्वज्ञानाद् विश्वप्रलये रज्जुज्ञानात् सर्पज्ञानाभाववत् आत्मनि दृष्टे सर्वमिदं न विदितमित्येवावक्ष्यत्, न च रज्ज्वां ज्ञातायां सर्पज्ञो भवति किन्तु रज्जुज्ञः असर्पज्ञश्च, न च रज्जुः सर्पस्य

तत्त्वं किन्तु सर्प एव, न च रज्ज्वां सर्पो जायते इत्युक्तम्, अतो रज्ज्वां ज्ञातायां न सर्पतत्त्वज्ञो भवति किन्तु रज्जुतत्त्वज्ञ एव, यथाहुर्न्यायविदः "सत् सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवती"ति। यदि च ब्रह्मज्ञानात् सर्वप्रणाशे सर्वज्ञता तदा रज्जुज्ञानात् सर्पप्रणाशे सर्पज्ञोऽय-मित्यपि लोकेऽवक्ष्यत।

न च "कर्माणि विज्ञानमयश्च आत्मापरेऽव्यये सर्वं एकीभवन्ती"ति श्रुतिर्विश्वप्रलये मानमिति वाच्यं, सर्वशब्दस्य ब्रह्मपरत्वात् "अक्षरं वेदयते यस्तु सौम्य स सर्वज्ञः सर्वो भवति" "सर्वमेवाविवेश" इति श्रुत्यन्त-राभ्यां 'सर्वो भवति' ब्रह्म भवति "सर्वमेवाविवेश" ब्रह्म प्रविशतीत्यर्थः। 'ब्रह्म वेद ब्रह्मैव भवति' 'विशते ब्रह्मधामे'त्येकवाक्यत्वात्। महाभारतं च "सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्यय" इति भगवद्गीता च "सर्वं समाप्नोषि ततोऽसि सर्वः" इति। 'कर्माणि विज्ञानमयश्च आत्मा' इति कर्त्तृपदान्युक्त्वा परेऽव्यये इति वलयाधार उक्तः तत्प्रवाहपातित्वात् सर्वे इत्यपि सप्तम्यन्तम् आम्नायस्वाभाव्यात्. प्रथमान्तत्वे "गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु" इत्यपि नोपपद्येत सर्वेषां ब्रह्मण्येव प्रलयात्। विष्णुपुराणे च जीवस्यैव ब्रह्मणि प्रलयो दृश्यते न विश्वस्य "विष्ण्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयमि"ति। "एव-मेवास्य परिद्रष्टुरिमाः षोड़शकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" इत्यपि न ब्रह्मज्ञानात् विश्वप्रलयमाचष्टे 'स ईक्षणञ्चक्रे' इति श्रुत्या ईक्षणकर्त्तुः परमात्मनः प्राणादिसृष्टिमुक्त्वा प्रलयकाले नदीसमुद्रदृष्टान्तेन तत्रैव प्रलयमाह एवमेवेति, समुद्रे नद्य इव परिद्रष्टुः पूर्वोक्तेक्षणकर्त्तुः अस्य पुरुषस्य इमाः प्राणाद्याः षोड़श कलाः पुरुषायणाः पुरुषाश्रिताः पुरुषं प्राप्य स्वकारणपुरुषरूपतामासाद्य अस्तं गच्छन्ति प्रलीयन्ते इत्यर्थः, एतेन 'तं त्वा पुरुषं पृच्छामी'ति यस्त्वया पृष्टः पुरुषः स सृष्टिप्रलयकर्त्ता परमात्मेत्युत्तरं प्रदत्तम्, अत्रोपस्थितत्वात् परिद्रष्टा ईक्षणकर्त्ता परमा-त्मैव न तत्त्वदर्शी जीवोऽनुपस्थितत्वात्, अतोऽस्येति सम्बन्धषष्ठी, न

कर्मषष्ठीति बोध्यम् । आथर्वणे च नदीसमुद्रदृष्टान्तेन मुक्तौ विदुषो जीवस्यैव नामरूपत्यागेन ब्रह्मप्राप्तिरुक्ता, न विश्वस्य, "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथाविद्वान नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति, अत्र तु कलानामेव प्राणादीनां प्रलयो न जीवस्येति भेदः, प्रागुक्तविष्णुपुराणे च मुक्तस्य जीवस्यैव ब्रह्मणि लय उक्तः ।

एवञ्च न ब्रह्मज्ञानाद् विश्वप्रलयः, किन्तु आत्मविदः अज्ञवद् ब्रह्मणो विभक्ततया विश्वं न भासते परं ब्रह्माविभक्ततया, तथा च श्रुतिः "अत्र पिताऽपिता भवति माताऽमातेति, तथाहि "अथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीत्या"रभ्य विद्यादशा वर्णिता न सौषुप्ती, अतिच्छन्दाद्युक्तेः, अतिच्छन्दा निखिलकामातीतम् अपहतपाप्माऽशेषपापातीतमभयं रूपमात्मन एव न च स्त्रिया परिष्वक्त आन्तरं स्त्रीसुखमपि नानुसन्धत्ते, अतस्तत्त्वदर्शी आत्मसुखातिरिक्तमान्तरं मानसं विषयसुखं नानुसन्धत्ते इत्येव वाच्यं, आप्तकामत्वादिरूपं च ज्ञानिन एव भवति, न सुषुप्तस्य "योऽकामो निष्काम आप्तकाम आत्मकामः" "तरति शोकं तरति पाप्मानं" "तरति शोकमात्मविदि"ति श्रुतिभ्यः, अत्रैव बाह्याभ्यन्तरवस्तुजातस्य ब्रह्माविभक्ततामाह "अत्र पितेति, न च तदा पित्रादीनामभावः किन्तु सतामपि तेषां दर्शनाद्यभाव एव, तदुक्तं "यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति" इति, अत्र पश्यन्नित्युक्तेर्न पित्राद्यभावः, तर्हि किं ज्ञानाभावाददर्शनं ? नेत्याह "नहि द्रष्टुर्दृष्टेर्विपरिलोपो वर्त्ततेऽविनाशित्वादि"ति, जीवप्रकाशस्य नित्यत्वादित्यर्थः, किन्तु विद्याभावदशावत् ब्रह्मविभक्ततया तान् न पश्यतीत्याह "न तु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येदिति" अतः पित्रादीन् पश्यन्नपि न पश्यतीति, "उतत्वः पश्यन्न ददर्श वाचं उतत्वः शृण्वन् न शृणोत्येनामिति"वत् एकोऽज्ञः वेदवाक्यं पश्यन्नपि अर्थज्ञानाभावात् सम्यक् न पश्यति । अन्यः व्याकरणाभिज्ञोऽपि मीमांसाज्ञानाभावेन तात्पर्यज्ञानाभावात् वेदवाक्यं शृण्वन्नपि सम्यक्

न शृणोतीत्यर्थः। सुषुप्तिपरत्वे पश्यन्नित्यनुपपन्नं सुषुप्तस्य ज्ञानाभावात् "यदा न कस्यचन वेद" "नो एवेमानि भूतानि विनाशमेवापीतो भवती"ति श्रुतिभ्याम्, "न च सुषुप्तस्य ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्राय" इत्युक्तं परैरपि। तस्माद् विद्यादशापरमेवेदं प्रकरणम्, तथाच श्रुत्यन्तरं यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते"॥ इति, विभक्तेषु भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु घटशरावाद्यनुगतमृत्तिकावत् सर्वानुगतं ब्रह्म पश्यति सम्यग्दर्शीत्यर्थः। एवं हि "इदं सर्वं यदयमात्मा" "आत्मैवेदं सर्वम्" "सर्वं खल्विदं ब्रह्म" "नेह नानास्ति किञ्चने"त्याद्याः श्रुतयोऽपि सूपपन्नाः। नानात्वं चानेकत्वं "नानानेकोभयार्थयोरित्य"मरः, तच्च भवति भिन्नानामेव विभक्तानाम् अपेक्षाबुद्धिजन्यत्वात् तस्य ब्रह्मजगतोश्च तन्तुपटवत् कार्यकारणयोर्भेदाभावात् नानात्वाभावः, न च नेदं सर्वमित्युच्यते, किन्तु "आत्मैवेदं सर्वमि"ति। एवञ्च "अथात आदेशो नेति नेती"त्यपि न जगद्बाधपरं किन्तु प्रकृतैतावत्त्वप्रतिषेधपरमिति सिद्धान्तितमाचार्येणेति सुधीभिर्भाव्यम्।

(क्रमशः)

---

## छन्दोगक्रियासारः

(पूर्वानुवृत्तः)

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः ]

ततः प्राचीनावीतित्वादिक्रमेण पित्र्यब्राह्मणानभ्यर्च्य तेभ्यो जलं दत्त्वा "विष्णुरोम् अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मणः सपिण्डीकरणार्थम् अमुकगोत्रस्य पितामहस्यामुकदेवशर्मणः अमुकगोत्रस्य प्रपितामहस्य अमुकदेवशर्मणः अमुकगोत्रस्य वृद्धप्रपितामहस्यामुकदेवशर्मणः पार्वणविधिकश्राद्धं दर्भमयब्राह्मणेषु ब्राह्मणे वा अहं करिष्ये" इति प्रार्थयेत्। ३०

कुरुष्वेत्यनुमतिः। ततः प्रेतब्राह्मणमभ्यर्च्य तस्मै जलं दत्त्वा 'विष्णुरोम् अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मणः सपिण्डीकरणार्थम् अमुक-गोत्रस्य प्रेतस्यामुकदेवशर्मण एकोद्दिष्टविधिकसपिण्डीकरणश्राद्धं दर्भमय-ब्राह्मणेऽहं करिष्ये" इति प्रार्थयेत्। ॐकुरुष्वेत्यनुमतिः। ततः श्राद्धीयद्रव्य-प्रोक्षणम् उदकपात्रस्यैकदेशे स्थापनञ्च कुर्य्यात्। ततो दैवे प्राङ्मुखत्वादि-क्रमेण 'विष्णुरोम् एतद्दर्भासनं विश्वेभ्यो देवेभ्यः स्वाहा' इत्यनेन दर्भान् ब्राह्मण-दक्षिणपार्श्वे आसने दद्यात्। ततः प्राचीनावीतित्वादिक्रमेण 'विष्णुरोम् एतद्द-र्भासनं पितृभ्यः स्वधा' इत्यनेन पितृब्राह्मणवामपार्श्वे कुशान् दद्यात्। ततः प्रेतपक्षे ॐप्रेताय स्वधा' इत्यनेन प्रेतब्राह्मणवामपार्श्वे कुशान् दद्यात्। ततो दैवे उपवीतित्वादिक्रमेण यवानादाय 'ॐविश्वान् देवानावाहयिष्ये' इति पृच्छेत्। 'ॐआवाहय' इत्यनुज्ञातः ॐविश्वे देवास आगत शृणुताम इमँ हवमेदं बर्हिर्निषीदत। ॐविश्वेदेवाः शृणुतेमँ हवम्मे ये अन्तरीक्षे ये उपद्यविष्ठ ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्। 'ॐओषधयः संवदन्ते सोमेन सह राज्ञा यस्मै कृणोति ब्राह्मणस्त्वं राजने पारयामसि' इत्यावाह्य तूष्णीं यवान् विकिरेत्। ततः पितृपक्षे प्राचीना-वीतित्वादिना जलं स्पृष्ट्वा दक्षिणहस्तेन तिलान् गृहीत्वा ॐ पितॄना-वाहयिष्ये' इति पृच्छेत्। 'ॐ आवाहय' इत्यनुज्ञातः 'ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि उशन्नुशत आवह पितॄन् हविषे अत्तवे। ॐ एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्व्विणेभिर्दत्तास्मभ्यं द्रविणेह भद्रँ रयिञ्च नः सर्व्ववीरं नियच्छत। ॐ आयान्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैरस्मिन् यज्ञे स्वधया मदन्तोऽधि-ब्रुवन्तु ते अवन्त्वस्मान्' इत्यावाह्य 'ॐ अपहता असुरा रक्षाँसि वेदिषद' इति तिलान् विकिरेत्। एकोद्दिष्टे आवाहननिषेधात् प्रेतपक्षे आवाहनं नास्ति। तदङ्गभूतं तिलविकरणं सुतरामेव निवर्त्तते। ततो दैवे प्राग-ग्रदर्भोपरि ब्राह्मणसम्मुखे द्वे पात्रे। पितृपक्षे पित्रादिब्राह्मणसम्मुखे दक्षिणाग्रदर्भोपरि त्रीणि पात्राणि तथा प्रेतब्राह्मणसम्मुखे दक्षिणाग्रदर्भोपरि

एकम् अर्घ्यपात्रं स्थापयेत(१)। ततः 'ॐपवित्र स्थो वैष्णव्यौ' इत्यनखच्छिन्नं 'ॐ विष्णोर्मनसा पूते स्थ' इत्यनेन प्रोक्षितं प्रादेशमात्रं पवित्रं दैवादिक्रमेण एकैकस्मिन पात्रे एकैकं विन्यस्य, तथा प्रेतपक्षे ॐपवित्रासि वैष्णवी' इत्यनखच्छिन्नं, 'ॐ विष्णोर्मनसा पूतमसि' इत्यनेन प्रोक्षितं पवित्रमेकं विन्यस्य तेषु प्रत्येकं 'ॐ शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये शं ँयोरभि स्रवन्तु नः' इत्यनेन जलमासिञ्चेत्। ततो दैवे ॐयवोऽसि यवया-स्मद्द्वेषो यवयारातीः' इत्यनेन एकैकस्मिन् पात्रे यवानावपेत। ततः पित्र्ये 'ॐ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्म्मितः प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान प्रीणाहि नः स्वाहा' इत्यनेन प्रतिपात्रं तिलानावपेत्। ततः प्रेतपात्रे 'ॐ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्म्मितः प्रत्नमद्भिः पृक्तः स्वधया प्रेतान लोकान् प्रीणाहि नः स्वाहा' इत्यनेन तिलानावपेत्। ततो दैवादिक्रमेण अर्घ्यपात्रेषु तूष्णीं गन्धपुष्पादिकं दत्त्वा दैवे 'ॐया दिव्या आपः पयसा संबभूवुर्या अन्तरीक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा भवन्तु" इत्युच्चार्य 'विष्णुरोम् पुरुरवो-माद्रवःसंज्ञका विश्वेदेवा एतत्तेऽर्घ्यं स्वाहा' इत्युत्सृज्य ब्राह्मणहस्ते प्रागग्रं पवित्रं दत्त्वा जलादिकं प्रतिपादयेत। ततो दक्षिणामुखत्वादिक्रमेण पितामहार्घ्यपात्रं गृहीत्वा 'ॐ या दिव्या आपः पयसा संबभूवुर्या अन्तरीक्षा

---

(१) "तदहश्चत्वार्य्युदकपात्राणि सतिलगन्धोदकानि पूरयित्वा"। १४ इति श्राद्धसूत्रम्।

"त्रीणि पितॄणामेकं प्रेतस्य"। १५। इति श्राद्धसूत्रम्।

अत्रार्घ्यपात्राणां चतुष्ट्वविधानात् मातामहपक्षोऽत्र नास्ति। तथाच छन्दोग-परिशिष्टम्।—

"कर्षूसमन्वितं त्यक्त्वा तथाद्यं श्राद्धषोडशम्।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः॥ इति।

भविष्यपुराणे च,—

गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्र-चतुष्टयम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्।" इति

उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्योनाः सुहवा-भवन्तु' इत्युच्चार्य्य 'विष्णुरोम् अमुकगोत्र पितामहामुकदेवशर्म्मन् एतत्तेऽर्घ्यं ये चात्र त्वामनु या ४श्च त्वमनु तस्मै ते स्वधा' इत्युत्सृज्य जलं स्पृष्ट्वा एवंक्रमेण जलस्पर्शपूर्वकं प्रपितामहवृद्धप्रपितामहयोरपि अर्घ्यमुत्सृज्य प्रेतस्यार्घ्यमुत्सृजेत्। यथा 'ॐ या दिव्या आपः पयसा संबभूवुर्या अन्तरीक्षा उत पार्थिवीर्या हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शं स्यो नाः सुहवा भवन्तु' इत्युच्चार्य्य 'विष्णुरोम् अमुकगोत्र प्रेत अमुकदेवशर्म्मन् एतत्ते अर्घ्यं स्वधा' इत्युत्सृज्य पितृपक्षीयार्घ्यपात्रस्थाणि पवित्राणि उत्तराग्राणि यथाक्रमं पितामहादिब्राह्मणेभ्यः प्रतिपाद्य प्रेतार्घ्यपात्रस्थमपि पवित्रम् उत्तराग्रं प्रेतब्राह्मणाय प्रतिपादयेत्। ततः पित्र्यार्घ्यपात्रीयजलादिकं पितामहादिब्राह्मणेषु प्रतिपाद्य प्रेतार्घ्यपात्रस्थमुदकं त्रिधा विभज्य तेषा-मेकैकं भागं "ॐ ये समानाः समनसः पितरो यमराज्ये।

(क्रमशः)

---

## वृत्तवर्तिका

हालिसहरपल्लीप्रान्ते भागीरथीतीरे परमपवित्रे पदे प्रतिष्ठितस्य सारस्वतमठस्याङ्गरूपेण एकः संस्कृतविद्यालयः स्थाप्यते, यत्र नियमेन संस्कृतशास्त्राणामध्यापना भविता। महामहिम्नां तपःसिद्धमहापुरुषाणां सारस्वतमठप्रतिष्ठापकानां श्रीनिगमानन्दस्वामिपादानां संस्कृतविद्यायां सुगभीरा श्रद्धा समवर्त्तिष्ट। वर्त्तमानमठाध्यक्षाः श्रीसत्यानन्दस्वामि-पादास्तत एव संस्कृतविद्यालयस्य आश्रमाङ्गरूपेण प्रतिष्ठार्थमत्यर्थमाग्रहं पुष्णन्तो विद्यालयोपयोगिगृहनिर्माणं विधेयं मत्वा तदर्थं प्रयतन्ते। एतावता कालेन सारस्वतमठनाम्नः सार्थक्यबुद्ध्या वयं मोदामहे।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1949)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As. 14 ; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24 **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. No. 9. ३३श-वर्षस्य ९म-संख्या

January 1951 १८७२-शकीये पौषे मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६).
Foreign price—14s.

## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सद्यं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामबाजार
कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIII. No. 9. | १८७२-शकीये पौषे ३३श-वर्षस्य ९म-संख्या | January 1951. |
|---|---|---|


## पौषमङ्गलम्

वर्षादुत्तरमागतः सुखमयो लोके गृहस्थप्रियः
पौषः पोषकरः सुशस्यकलितः कल्याणमुल्लासयन् ।
सम्प्राप्ता परिपक्वशस्यनिवहं दृष्ट्वा गृहस्थावली
सौभाग्यं मनुते फलैरनुगतं मासेष्वयं भूतिमान् ॥

बाह्येन शैत्येन विधूयमानः
कौक्षं हुताशं समवाप तापः ।
नवीनशस्यप्रभवाणि तस्मात्
खाद्यानि नाना न रुजे नराणाम् ॥

संक्रान्तिरस्मात् परमौत्तरायणी
यस्यां भवत्युत्तमपिष्टकोत्सवः ।
गृहे गृहे यत्र कुलाङ्गनागणः
करोति नानाविधपिष्टकावलीम् ॥

बालाः प्रहृष्यन्ति तथैव वृद्धा
निमन्त्रितो नन्दति बन्धुवर्गः ।

गन्धः प्रसर्पन्नभितः प्रमोदी
चित्तं समाकर्षति मानवानाम् ॥
तामेव पौषोत्थविनोदधारां
संलक्ष्य लोके प्रथितः प्रवादः ।
कस्यापि भाग्यादिह पौषमासः
कस्यापि वा दीव्यति सर्वनाशः ॥
एवं चिरं सन्तु गृहस्थगेहे
भोज्यानि वस्तूनि सुखप्रदानि ।
मा भूत् कदाचित् तदभावदुःखं
स्वर्गायतां भूमिरियं समग्रा ॥

---

## मासप्रकृतिः

यस्य चान्द्रमासस्य प्रायेण पुष्यानक्षत्रयुतपूर्णिमायामन्तो दृश्यते स चान्द्रपौष इत्याख्यायते। सूर्यस्य धनूराशिस्थितिकाल एव तस्य सम्भवात् स कालः सौरपौषसंज्ञयापि अभिधीयते। अस्मिन् मासे जातकर्मादिसंङ्कल्पवाक्येषु 'पौषे मासि धनूराशिस्थे भास्करे' इत्येवं मास-समुल्लेखः कार्यः। अस्मिन् मासि नियमेन श्रीश्रीलक्ष्मीपूजनं कर्त्तव्यं गृहस्थैः। अत्र च सौरपौषस्य चतुर्थदिवसे अखण्डदानं द्वादशीव्रतं षोड़शे दिवसे पूपाष्टकाश्राद्धम् एकोनत्रिंशदिवसे दधिसंक्रान्तिव्रतञ्च सम्पद्येरन्। अष्टमे दिवसे गोस्वामिसिद्धान्तानुसारेण कात्यायनीव्रत-समापनम्। नवमे दिने दिनवृद्धिमहोत्सवः। द्वादशे दिवसे गौड़ीय-वैष्णवमठप्रतिष्ठापकानां श्रीभक्तिसिद्धान्तसरस्वतीगोस्वामिनां तिरोभाव-महोत्सवः। पञ्चदशे दिवसे श्रीश्रीरामकृष्णपरमहंसदेवपत्न्याः श्रीश्रीसारदादेव्याः श्रीमातेति प्रसिद्धाया जन्मतिथिमहोत्सवः। षोड़शे

दिवसे इङ्गराजीयवर्षारम्भः। विंशदिवसे श्रीमहेशपण्डितस्य तथा श्रीमद्-उद्धारणदत्तस्य तिरोभावोत्सवः। एकविंशाहे श्रीपुरुषोत्तमठाकुरस्य तथा द्वाविंशाहे श्रीमाधवाचार्यगोस्वामिनस्तिरोभावमहोत्सवः। पञ्च-विंशाहे श्रीजीवगोस्वामिनः आविर्भावमहोत्सवः। एकोनत्रिंशे दिवसे सूर्यस्य मकरराशिसंक्रमादुत्तरायणसंक्रान्तिः। तस्मिन् दिने 'मेहार'-कालीभवने सर्वानन्दमठाख्ये श्रीश्रीसर्वानन्दठाकुरस्य स्मृतिमहोत्सवः श्रीजयदेवगोस्वामिनस्तिरोभावमहोत्सवश्च। श्रीश्रीगङ्गाया आविर्भाव-मुपलक्ष्य सागरसङ्गमे स्नानम्। आद्यापीठे दक्षिणेश्वरवर्तिनि सिद्धोत्-सवश्च। अस्मिन्नुत्तरायणसंक्रान्तिदिवसे गृहस्थगृहेषु नानाविधपूपादिखाद्य-प्रबन्धो भवति।

अस्मिन् मासे जातो जनः पितृवित्तहीनो मन्त्रकुशलो विधिज्ञश्च भवति। अत्र मासे विवाह-गृहारम्भ-गृहप्रवेशादिकृत्यानि निषिद्धानि। अत्र कर्कटतुलाकुम्भमीनराशिजातानां त्रयोदशदिनात् परञ्च मेषकर्कटसिंह-तुलावृश्चिककुम्भमीनराशिषु जातानां रविशुद्धिः। मेषमिथुनसिंहतुला-मकरराशिजातानां गुरुशुद्धिः।

अत्र जाठरो वह्निः प्रबलो भवति। अत एव यथासम्भवघृतादिपुष्टि-करद्रव्यभक्षणं योग्यम्। आतपसेवनादिकमप्यत्र कर्तव्यम्।

---

## मतिमञ्जरी

पौषे मासि नियमेन प्रतीच्यप्रवर्त्तितजानुयारीमासप्रारम्भादिसम-न्वयादत्रैव सुचिरात् प्रभृति खृष्टधर्मावलम्बिनां दिनवृद्धिमहोत्सवो दृश्यते, श्रूयते च परम्परया। दिनवृद्धिरियं यद्यपि कृत्यविधानेषु सर्वेषामेवोप-कुरुते तथापि भारतीयैरन्यैश्च नानुष्ठीयते तदधीनो महोत्सवः किन्तु केवलं खृष्टधर्मावलम्बिभिरेवेत्यत्र को नाम कारणविशेष इति सावधानं चिन्त-

नीयम्। अत्र वयं विचारयामः,—प्रतीच्यप्रदेशः सुतरां कर्मप्रवणः, प्रशस्तः कर्मकालश्च दिवस एव, न विभावरी। अतः कर्मकालस्य यावदेव वृद्धि-स्तावदेव तत्रत्यानामानन्दः। खृष्टधर्मावलम्बिनामेव स देशः प्रभव इति खृष्टधर्मावलम्बिनामेवायं दिनवृद्धिमहोत्सवः प्रवृत्तः। किञ्च न केवलं दिनवृद्धिमधिकृत्यैव महोत्सवोऽयं प्रवर्तते, किन्तु प्रतीच्यप्रदेशीयप्रधानतम-धर्मप्रवर्तकस्य महामहिम्नः खृष्टस्य जन्मदिनमेव प्राधान्येन समधिकृत्येति। तदत्र तेषामेव प्रतीच्यदेशप्रभवाणां खृष्टधर्मावलम्बिनामयमुत्सवः प्रधान-तयानुष्ठेय इति। वस्तुतस्तु दिनवृद्धिसमारम्भमधिकृत्य कर्तव्यः किला-स्माभिरपि महोत्सवः। कर्मप्रियाणां नितरामभ्युदयमाकाङ्क्षतां निशा-पेक्षया दिवसस्यैव कृत्येषु विशेषोपयोगात्। किञ्च प्रकाशमयावस्था काम्यतमा सर्वेषाम्। अनिष्टमन्धतमसं सर्वस्य। तत्र हि सत्स्वपि लोचनेषु नावलोक्यन्ते दृश्यतत्त्वानि। तत एव यदा प्रकाशमयं दिनं वृद्धिं लब्धुमारभते, युज्यत एव तत्र महानुत्सव इत्यत्र किंवा बहु वक्तव्यम्। परं न वयं तथा कर्मनिष्ठा, नापि प्रकाशमयावस्थायामेकान्तानुरागिणो, विरागवन्तश्च तिमिरसङ्घाते। तत एव तादृशमुत्सवं न बहुमन्यामहे। विदधातु भावपरावृत्तिमस्माकं भगवान् भूतभावनः सानुकम्पः। प्रवर्तता-मस्मासु प्रभूतहितयोगः। इदमत्र विशेषेण समालोचनीयं यत् दिनवृद्धि-महोत्सवस्यास्य वृद्धिस्तु सुदूरापेता, यथापूर्वं रक्षणविधावपि नानुकूल्य-मनुष्ठितं स्वतन्त्रराष्ट्राधिकारेण, यतः तदवसरे कृतमवकाशलाघवं कृत्य-व्यवस्थालयादीनाम्। तदत्र देशजनताया दृष्टिमाकर्षामः।

# छन्दोगक्रियासारः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः ]

तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् । ॐ ये समानाः समनसः जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिन लोके शतं समाः" इति मन्त्राभ्यां प्रत्येकं पितामहादिपात्रेषु सिञ्चेत । (२) ततः प्रथमं पितामह-पात्रे प्रपितामहपात्रसंस्रवं मिश्रयित्वा पश्चाद् वृद्धप्रपितामहपात्रस्थसंस्रवं मिश्रयेत । ततः पितामहपात्रं स्ववामे भूमौ ॐ "शुन्धन्तां लोकाः पितृसदनाः पितृसदनमसि, पितृभ्यः स्थानमसि" इत्यनेन न्युब्जं कुर्य्यात् (४) ततो दैवे प्राङ्मुखत्वादिना देवब्राह्मणाय तूष्णीमुदकं दत्त्वा 'विष्णुरोम् विश्वेदेवा असावेतत्ते यवोदकं स्वाहा' इत्यनेन अनिषिद्धपात्रे दद्यात । ततः पितृपक्षे दक्षिणामुखत्वादिना ब्राह्मणेभ्यतूष्णीमुदकं दत्त्वा विष्णुरोम् अमुकगोत्र पितामहामुकदेवशर्म्मन् अमुकगोत्र प्रपितामहामुकदेवशर्म्मन् अमुकगोत्र वृद्धप्रपितामहामुकदेवशर्म्मन असावेतत्ते तिलोदकं ये चात्र त्वामनु यां श्च त्वमनु तस्मै ते स्वधा' इत्यनेनानिषिद्धपात्रे दद्यात । ततो जलं स्पृष्ट्वा प्रेतब्राह्मणाय तूष्णीमुदकं दत्त्वा 'विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन् असावेतत्ते तिलोदकं स्वधा' इत्यनेन पात्रे दद्यात । ततो दैवादिक्रमेण उक्तरीत्या तिलोदकवद् गन्धोदकमपि दातव्यम् । अभिलापवाक्ये तिलोदकस्थाने गन्धोदकं प्रयोक्तव्यमिति विशेषः । ततो दैवे प्राङ्मुख-त्वादिना 'विष्णुरोम् विश्वेदेवा असावेतानि ते गन्धपुष्पधूपदीपाच्छादनानि स्वाहा' इत्युत्सृज्य प्रत्येकं गन्धादीन् ब्राह्मणाय अमन्त्रकं प्रतिपादयेत् ।

---

(२) "प्रेतपात्र' पितृपात्रेष्वासिञ्चति,—ये समानाः पितरो यमराज्ये । तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् । ये समानाः समनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः"। इति १६ श्राद्धसूत्रम् ।

ततः पितृपक्षे दक्षिणामुखत्वादिना 'अमुकगोत्र पितामहामुकदेवशर्म्मन् अमुकगोत्र प्रपितामहामुकदेवशर्म्मन् अमुकगोत्र वृद्धप्रपितामहामुकदेवशर्म्मन् असावेतानि ते गन्धपुष्पधूपदीपाच्छादनानि ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा' इत्युत्सृज्य प्रत्येकं गन्धादीन् अमन्त्रकं ब्राह्मणेभ्यः प्रतिपादयेत्। (प्रथमं गन्धान् प्रतिपाद्य पश्चात् पुष्पादयः प्रतिपादयितव्या इति)। ततः प्रेतपक्षे गन्धादीनादाय विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन्नसावेतानि ते गन्धपुष्पधूपदीपाच्छादनानि स्वधा' इत्युत्सृज्य प्रेतब्राह्मणाय तथैव गन्धादीन् प्रतिपादयेत्। ततो दैवादिक्रमेण ब्राह्मणाग्रस्थितं कुशादिकमपनीय दैवे ऐशानीमारभ्य जलधारया दक्षिणावर्त्तेन प्रागग्रचतुष्कोणमण्डलं कृत्वा पित्र्ये नैर्ऋतीमारभ्य वामावर्त्तेन जलधारया दक्षिणाग्रं चतुष्कोणमण्डलं कृत्वा प्रेतपक्षेऽपि तथैव मण्डलं कुर्य्यात्। तत्र तत्र भोजनपात्राणि पातयेत्। (क्रमशः)

---

## नवसूक्तिमालिका

कदापि कैश्चित् सविधे शिशूनां न दुर्वचः किञ्चन भाषणीयम्।
शिक्षा यथा दुर्वचसां न तेषां पित्रादिरेषां चरिते नियन्ता॥
बाल्ये प्रपश्यन्ति यदेव बालाः शृण्वन्ति वा यादृशवाक्यजातम्।
तद्गोचरा एव भवन्ति तेषां संस्कारधाराः सुदृढप्रसाराः॥
सुकोमलं चित्तपदं शिशूनां यथैषणं वर्त्तयितुं सुशक्यम्।
बाल्यात् परं कोमलतापयाने नैवान्यथा भावमुपैति चेतः॥
बाल्ये ततो लोकगणस्य शिक्षा शास्त्रोपदिष्टा शुभसिद्धिहेतोः।
मेधा प्रशस्ता प्रतिभाति बाल्ये यया चिरं चित्तगतं समस्तम्॥
ये बालभावस्य तथा प्रभावं स्वकृत्यकाले न विचारयन्ति।
तेषां सुता दुष्कृतलग्नचित्ताः काले विषादाय भवे भवन्ति॥

---

श्रीभरतसेन-विरचितं

# सुखलेखनम्

[ श्रीरामधनशास्त्रिणा टिप्पण्यादिभिरुपस्कृतम् ]

श्रीकृष्णाय नमः ॥

[ ग्रन्थकृतो मङ्गलाचरणम् ]

सविद्युच्छारदाम्भोद-प्रभाभाजं धृताद्रिजम् ।
शम्भुं प्रणम्य भरतः कुरुते सुखलेखनम् ॥१॥

[ ग्रन्थारम्भप्रयोजनम् ]

यत्नेनाल्पेन विज्ञातुं षत्वादीच्छति[1] यो जनः ।
तस्य मानसमानन्दमुत्पादयतु मत्कृति[ः] ॥२॥

[ षत्व-विधिः ]

(१)इचो रेफात् ककाराच्च सः कृतः साद्विवर्जितः ।
अपदान्ते व्रजेत् षत्वं रामेषु वार्षु वक्ष्यति ॥३॥

---

१ । "नामिकरपरप्रत्ययविकारागमस्थः सिः षन्नुविसर्जनीयषान्तरोऽपि" [चतुष्टये कारकप्र०, सू० २५३] इति शर्ववर्माचार्याणां "किलात् कृतोऽसात् सः षोऽदान्ते नुव्यन्तरेऽपि शासवसघससाढाञ्च" [ अजन्तपु०, सू० १११ ] इति च वोपदेवानां षत्वविधायकसूत्रम् । एतद्धि षत्वसाधारणम् । विशेषस्तु यथास्थानमुन्नेयः ।

---

1 Ms. ०न्ति

ततः पितृपक्षे दक्षिणामुखत्वादिना 'अमुकगोत्र पितामहामुकदेवशर्म्मन् अमुकगोत्र प्रपितामहामुकदेवशर्म्मन् अमुकगोत्र वृद्धप्रपितामहामुकदेवशर्म्मन् असावेतानि ते गन्धपुष्पधूपदीपाच्छादनानि ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा' इत्युतसृज्य प्रत्येकं गन्धादीन् अमन्त्रकं ब्राह्मणेभ्यः प्रतिपादयेत्। (प्रथमं गन्धान् प्रतिपाद्य पश्चात् पुष्पादयः प्रतिपादयितव्या इति)। ततः प्रेतपक्षे गन्धादीनादाय विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन्नसावेतानि ते गन्धपुष्पधूपदीपाच्छादनानि स्वधा' इत्युतसृज्य प्रेतब्राह्मणाय तथैव गन्धादीन् प्रतिपादयेत्। ततो दैवादिक्रमेण ब्राह्मणाग्रस्थितं कुशादिकमपनीय दैवे ऐशानीमारभ्य जलधारया दक्षिणावर्त्तेन प्रागग्रचतुष्कोणमण्डलं कृत्वा पित्र्ये नैर्ऋतीमारभ्य वामावर्त्तेन जलधारया दक्षिणाग्रं चतुष्कोणमण्डलं कृत्वा प्रेतपक्षेऽपि तथैव मण्डलं कुर्य्यात्। तत्र तत्र भोजनपात्राणि पातयेत्। (क्रमशः)

---

## नवसूक्तिमालिका

कदापि कैश्चित् सविधे शिशूनां न दुर्वचः किञ्चन भाषणीयम्।
शिक्षा यथा दुर्वचसां न तेषां पित्रादिरेषां चरिते नियन्ता॥
बाल्ये प्रपश्यन्ति यदेव बालाः शृण्वन्ति वा यादृशवाक्यजातम्।
तद्गोचरा एव भवन्ति तेषां संस्कारधाराः सुदृढ़प्रसाराः॥
सुकोमलं चित्तपदं शिशूनां यथैषणं वर्त्तयितुं सुशक्यम्।
बाल्यात् परं कोमलतापयाने नैवान्यथा भावमुपैति चेतः॥
बाल्ये ततो लोकगणस्य शिक्षा शास्त्रोपदिष्टा शुभसिद्धिहेतोः।
मेधा प्रशस्ता प्रतिभाति बाल्ये यया चिरं चित्तगतं समस्तम्॥
ये बालभावस्य तथा प्रभावं स्वकृत्यकाले न विचारयन्ति।
तेषां सुता दुष्कृतलग्नचित्ताः काले विषादाय भवे भवन्ति॥

---

विष्णुसात्(१) [का]ऽपि प्राड्षु यवलाश्चेति केचन ।
तुरङ्गमयूषु वृक्षवृषु सुवल्ष्वि[1]त्येवमादयः(२) ॥४॥

अनुस्वारविसर्गाभ्यां व्यवधाने[ऽ]पि षेण[2] च ।
यथा सर्पींषि सर्पि[ः]षु पेपेष्षि[3](३)न तु पुंस्विह(४) ॥५॥

---

१। षत्वविधायकसूत्रे "असादि"ति निर्देशाद् वोपदेवमतेऽत्र षत्वाभावः स्पष्टः। "सात्पदाद्योः" [ अ० ८। पा० ४। सू० १११ ] इति पुनः पाणिनिः। "न सात्कुसुरधूसरादिषु" [ षत्वप्र०, सू०, ४१ ] इति चाह श्रीपतिः।

२। कातन्त्रमते 'तुरङ्गमयूषु' इत्याद्युदाहरणं सूत्रप्राप्तमेव। यदुक्तं "नामिकरपरे"त्यादिसूत्रव्याख्यानावसरे सुषेणेन "ननु पञ्चमीनिर्देशेनैव सिध्यति, किं परग्रहणेन ? सत्यं, परग्रहणमधिकद्योतनार्थं, तेन ककारेण कवर्गत्वं रेफेण चान्तस्थोपलक्ष्यते। यथा प्राड्षु, हल्षु" [चतुष्टये कारकप्र०, सू० २५३ ] इति। श्रीपतिः पुनरत्र "तद्वत् खङन्तस्थाभ्यः" [ षत्वप्र० सू० २ ] इति पृथक् सूत्रं चकार। दुर्गादासोऽपि [ अजन्तपु०, सू० १११ ] एवमेवोदाजहार।

३। दुर्गादासेनापीह तोतोष्षि पेपेष्षि [ अजन्तपु०, सू० १११ ] इत्युदाहृतम्।

४। अत्र "नुरिह नुगणयमादावित्यादिना विहितो नुगणेव, न त्वनुस्वारः। अन्यथा 'पुंसु' इत्यादावपि षत्वापत्तेः" [ अजन्तपु०, सू० १११ ] इत्याह दुर्गादासः।

---

1 Ms. तुरङ्गमयषु वृक्षवषु सुवल्ष्वि०

2 Ms. सेन

3 Ms. पेपेष्वि

घसिशासिवसीनाञ्च जक्षुः शिष्टं यथोषितम्(१)।
स्तौतेरेव सनः[1] षत्वे तुष्टूषति सुसुषति(२) ॥६॥

सह-स्विद-स्वदान् त्यक्त्वा ण्येः परे विहिते सनि।
यथा सुष्वापयिषति(३) सिसाहयिषतीह न (४) ॥७॥

तादितद्धितयुक्तश्च[2] ह्रस्वात् सर्पिष्टरं यथा।
सर्पिष्ट्वमथ[3] सर्पिष्टा दीर्घायुष्ट्वं[4] चतुष्टयम् ॥८॥

---

१। "शासिवसिघसीनां च" [ अ० ८। पा० ३। सू० ६० ] इति पाणिनिः। वोपदेवमते सूत्रे [ अजन्तपु०, सू० १११ ] "शासादेश्च" इति निर्देशात् षत्वसिद्धिः। अत एवोक्तं दुर्गादासेन [ अजन्तपु०, सू० १११ ] "शास्वसुघसां पृथग् ग्रहणाद् अकृतोऽपि सकारः किलात् परः षः स्यात्। यथा—शिष्टः, उषितः, जक्षतुः" इति।

२। "स्तौतिण्योरेव षण्यभ्यासाद् यथा स्यादन्यस्य मा भूत्। सिसिक्षति, सुसूषति" [ अ० ८। पा० ३। सू० ६१ ] इति जयादित्यः। "ण्यन्त-स्तौतिभिन्नत्वान्मूलधातोर्न षत्वम्। एवं सुसूषतीत्यादि" [ सनन्तप्र०, सू० ८१६ ] इति च दुर्गादासः।

३। ञि ष्वप् शये इति हि ष्वप्धातुर्ण्यन्तः। ण्यन्तत्वादत्र षत्वप्राप्तिः।

४। अत्र निषेधविधौ "सः स्विदिस्वदिसहीनां च" [ अ० ८। पा० ३। सू० ६२ ] इति पाणिनिः। "इनि स्विदिस्वदिसहां सनि" [ षत्वप्र०, सू० ५१ ] इति श्रीपतिः। "ञिस्त्वोः खेः सः षः षण्यस्वित्सदसहः" [ सनन्तप्र०, सू० ८१६ ] इति च वोपदेवः।

---

1 Ms. ०रेव षनः　　2 Ms. ०तद्धिततस्ते श्च
3 Ms. ०ष्टमश्च　　4 Ms. दीर्घायुष्टं

दीर्घायुष्टो[ऽ]पि (१) दीर्घात्तु गोस्तरा गोस्त्व[मि]त्यपि[1](२) ।
न त्यादेस्तु यथा दद्युस्त[रां] भिन्द्यु[2]स्तमामिति(३) ॥९॥
भीरो[ः] समासे स्थानस्य भीरुष्ठानं[3](४)स्तुतोऽग्नितः ।
सोमस्याग्नीपरस्याग्निष्टुदग्नीषोमकावपि(५) ॥१०॥

---

१ । "ह्रस्वात्तादौ तद्धिते" [अ०८। पा०३। सू०१०१] इति पाणिनिः । तत्र "तादौ" इत्यस्य व्याख्यायां "तर-तम-तय-त्व-तल्-तस्-त्यप् एतानि" इत्याह जयादित्यः । "ह्रस्वात्तादौ तद्धिते नाम्नः" [षत्वप्र०, सू० २२] इति च श्रीपतिः ।

२ । अत एवाह जयादित्यः "ह्रस्वादिति किं गीस्तरा धूस्तरा" [ अ० ८। पा० ३। सू० १०१] इति । श्रीपतिरपि "ह्रस्वादि"त्यस्य व्यावृत्तिपक्षे "गोस्त्वम्" [ षत्वप्र०, सू० २२ ] इत्युदाजहार ।

३ । "तिङन्तस्य प्रतिषेधो वक्तव्यः । भिन्द्युस्तराम्, छिन्द्युस्तराम्" इति जयादित्यः [ अ० ८। पा० ३। सू० १०१ ]। श्रीपतिनापि "कुर्य्युस्तरां, दद्युस्तराम्" इत्युदाहृतम् [ षत्वप्र०, सू० २२ ] ।

४ । "भीरोः स्थानम्" [ अ० ८। पा० ३। सू० ८१ ] इति पाणिनिः । "भीरोः स्थानस्य" [ षत्वप्र०, सू० ४ ] इति श्रीपतिः । "अग्नयङ्गुलि-भीरुभ्यः स्तुत्सङ्गस्थानानां से" [ अजन्तपु०, सू० १११ ] इति च वोपदेवः । निषेधपक्षे च "भीरु स्थानं पश्य" इत्युदाहृतं दुर्गादासेन ।

५ । अत्र "अग्नेःस्तुत्स्तोमसोमाः" [ अ० ८ । पा० ३ । सू० ८२ ] इति पाणिनिः । "अग्नेः स्तुतः" तथा "दीर्घात् सोमस्य" [ षत्वप्र०, सू० ५-६ ] इति श्रीपतिः । "अग्न्यङ्गुली"त्यादि तथा "र्घान्तादग्नेः परस्य सोमस्य सः षः स्यात् समासे" [ अजन्तपु०, सू० १११ ] इति चाह दुर्गादासः ।

( क्रमशः )

---

1 Ms. गोस्त इत्यपि 2 Ms. भिद्यु० 3 Ms. भीरोष्ठान

# ग्रन्थसमालोचनम्

चतुःश्लोकीभागवतम् ।—पाश्चात्यवैद्यविद्यायामनवद्यविद्योतेन विपश्चित्-प्रवीणेन श्रीयुक्तहरप्रसन्नभट्टाचार्यमहोदयेन स्वकृतसंस्कृतभाषामयसुगमान्वयमुखव्याख्या-वङ्गभाषामयमूलानुवादवङ्गभाषामयविश्वनाथचक्रवर्तिटीका-व्याख्यानादिभिरलङ्कृत्य सुसम्पादितं कलिकातास्थश्यामवाजारान्तर्गत-कृष्णरामवसुवर्त्मस्थैकादशसंख्यकभवनाद् ग्रन्थसम्पादकेनैव प्रकाशितं चतुःश्लोकीभागवतं निपुणमवलोकितमस्माभिः। भगवान पद्मनाभः श्रीनारायणः समग्रश्रीमद्भागवततत्त्वसारं चतुर्भिः श्लोकैः पितामहसमीपे प्रोवाच। तदिदं श्लोकचतुष्टयं श्रीमद्भागवतस्य द्वितीयस्कन्धे नवमाध्याये समुपलभ्यते। यथा—

अहमेवासमेवाग्रे नान्यद् यत् सदसत परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥

इत्यादि। तत एव श्रीमद्भागवतस्य चतुःश्लोकीभागवतमिति संज्ञा। तदेतत सम्पादकेन भट्टाचार्यमहोदयेनापि समुट्टङ्कितं वङ्गभाषामयग्रन्थ-भूमिकायाम्। समग्रं भागवतञ्च निरुक्तचतुःश्लोक्या एव भाष्यभूतम्। तस्य श्रीमद्भागवतस्य अष्टमाध्याये राजा परीक्षिद् भगवन्तं शुकदेवं प्रति कतिपयप्रश्नानकरोद् भगवत्तत्त्वमधिकृत्य, नवमाध्याये च तेषामेव प्रश्नानां स्फुटमुत्तरं प्रवर्त्तयामास श्रीशुकदेवः। सम्पादकः श्रीभट्टाचार्य-महोदयस्तदध्यायद्वयं टीकानुवादादिभिः सुसंस्कृत्य विपश्चितां भगवत्तत्त्वं विविदिषतां तथा भागवतभक्तिपूतचेतसां परीक्षणाय सन्तोषणाय विशेष-विज्ञानाय च सादरमुपायनीचकार।

अत्र हि श्रीमता भट्टाचार्येण श्लोकानामन्वयमुखव्याख्याविधौ श्लोकस्थ-पदानां सम्यक् प्रतिसंस्कारेण स्फुटमर्थानां प्रकटनात कौशलं सुविशाल-मात्मनः प्रत्यपादि। विश्वनाथकृतटीकायाः प्रतिपदं वङ्गभाषामयसमार्थक-वाक्यप्रयोगादिना विशेषविवरणोपन्यासेन प्रदर्शितमसाधारणं पाण्डित्यम्।

विशेषतश्च विश्वनाथटीकामनुसृत्य पृथक्तया वङ्गभाषामयसुविस्तृतस्फुट-व्याख्यानोपन्यासेन न केवलं दर्शितमात्मनो दर्शनशास्त्रादिषु परं प्रावीण्यं किन्तु विलक्षणभक्तिशालित्वमपि। तद् व्याख्यानमालोचयतां समुपजातेन महता तत्त्वविज्ञानेन विलीयते चैत्तं मालिन्यं, दीप्यते निर्मला भगवद्भक्तिः, सहैव च परमानन्दः। वयमेतावत्कालं श्रीमतो भट्टाचार्यस्य वैद्यकविद्यया जनिमतां बाह्यरोगनिवर्त्तन एव महत् सामर्थ्यं प्रति विश्वस्ताः साम्प्रतमनेन तात्त्विकग्रन्थस्य सुसंस्कृतस्य प्रकाशनेन नितरामान्तररोगनिवर्त्तनेऽपि दृष्टसामर्थ्याः परं विस्मिता आस्महे।

श्रीमतो भट्टाचार्यस्य तातपादाः पण्डितप्रकाण्डा जगच्चन्द्रशिरोरत्न-महोदयाः पितृव्यपादाश्च पण्डितकुलललामभूता महामहोपाध्यायदुर्गाचरण-सांख्यवेदान्ततीर्थमहोदयाः; तदेवं प्रशस्ताभिजनस्यास्य नितरामनुरूप एव तादृशः समुत्कर्षः। तदस्य ग्रन्थस्य भूयसा प्रचारेण जगतः प्रभूतं कल्याणं कामयामहे समाशास्महे च श्रीमतो भट्टाचार्यस्य तादृशग्रन्थान्तर-सम्पादने तत्प्रचारणे च महान्तं समुत्साहम्।

---

## वृत्तवर्त्तिका

कलिकाता-चूणापुकुरस्थितश्रीगीतासभाया श्रीमद्भगवद्गीताया विश्व-रूपदर्शनस्य दशानां श्लोकानां मिथो विजिगीषया पाठः सुनिष्पन्नः। परीक्षकाणां विचारेण बहुषु पाठकेषु श्रीकुलदाप्रसादरायो नाम कलिकाता-राष्ट्रीयसंस्कृतमहाविद्यालयस्य विद्यार्थी प्रथमस्थानमधिकृत्य पुरस्कारभाग् जातः। श्रीमतस्तस्य पाठ्यविषये संस्कारदाढ्यं वर्णानामुच्चारणप्रभृतयो वाचनशैली च सुतरां परीक्षकैः प्रशस्ततया समुद्घोष्यन्त।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court pcet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

rinted by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta riental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and 'ublished by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. February 1951

No. 10. १८७२-शकीये

३३श-वर्षस्य माघे

१०म-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)।
Foreign price—14s.

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्या सादप्रान्निर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामवाजार
कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIII. | १८७२-शकीये माघे | February, |
| --- | --- | --- |
| No. 10. | ३३श-वर्षस्य १०म-संख्या | 1951. |

## श्रीश्रीवाणीमङ्गलम्

सालङ्कारपदा रसाहितमदा दीव्यद्गुणा शोभना
वन्द्या शुद्धसुवर्णसङ्गतिमती योग्या सदर्थान्वये ।
साकाङ्क्षा प्रियवृत्तिरुत्तमबहुच्छन्दा विचित्रक्रमा
सान्निध्येन सरस्वती दिशतु नो ज्ञानं मुदे सर्वदा ॥
शुभ्राम्भोरुहरोचिषा द्विगुणितश्वेताङ्गकान्तिच्छटा
चान्द्री विष्णुपदोचिताकृतिरिव श्वेताभपक्षाश्रिता ।
स्वीयाङ्गप्रभया तमोविघटनी चित्रस्वरव्यञ्जना
भूयादुत्सवसाधनो प्रतिपदं भव्याय हंसप्रिया ॥
काव्ये कोमलविग्रहा सुकठिना तर्केषु मेध्या स्मृतौ ।
मीमांसापरिविस्तरे विधिमती मन्त्रार्थवादोज्ज्वला ॥
सांख्ये बुद्धिमती पतञ्जलिकृते योगे प्रपन्नेश्वरा ।
सा काचिद्दयतां तथोपनिषदि ब्रह्मप्रिया शाश्वती ॥
शुभ्राद्वैतघना प्रशान्तवदना शुभ्रारविन्दासना
शुभ्राङ्गावरणा विचित्रकरणा शुभ्रास्वजस्रगुधना ।

दीर्णध्वान्तभया प्रपञ्चितदया भक्तेषु हंसप्रिया
हृष्यत्सन्तमसे श्रिया परमया सा भ्राजतां मानसे ॥
कुन्दे चितमकरन्दे परमानन्दे श्रियामन्दे ।
वाणी वीणापाणी चिरमनुरक्ता दयां धत्ताम् ॥
पुस्तकशोभितहस्ता तिमिरविघातक्रियाशस्ता ।
वृत्त्यायत्तसमस्ता वर्षतु करुणां हृदाभ्यस्ता ॥
शिल्पेषु गीतेषु वृताधिकारा वाद्येषु विद्यासु वितीर्णसारा ।
आबालवृद्धं प्रचितप्रचारा विभातु वाणी विहितोपहारा ॥
वर्षे वर्षे यत्पदस्पर्शपुण्यं लब्ध्वा भाग्याद् भारतं दुःखशून्यम् ।
सेयं देयात् पुण्यकारुण्यवर्षं भक्तव्रातो विन्दतां चारुहर्षम् ॥

---

## नवसूक्तिमालिका

सहिष्णुता चेद् वृणुते गुणान्तरं
तदैव तत् सन्तनुते गुणान्तरम् ।
शीर्षे चिरं तापभृतां पलाशिनां
पदं तरूणां हि भजन्ति मानवाः ॥
यदा गृहस्था वृणते सहिष्णुतां
तदैव मैत्री स्वजनेषु दृश्यते ।
दोषेण मुक्ताः सुतरां न देहिनः
का वा गतिस्तत्र सहिष्णुतां विना ॥
सहिष्णुतासौम्यगुणेन दीव्यता
क्रोधादिदोषोत्थपराभवं स्वकम् ।
विधूय संसारसुखं समीयुषा
सम्मानभूमा भुवनेषु लभ्यते ॥

---

# मासप्रकृतिः

यत्र चान्द्रे मासि मघानक्षत्रे पूर्णिमाया अन्तो भवति, स चान्द्रमाघ इत्याख्यायते। सूर्यस्य मकरराशिस्थितिकाल एव तस्य सम्भवात् स कालः सौरमाघसंज्ञां भजते। विवाहादिसंस्कारकृत्य-संकल्पवाक्येषु 'माघे मासि मकरराशिस्थे भास्करे' इत्येवं माससमुल्लेखः कार्यः।

अस्मिन् वर्षे सौरमाघस्य नवमे दिवसे श्रीकृष्णस्य पुष्याभिषेकयात्रा, एकविंशे श्रीश्रीरटन्तीकालिकापूजा, सप्तविंशे दिवसे गणेशचतुर्थ्यां श्रीश्रीगणेशपूजा, अष्टाविंशे दिवसे श्रीपञ्चम्यान्तिथौ श्रीश्रीसरस्वतीपूजा मस्याधारलेखनीपूजा च। सौरमाघस्य चतुर्थदिवसे भारतसेवाश्रमसङ्घ-प्रतिष्ठापकस्य श्रीश्रीप्रणवानन्दस्वामिनस्तिरोभावोत्सवः। पञ्चमदिवसे व्रजविदेहिस्वामिरामदासकाठियामहाराजस्य तिरोभावोत्सवः। पञ्चदश-दिवसे स्वामिविवेकानन्दस्य जन्मोत्सवः। षोड़शे दिवसे जानुयारी-मासस्य त्रिंशदिवसात्मके महात्मनो गान्धिमहोदयस्य तिरोधानस्मृतिः। माघमासे जातो विद्याविनयादिनानासद्गुणयुक्तो भवति। अस्मिन् मासे मेषसिंहवृश्चिकमीनराशिषु जातानां त्रयोदशदिनात् परञ्च मेषवृषसिंहकन्या-वृश्चिकधनुर्मीनराशिषु जातानां रविशुद्धिः। गुरुशुद्धिस्तु मेषमिथुनसिंह-तुलामकरराशिषु जातानाम्।

---

# मतिमञ्जरी

मान्याः पारिषदाः! विदितमेवेदं श्रीमतां यत् कलिकातास्थ-वितन्त्रीक स्वरप्रसारयन्त्रालयेन अन्तरान्तरा संस्कृतरूपकाभिनयः प्रस्तूयते, स एष प्रबन्धः सुतरां समीचीन एवेति प्रतिपादितमस्माभिरितः पूर्वमपि। किन्तु दीर्घकालव्यवधानेनास्य कृत्यस्य अनुष्ठानं न तथा रमयति संस्कृतप्रियान्। तत् अन्तरा दीर्घकालाव्यवधानेन विधीयते चेदधिकृतैस्तत्प्रबन्धस्तदैवास्माकं

भवति भूयान् सन्तोषस्तथा परेषां संस्कृतप्रियाणाम्। जानीमो वयं यत् अभिनयप्रबन्धे कर्त्तव्ये भूयानर्थव्ययः परिश्रमश्चापेक्षितः प्रबन्धकारिणाम्। तत्र वयं ब्रूमः; अन्तरान्तरा यथा तदधिकृतैरभिनयप्रबन्धः क्रियते, तथा तद्-विरोधेन यदि दृश्यकाव्यादाहृत्याहृत्य एकैकस्यांशस्य पाठव्यवस्था यथा-सम्भवं क्रियते तदा न तावानर्थव्ययो नापि तत्प्रबन्धसम्पादनाय भूयानायासोऽपि स्वीकरणीयो भवति। तदत्र तदधिकृतानामवधानं काम्यते।

---

# सुखलेखनम्

( पूर्वानुवृत्तम् )

[ श्रीरामधनशास्त्रिणा टिप्पण्यादिभिरुपस्कृतम् ]

आयुर्ज्योतिर्भ्यामग्नेश्च स्तोमस्य स्यादायुष्टोमः।
ज्योतिष्टोमोऽग्निष्टोमश्च(१)ज्योति[ः] स्तोमे द्वूणां भाति(२) ॥११॥

---

१। "अग्नेः स्तुतस्तोमसोमाः" [ अ० ८। पा० ३। सू० ८२ ] इति पाणिनिः। "ज्योतिरायुर्भ्यांश्च स्तोमस्य" [ षत्वप्र०, सू० ७ ] इति श्रीपतिः। "ज्योतिरायुरग्निभ्यः स्तोमस्य" [ अजन्तपुं०, सू० १११ ] इति च दुर्गादासः।

२। समासं विना षत्वं न स्यादेव। तदुक्तं जयादित्येन [ अ० ८। पा० ३। सू० ८३]—"समास इत्येव ज्योतिः स्तोमं दर्शयति" इति। श्रीपतिरपि

अङ्गुरेरङ्गुलेश्चापि सङ्गस्याङ्गुरिषङ्गभाक्[1](१)।
भजते नाङ्गुरी सङ्गमिह नैवासमासतः(२) ॥१२॥

नावादेः सेचनादीनां नौषेचनं[2] प्रतिष्णिका।
नौ[षे]चिका[3]-गौरिषकथे[4](३)गविष्ठिर-युधिष्ठिरौ(४) ॥१३॥

---

"समास इत्येव। ज्योतिः स्तोमे तृणानाम् [ षत्वप्र०, सू० ७ ] इति। दुर्गादासोऽपि [अजन्तपु०, सू० १११] एवमेवाह।

१। "समासेऽङ्गुलेः सङ्गः" [अ० ८। पा० ३। सू० ८०] इति पाणिनिः। "समासेऽङ्गुलेः सङ्गस्य" ]षत्वप्र०, सू० ३] इति च श्रीपतिः। 'अग्रयङ्गुलिभीरुभ्यः स्तुतसङ्गस्थानानां से' [ अजन्तपु', सू० १११] इति पुनर्दुर्गादासः।

२। निषेधपक्षे तु "अङ्गुले सङ्गं पश्य" [ अ० ८। पा० ३। सू० ८० ] इति जयादित्यस्य "अङ्गुली सङ्गं भजते" इति च श्रीगतिदुर्गादासयोरुदाहरणे।

३। "सुषामादिषु च" [ अ० ८। पा० ३। सू० ९८ ] इति पाणिनिः। अत्र "नौषेचनं, प्रतिष्णिका, गौरिषक्थः" इत्येतानि जयादित्योदाहरणानि ॥ "सुषामादिश्च" [ षत्वप्र०, सू० २० ] इति श्रीपतिः। "नौषेचिका" इति कात्यायनः" इति च गोपीनाथः।

४। "गवियुधिभ्यां स्थिरः" [ अ० ८। पा० ३। सू० ९५ ] इति पाणिनिः। "गवियुधिभ्यां स्थिरस्य" [ षत्वप्र०, सू० ८ ] इतिसूत्रे "समासानुवर्त्तनाद् यत्रालुक् तत्रायं मूर्द्धन्यः। स चाभ्यां संज्ञायामेव। समास इत्येव। गवि स्थिरो भारः, युधि स्थिरो राजन्यः" इति श्रीपतिः। 'गवियुधिभ्यां स्थिरस्य" [ अजन्तपुं०, सू० १११ ] इति च दुर्गादासः।

---

1 Ms. ०सङ्ग०

2 Ms. नौसेचनं

3 Ms. नौषिका

4 Ms. गौरिसक्थौ

मातृष्वसा पितृष्वसा(१)तथा दिविषदादयः(२)।
कौशले नि-नदीभ्यां स्नो निष्णातः कुशलो मतः(३) ॥१४॥

द्वित्वहेतौ कृते षत्वे द्विर्निषण्णौ भटौ[1] युधि।
अक्लिदादपि ढे जाते साढ्ोऽढे[ऽ]पीति[2] केचन ॥१५॥

ऋतीषाट् पृतनाषाट् च पृतनाषाहमित्यपि[3](४)।
आसने द्वौ वेस्तृणातेर्विष्टरोऽन्यत्र विस्तरः(५) ॥१६॥

---

१। "मातृपितृभ्यां स्वसा" [ अ० ८। पा० ३। सू० ८४ ] इति पाणिनिः। "मातृपितृभ्यां स्वसुः" [ षत्वप्र०, सू० ६ ] इति श्रीपतिः। "मातृ-पितृभ्यां स्वसुर्वा तु मातुःपितुर्भ्याम्" इति च दुर्गादासः।

२। "द्युषद्दिविषदौ" [षत्वप्र०, सू० २० ] इति श्रीपतिः।

३। "नि-नदीभ्यां स्नातेः कौशले" [ अ० ८। पा० ३। सू० ८६ ] इति पाणिनिः। तत्र "कौशल इति किम्, निस्नातः, नदीस्नात" इति जयादित्यः। "नदीष्ण-निष्णातयोर्दाक्ष्ये" [ षत्वप्र०, सू० १२ ] इति श्रीपतिः। दुर्गादासस्त्वत्र पाणिनिसूत्रमेवानुचकार [ अजन्तपु०, सू० १११ ]।

४। "सहेः साढ़ः सः" [ अ० ८। पा० ३। सू० ५ ] "सहेः पृतनर्त्ताभ्यां च" [ अ० ८। पा० ३। सू० १०६ ] इति च पाणिनिः। "साढ़ इति ढान्तनिर्देशात् यत्र 'हो ढो भावि'त्यनेन ढः स्यात् तत्रैव षत्वं, तेन तुरासाहौ इत्यादिषु न स्यात्। किञ्च तुरा-ऋतो-पृतनापूर्वस्य साढ़ एव षत्वं स्यात्" [ अजन्तपुं०, सू० १११ ] इति दुर्गादासः।

५। "वृक्षासनयोर्विष्टरः [ अ० ८। पा० ३। सू० ९३ ] इति पाणिनिः। "वेः स्त्रो नाम्नि" [ षत्वप्र० सू० १५ ] इति श्रीपतिः। दुर्गादासोऽपि "वेः स्त्रो नाम्नि" इति सूत्रं विधाय "नाम्नीति किं विस्तरो गृहस्य" इति व्यावृत्तिपक्षे उदाजहार [ अजन्तपु०, १११ सू० ]।

---

1 Ms निषण्णौ भटो 2 Ms. अक्लिष्कादपि टे जाते साढ्ोऽटेपीति
3 3Ms. ०त्येपि

शमेः[1] परेर्विकुभ्याञ्च स्थलस्येति[2] शमिष्ठलम्[3] ।
परिष्ठलं विष्ठलञ्च(१)न दीर्घात्तु शमीस्थलम्[4](२) ॥१७॥

दुरो निरः सोश्च साम-सन्ध्योः सेधस्य वै यथा ।
निःषामा च सुषन्धिश्च निःषन्धिरेवमादयः(३) ॥१८॥

सु-विभ्यामपि नि-र्विभ्यां सुपः सुतेः समस्य च ।
सुषुप्तश्च विषुप्तश्च निःषूतिर्विषमादयः[5](४) ॥१९॥

---

१ । "वि-कु-शमि-परिभ्यः स्थलम्" [अ० ८ । पा० ३ । सू० ९६] इति पाणिनिः । "वि-कु-परि-शमिभ्यः स्थलस्य" [ षत्वप्र०, सू० १६ ] इति च श्रीपतिः । दुर्गादासोऽपि एवमेव [ अजन्तपु०, सू० १११ ] सूत्रयाञ्चकार । कुष्ठलमित्युदाहरणं मूले न धृतमित्युन्नेयं सुधीभिः ।

२ । सूत्रे "शमि" इति ह्रस्वनिर्देशात् "शमीस्थलम्" इत्यत्र दीर्घान्तात् शमीशब्दात् षत्वनिषेधः । अत्राह श्रीपतिः "शम्याः स्थलमिति ह्रस्वत्वे शमिष्ठलम्" इति । गोपीनाथस्तु "शमिनां स्थलम् इकारान्तसाहचर्य्यात् नान्तस्य न भवति शमिस्थलम्" [ षत्वप्र०, सू० १६ ] इत्याह ।

३ । "सुषामादिषु च" [ अ० ८ । पा० ३ । सू० ९८ ] इति पाणिनिः । अत्र "निषन्धि"रिति जयादित्यस्यान्यतमोदाहरणम् । "सुषामादिश्च" [षत्वप्र०, सू० २०] इति श्रीपतिः । "निःसुदुर्भ्यः साम-सेध-सन्धेः" [ अजन्तपु०, सू० १११ ] इति च दुर्गादासः ।

४ । "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" [ अ० ८ । पा० ३ । सू० ८८ ] इति पाणिनिः । "सुविनिर्दुर्भ्यः सुपः" इति "समसूत्योश्च" इयि च [ षत्वप्र०, सू० ३८-३९ ] श्रीपतिः ।

---

1 Ms. समेः　　2 Ms. स्थल्यस्येति　　3 Ms. समि०
4 Ms. समि०　　5 Ms. निःषुतिविष०

सुपः षत्वे कृते द्वित्वं नूनं विषुषुपुर्यथा ।
सुपादेशाद्विसुष्वाप(१) सुस्वप्नादिषु नैव च (२) ॥२०॥

कपेर्गोत्रे स्थलस्यापि कपिष्ठल ऋषिः स्मृतः(३) ।
निविभ्याञ्च परेश्चापि सयस्य च सितस्य च ॥२१॥

विषयो निषयश्चापि निषितो विषितादयः(४) ।
अङ्गु[1]शङ्कु-शेकु-भूमि-परमे-द्वि-त्रि-गोऽग्नयः ॥२२॥

---

१। अत्राह जयादित्यः "सुपीति स्वपिः कृतसम्प्रसारणो गृह्यते ।

सुपः षत्वं स्वपेर्मा भूद्विसुष्वापेति केचन ।
हलादिशेषान्न सुपिरिष्टं पूर्वं प्रसारणम् ॥
स्थादीनां नियमा नात्र प्राक् सितादुत्तरः सुपिः ।
अजर्थकं विषुषुपुः सुपिभूतो द्विरुच्यते ॥

[ अ० ८ । पा० ३ । सू० ८८ ] इति

"सुविनिदुर्भ्यः सुपः" [ षत्वप्र० सू० ३८ ] इति च श्रीपतिः ।

२। अत एव श्रीपतिना सूत्रे कृतसम्प्रसारणस्य सुपेर्निर्देशं विधाया "सम्प्रसारणनिर्देशः किं सुस्वपिति, सुस्वप्नः" [ षत्वप्र०, सू० ३८ ] इति ।

३। "कपिष्ठलो गोत्रे" [ अ० ८। पा० ३। सू० ६१ ] इति पाणिनिः अत्र "गोत्र इति किम्? कपेः स्थलं कपिस्थलम्" इत्याह जयादित्यः "प्रतिष्णातकपिष्ठलौ सूत्रगोत्रयोः" [ षत्वप्र०, सू० २१ ] इति श्रीपतिः दुर्गादासोऽपि "कपिष्ठलो मुनिः" कपिष्ठलं गोत्रम्" [ अजन्तपु०, सू० १११ इत्याह ।

४। "सितसयसिवुसहसुटामनन्तरः" [ षत्वप्र०, सू० ३० ] इति श्रीपतिः । "सयसितयोः निविपरिभ्यः" [ अजन्तपु०, सू० १११ ] इति च दुर्गादासः । (क्रमशः)

---

1 Ms. चङ्गु०

# छन्दोगक्रियासारः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीरमणीकान्तसिद्धान्तरत्नः ]

ततः प्राचीनावीती उपवीती वा 'ॐ अग्नौ करिष्यामि' इति पृच्छेत्। 'ॐ कुरु' इत्यनुज्ञातः घृताक्तमन्नमादाय 'स्वाहा' इत्युच्चार्य्य पित्र्ये पङ्क्तिमूर्द्धन्यस्य हस्ते हुत्वा 'ॐ सोमाय पितृमते' इतिमन्त्रशेषं समापयेत्। तत्रैव पुनः 'स्वाहा' इत्युच्चार्य्य हुत्वा 'ॐ अग्नये कव्य-वाहनाय' इतिमन्त्रशेषं समापयेत्। पित्र्ये अन्यब्राह्मणहस्तेषु तूष्णीं जुहुयात्। ततो हुतशेषं दैवादिसर्व्वब्राह्मणेभ्यो दत्त्वा दैवादिक्रमेण अन्नादिकं पात्रान्तरितहस्ताभ्यां पत्नी स्वयं वा परिवेशयेत्। उपकरणञ्च पात्रान्तरे कृत्वा भूमौ स्थापयेत्। पात्रान्तरासत्त्वे भोजनपात्रे दद्यात्। ततः प्रेतपक्षेऽपि तथैवान्नादिकं परिवेशयेत्। प्रेतपक्षे अग्नौकरणाभावात् हुतशेषप्रदानं नास्ति। ततो दैवादिक्रमेणान्नपात्रं धृत्वा 'ॐ पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा' इति प्रत्येकं पठेत्। ततः सर्व्वमन्नं सजलं कृत्वा 'ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांशुले' इति जप्त्वा, अथवा 'ॐ विष्णो हव्यं रक्षस्व' इति पठित्वा दैवेऽन्ने अनखमङ्गुष्ठं निवेशयेत्। पित्र्ये अन्ने 'इदं विष्णु'रिति अथवा 'विष्णो कव्यं रक्षस्व' इति अङ्गुष्ठनिवेशनम्। अस्मिन्नवसरे दैवे अन्ने ॐ यवोऽसि यवयास्मद् द्वेषो यवयारातो रित्यनेन यवान् विकिरेत्। ततः पित्र्येऽन्ने 'ॐ तिलोऽसि सोमदेवत्यो गोसवो देवनिर्म्मितः प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा' इत्यनेन तिलान् विकिरेत्। अत्रै-वान्ने मधु देयं किन्तु कलौ तन्निषिद्धम्। प्रेतपक्षेऽपि अनेनैव मन्त्रेण तिलान् विकिरेत्, किन्तु 'पितॄनि'ति पदस्थाने 'प्रेतान्' इति वदेत्। इत्ययं विशेषः। ततो दैवे अन्नपात्रं धृत्वा उपवीतित्वादिना विष्णुरोम् 'विश्वेदेवा एतत्तेऽन्नं

सजलं सोपकरणं स्वाहा' इत्युत्सृजेत् । ततः पितृपक्षे प्राचीनावीतित्वादिना अन्नपात्रं 'धृत्वा विष्णुरोम् अमुकगोत्र पितामहामुकदेवशर्म्मन् अमुकगोत्र प्रपितामहामुकदेवशर्म्मन् अमुकगोत्र वृद्धप्रपितामहामुकदेवशर्म्मन् एतत्तेऽन्नं' सजलं सोपकरणं स्वधा' इत्युत्सृजेत् । ततः प्रेतपक्षे अन्नपात्रं धृत्वा 'विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन् एतत्तेऽन्नं सजलं सोपकरणं स्वधा' इत्युत्सृजेत् । ततोऽन्नादिकं हस्तेन निर्द्दिशेत् । एतदेवान्नादेः प्रतिपादनम् । अस्मिन्नवसरे ब्राह्मणाः पूर्व्वं पाणितले दत्तं हुतान्नशेषं दत्तेऽन्ने मिश्रयित्वा आपोशानं कृत्वा तदन्नमुपयोक्ष्यन्ति । अतोऽत्र ब्राह्मणेभ्य उदकदानं कर्त्तव्यम् यथा—दैवपूर्व्वं प्रत्येकं ब्राह्मणानां हस्तेषु भोजनात् पूर्व्वं आपोशानार्थं सकृत्सकृदुदकं दद्यात् । दैवे विष्णुरोम् विश्वेदेवा एतत्ते उदकं स्वाहा' पित्र्ये च 'विष्णुरोम् अमुकगोत्र पितामहामुकदेवशर्म्मन् अमुकगोत्र प्रपितामहामुकदेवशर्म्मन् अमुकगोत्र वृद्धप्रपितामहामुकदेवशर्म्मन् एतत्ते उदकं स्वधा' इत्यनेन दद्यात् । ततः प्रेतपक्षे 'विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन् एतत्ते उदकं स्वधा' इत्यनेन दद्यात् । ब्राह्मणा अपि अमृतस्योपस्तरणमसि स्वाहा' इत्यनेन आपोशानं कुर्य्युः । ततः सप्रणवव्याहृतिकां गायत्रीं ॐ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥

ॐ मधुनक्तमुतोषसो मधुमत् पार्थिवं रजः। मधुद्यौरस्तु नः पिता ॥

ॐ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्य्यः माध्वीर्गावो भवन्तु नः। ॐ मधु ॐ मधु ॐ मधु' इति च जपेत् । प्रेतपक्षेऽपि तथैव जपेत् । ततो भुञ्जानेषु ब्राह्मणेषु श्राव्यं पठेत् । यथा—आदौ व्याहृतिपूर्व्वां गायत्रीं ततः ॐ यद्वा उविशपतिः शितः सुप्रीतो मनुषो विशि । विश्वेदग्निः प्रतिरक्षांसि सेधति ।

ॐ सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्मः ।
अनुदह सहमूरान क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥

ॐ अक्षन्नमीमदन्त ह्यवप्रिया अधूषत ।

अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥

ॐ अभित्रिपृष्ठं वृषणं वयोधा माङ्गूषाणा मवावशन्त वाणीः।

वना वसानो वरुणो न सिन्धून्वि रत्नधा दयते वार्य्याणि ॥

ॐ अक्रां॑ त्समुद्रः प्रथमे विधर्म्मन जनयन् प्रजा भुवनस्य राजा।

वृषापवित्रे अधिसानो अव्ये वृहत् सोमो वावृधे सुवान इन्दुः ॥

ॐ कनिक्रन्ति हरिरासृज्यमानः सीदन् वनस्य जठरे पुनानः। नृभिर्यतः कृणुते निर्निजं गा अतो मतीर्जनयत स्वधाभिः ॥ इति पितृसंहिता ॥

ॐ इदं ह्यन्वोजसासुतं राधानां पते। पिवात्वऽस्य गिर्वणः ॥

ॐ त्वामिदाह्यो नरोऽपीप्यन्वज्रिनभूर्णयः।

स इन्द्र स्तोम वाहसामिह श्रुध्युन स्वरसमागहि ॥

ॐ सपूर्व्वो महानां वेनः क्रतुभिरानजे।

यस्य द्वारा मनुष्पिता देवेषु धिय आनजे ॥

ॐ पुरां भिन्दुर्युवाकविरमितौजसा अजायत।

इन्द्रो विश्वस्य कर्म्मणो धर्त्ता वज्री पुरुष्टुतः ॥

ॐ उपप्रेक्षे मधुमतिक्षियन्तः पुष्यन्तो रयिं धीमहे ॥

ॐ पवस्व सोम मधुमा॑ ऋतावापोवसानो अधिसानो अव्ये।

अव द्रोणानि घतृवांति सीद मदितमो मत्सर इन्द्र पानः ॥

ॐ सुरूपकृतनु सूतये सुदुघामिव गोदुहे।

जहूमसि द्यवि द्यवि ॥ इतिमाधुच्छन्दसी संहिता ॥

इच्छयात्र पुराणाद्युक्तमपि जपेत्। प्रेतपक्षेऽपि एवमेव श्राव्यं पठेत्। ततो दैवे प्रागग्रान दर्भानास्तीर्य्य यवयुक्तमन्नं गृहीत्वा

"ॐ असोमपाश्च ये देवा यज्ञभागविवर्जिताः।

तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

इतिमन्त्रेण उच्छिष्टसमीपे (कुशोपरि) विकिरं दद्यात्। ततः प्रकृतं किञ्चिदन्नं सतिलमादाय 'ॐ ये अग्निदग्धा जीवा येऽप्यदग्धाः कुले मम भूमौ दत्तेन तृप्यन्तु तृप्त्वा यान्तु परां गतिम्। इत्यनेन पित्र्ये उच्छिष्टसमीपे

भूमौ विकिरं दद्यात् (क) प्रेतपक्षेऽपि तथैव दद्यात्। ततो हस्तौ प्रक्षाल्य दैवादिक्रमेण ब्राह्मणानां हस्तेषु प्रत्यापोशानार्थं जलं दद्यात्,यथा—'विष्णुरोम् विश्वेदेवा एतत्ते उदकं स्वाहा' इति दैवे, पित्र्ये'विष्णुरोम् अमुकगोत्र पिता-महामुकदेवशर्म्मन् अमुकगोत्र प्रपितामह अमुकदेवशर्म्मन् अमुकगोत्र वृद्ध-प्रपितामहामुकदेवशर्म्मन् एतत्ते उदकं स्वधा' इत्यनेन दद्यात्। ततो जलं स्पृष्ट्वा प्रेतपक्षे 'विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्मन्नेतत्ते उदकं स्वधा' इत्यनेन दद्यात्। ब्राह्मणा अपि 'ॐ अमृतस्यापिधानमसि स्वाहा' इत्यनेन तदुदकं पिबेयुः।

( क्रमशः )

---

(क) केचिदत्र मन्त्रलिङ्गविरोधात् प्रेतपक्षे पृथग् विकिरो न देयः, एककु-लत्वादेकेनैव निर्व्वाह इत्युक्तम्। अस्माभिस्तु एकोद्दिष्टपार्व्वणाभ्यामेतद् विक्रियते इत्यतः प्राकृतं सर्व्वमनुष्ठेयमतो विकिरदानं कर्त्तव्यमित्युच्यते।

---

## वृत्तवर्त्तिका

श्रीमतां पारिषदानां नूनमिदं वृत्तमानन्दाय भविता यत् संवत्सरेऽस्मिन् भगवत्याः सरस्वत्याः पूजा परिषदा दीनेन्द्रवर्त्मनि १६८।१ संख्यके स्वीये नवीने भवने नियमेन विहितेति। अवसितं केवलं यद्यपि श्रीमतां पारिषदानां निष्कम्पानुकम्पया भगवत्याश्च सरस्वत्याः परमकृपया तस्य भवनस्य प्रथमभूमिकानिर्माणं तथापि तत्रैव श्रीसरस्वत्याः पूजनानुष्ठानेन कोऽपि विशेषः स्यादिति बुद्ध्या स्वीये भवने कृत्यानुष्ठानप्रसूतानन्दविशेष-लाभप्रत्याशया च तदिदमनुष्ठितं पारिषदैः। अचिरमस्य भवनस्य कल्पितं स्वरूपं भगवत्याः कृपया सम्पूर्णतां यायादिति मातुः श्रीसरस्वत्याः सविधे वयमतिभक्त्या कामयामहे।

---

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. March 1951

No. 11. १८७२-शकीये

३३श-वर्षस्य फाल्गुने

११श-संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—14s.

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII. No. 11.
३३श-वर्षस्य ११श-संख्या




March 1951
१८७२-शकीये फाल्गुने मासे

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—14s.

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्या प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामबाजार

कलिकाता-४

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्या प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामवाजार

कलिकाता-४

जितारातिवर्गोऽपि विश्वप्रपञ्च
दहत्युग्रकोपेन को वा विरिञ्चेः ?
तमःशक्तिदीप्तेश्वराभिन्नरूपः
स एकः परः शङ्करो नीलकण्ठः ॥

श्मशानान्तचारी शवः कोऽस्थिधारी
चिरं प्रेतसङ्गी पवित्रोऽभिवन्द्यः ?
महैश्वर्यजुष्टो विचित्रप्रभावः
स गङ्गाधरो नापरः कोऽपि देवः ॥

भ्रमस्पर्शशून्यः प्रबुद्धोऽपि को वा
स्वपत्नीवपुः प्राणशून्यं दधानः ।
शुचा मत्तकल्पः प्रबभ्राम देवः ?
स एकः सतीप्राणनाथो महेशः ॥

प्रशस्तोपचारान्तरैः को न तुष्ट-
स्तथा बिल्वपत्रैर्यथा भक्तदत्तैः ?
स दीनालिसेवाविधानैकयोग्यः
कृपासिन्धुरर्द्धेन्दुमौलिर्महेशः ॥

न जातिर्न विद्या न वा पूतमन्त्रो
व्यपेक्ष्यो विधिर्वा न कस्यार्चनायाम् ?
स एकः किरातेऽप्यसन्मन्त्रविद्ये
विधिस्पर्शशून्ये प्रसन्नः शिवात्मा ॥

जयत्यर्द्धचन्द्रश्रिया दीप्तमौलि-
र्जटाजूटभारे स गङ्गाभिषिक्तः ।
चिरं शैवतिथ्यर्च्चनासुप्रसन्नः
स पायादपायाद् भुवं देवदेवः ॥

---

## नवसूक्तिमालिका

गृहपते ! यदि मङ्गलमीप्सितं
भव समव्यवहारपरायणः ।
विषमता स्वजनेषु कृता त्वया
कलहसृष्टिकृते भविता मिथः ॥
प्रतिपदं परुषं न वद क्वचित्
स्वजनदोषकथां सशमं वदेः ।
मधुरमौषधमेव मुदा भवे
प्रवृणते शिशवो हितभूतये ॥
निजविधेयविधौ न मितम्पचो
भव वृथार्थविसृष्टिविधौ तथा ।
नयमिमं नियतं समनुस्मरन्
परमसम्पदमाश्रय संसृतौ ।

---

## मासप्रकृतिः

यस्मिन् चान्द्रे मासि प्रायेण पूर्वफल्गुनीनक्षत्रे पूर्णिमाया अन्तो भवति, स चान्द्रफाल्गुन इत्याख्यायते। सूर्यस्य कुम्भराशिस्थितिकाल एवास्य सम्भवात् सोऽयं कालः सौरफाल्गुन इत्याख्यां भजते। वङ्गीयगणनानुसारेणायं मासो वसन्तर्त्तोः प्रथमो मासः शब्दशास्त्राद्यनुसारेण तु शिशिरर्त्तो-र्द्वितीयो मासः। अस्मिन् मासि विवाहादिसंस्कारकृत्यसंकल्पवाक्येषु 'फाल्गुने मासि कुम्भराशिस्थे भास्करे' इत्येवं माससमुल्लेखः कार्यः।

अस्मिन् वर्षे सौरफाल्गुनस्य प्रथमदिवसे माकरसप्तमी विधानसप्तमी-व्रतम् आरोग्यसप्तमीव्रतञ्च, द्वितीयदिवसे भीष्माष्टमी, पञ्चमदिवसे भैमी

जितारातिवर्गोऽपि विश्वप्रपञ्चं
दहत्युग्रकोपेन को वा विरिञ्चः ?
तमःशक्तिदीप्तेश्वराभिन्नरूपः
स एकः परः शङ्करो नीलकण्ठः ॥
श्मशानान्तचारी शवः कोऽस्थिधारी
चिरं प्रेतसङ्गी पवित्रोऽभिवन्द्यः ?
महैश्वर्यजुष्टो विचित्रप्रभावः
स गङ्गाधरो नापरः कोऽपि देवः ॥
भ्रमस्पर्शशून्यः प्रबुद्धोऽपि को वा
स्वपत्नीवपुः प्राणशून्यं दधानः ।
शुचा मत्तकल्पः प्रबभ्राम देवः ?
स एकः सतीप्राणनाथो महेशः ॥
प्रशस्तोपचारान्तरैः को न तुष्ट-
स्तथा बिल्वपत्रैर्यथा भक्तदत्तैः ?
स दीनालिसेवाविधानैकयोग्यः
कृपासिन्धुरर्द्धेन्दुमौलिर्महेशः ॥
न जातिर्न विद्या न वा पूतमन्त्रो
व्यपेक्ष्यो विधिर्वा न कस्यार्चनायाम् ?
स एकः किरातेऽप्यसन्मन्त्रविद्ये
विधिस्पर्शशून्ये प्रसन्नः शिवात्मा ॥
जयत्यर्द्धचन्द्रश्रिया दीप्तमौलि-
र्जटाजूटभारे स गङ्गाभिषिक्तः ।
चिरं शैवतिथ्यर्च्चनासुप्रसन्नः
स पायादपायाद् भुवं देवदेवः ॥

---

## नवसूक्तिमालिका

गृहपते ! यदि मङ्गलमीप्सितं
भव समव्यवहारपरायणः ।
विषमता स्वजनेषु वृता त्वया
कलहसृष्टिकृते भविता मिथः ॥
प्रतिपदं परुषं न वद क्वचित्
स्वजनदोषकथां सशमं वदेः ।
मधुरमौषधमेव मुदा भवे
प्रवृणते शिशवो हितभूतये ॥
निजविधेयविधौ न मितम्पचो
भव वृथार्थविसृष्टिविधौ तथा ।
नयमिमं नियतं समनुस्मरन्
परमसम्पदमाश्रय संसृतौ ॥

---

## मासप्रकृतिः

यस्मिन् चान्द्रे मासि प्रायेण पूर्वफल्गुनीनक्षत्रे पूर्णिमाया अन्तो भवति, स चान्द्रफाल्गुन इत्याख्यायते। सूर्यस्य कुम्भराशिस्थितिकाल एवास्य सम्भवात् सोऽयं कालः सौरफाल्गुन इत्याख्यां भजते। वङ्गीयगणनानुसारेणायं मासो वसन्तर्त्तोः प्रथमो मासः शब्दशास्त्राद्यनुसारेण तु शिशिरर्त्तोर्द्वितीयो मासः। अस्मिन् मासि विवाहादिसंस्कारकृत्यसंकल्पवाक्येषु 'फाल्गुने मासि कुम्भराशिस्थे भास्करे' इत्येवं माससमुल्लेखः कार्यः।

अस्मिन् वर्षे सौरफाल्गुनस्य प्रथमदिवसे माकरसप्तमी विधानसप्तमीव्रतम् आरोग्यसप्तमीव्रतञ्च, द्वितीयदिवसे भीष्माष्टमी, पञ्चमदिवसे भैमी

एकादशी, षष्ठे दिवसे वराहद्वादशी, नवमे दिवसे माघी पूर्णिमा, द्वाविंशे दिवसे शिवरात्रिव्रतं, त्रिंशे दिवसे च घण्टाकर्णपूजा।

अस्मिन् मासे जातः सूक्ष्मधी विद्याविनयसम्पन्नश्च भवति। अस्मिन् मासि गृहं दक्षिणद्वारं निर्मातव्यम्।

अस्मिन् मासि मेषकन्याधनूराशिषु जातानां तथा त्रयोदशदिनात् परं मेषवृषमिथुनकन्यातुलाधनुर्मकरराशिषु जातानां रविशुद्धिः। गुरुशुद्धिश्चात्र मासे मेषमिथुनसिंहतुलामकरराशिषु जातानाम्।

---

## मतिमञ्जरी

मान्याः पारिषदाः! अपि स्मरन्ति भवन्तः पुरातनशैवचतुर्दशीसमागमम्। प्राचीने काले शैवचतुर्दशीसमागमे न केवलं धर्मबुद्ध्यैव महानुत्सवः समवर्त्तिष्ट लोकानां, किन्तु लौकिकानन्दसमभीप्सयापि। तथाहि ये नाम बाला धर्मविधेर्महत्त्वं प्रति नातिविश्वस्ता, ये वा नीचजातीयाः सुतरां धर्मानभिज्ञास्तेऽपि तदानीं शैवचतुर्दशीदिवसे सम्प्राप्ते निरम्बूपवासमाचरन्तः शिव शिवेत्यादिवचनमुच्चारयन्तः स्नानपूताः शैवव्रतमन्वतिष्ठन्। बालाः कौतुकप्रवणास्तरुणाश्च सोपवासं कपर्दकादिक्रीड़या मिथो विजिगीषामाश्रयन्तः सर्वं दिवसमत्यवाहयन्। ते ते स्वजनैः सुतरामुपवासभङ्गाय समनुरुद्धा अपि भोजनाभावनिबन्धनमतिकष्टमनुभवन्तोऽपि सवयोव्यापारवैसादृश्यादिसम्भावनाप्रसूतापकर्षपरिजिहीर्षया वा शैवसन्तोषसम्पिपादयिषाप्रभवगौरवलिप्सया वा अन्यथा वा नोपवासभङ्गाय प्रावर्त्तिषत। ये नाम बालास्तरुणा वा विपक्षान् पराजित्य स्वायत्तीकृतप्रभूतकपर्दकास्ते स्वयमपि यथानन्दममन्दमन्वभवन् तथैव तेषां स्वजना अपि। तस्मिन् शैवचतुर्दशीदिवसे पुरा आहार्यमनाहार्यं वा

च तद्दिनस्य ध्यानमकुर्वन्। प्रातःप्रभृति सायाह्नकालपर्यन्तं कचिद्वा समुत्साहातिरेकेण निशायाः प्रथमयामार्द्धपर्यन्तं कपर्दकादिक्रीड़ाप्रवृत्त्या प्रतिपल्लीप्रान्तं प्रतिप्राङ्गणं प्रतिगेहं प्रतिमानसञ्च प्रावहदानन्दमन्दाकिनी प्रबलस्रोतसा प्रोच्छ्वसन्ती। शिवप्रियाणां श्रीफलपत्राणां संग्रहाय न्ययुज्यन्त स्वयमशक्तैस्तरुणा लिङ्गमूर्त्तिनिर्माणमधिकृत्य प्रकृष्टमृत्तिकासमाहरणाय च भक्तैर्गृहपतिसमाजैः। सायं मन्दिरेषु भवनेषु नदीतीर्थेषु पथिषु सरोवरेषु समं समश्रूयन्त गगनान्तसञ्चारिणः शङ्खघण्टानिस्वनास्तथा शिव शम्भो शङ्कर महादेव बम्-बम्-बम्प्रभृतयः पवित्रध्वनयः। क नु खल्वद्य प्रस्थितानि तानि वस्तूनि येषां स्मृतिरपि पवित्रीकुरुते लोकानामन्तःकरण-तत्त्वानि, लम्भयति प्रमोदभूमानम्। अपि नाम भूयो भवानुकम्पया समुदेष्यति भारते वर्षे तादृशमवस्थान्तरम्। को नाम तदुपलम्भोपाय इति प्रतिक्षणमुदेति सतां जिज्ञासा ?

---

# आनन्दलतिका

इति सागरमिवात्मानं मन्यमानामनुनयन् प्रिये इदमदूरे आश्रमपदं महर्षेः इत्युभौ ससम्भ्रममवलोकयतः॥ कुलकम्।

वैखानसैस्तत इतः परिसेव्यमान-
मध्याप्यगीतनिगमध्वनिपूतगेहम्।
नानामृगैर्विलसिता ... ... १ङ्गनाभि-
रामूल`[क] नियतसेवितशी[शा]खिसङ्घम्॥
होमार्थसौरभसुवासितदिग्विभागं
नीवारपक्वफलमण्डितपर्णशालम्।
धूम्रालिपाटलशरीरमहीधरा...
२... ... ... ...॥

---

१। मातृका खण्डिता　　　　२। मातृकाऽपूर्णा

ब्रह्मानुधावनसमाधिनिमीलिताक्ष-
योगीन्द्रदेहसकलैः (?) परिरुद्धमार्गम् ।
मौनव्रतैमुनिभिरञ्चितवेद्यकृत्य
पुण्यालयं नयनलक्ष्यमकारि ताभ्याम् ॥

समः । (ससम्भ्रमं) प्रिये ! अत्र हुताग्निरिव प्रज्वलन् स्वकिरणप्रकर-मुधीकृतदिनमणिकरनिकरः अन्तेवासिभिरर्चितः प्रतिसेवितपदयुगलः प्रथिततीव्रकोपो [म]हर्षिरष्टावक्रः प्रतिवसति । तदत्र सावहितया भवितव्यम् । इत्युपसृत्य महर्षिपुरतः स्थित्वा वितयावनतकन्धरो बद्धाञ्जलिः भगवन्, अवगतब्रह्मास्वादनपरितुच्छितविषयवर्ग, निखिलनिगममर्मज्ञान-मिहिरतिरस्कृताज्ञानतिमिर, कारुण्यनिर्झरकृतार्थीकृतजगन्मण्डल, एष वासुदेवतनयः समः प्रणमति । इयञ्च दमननृपतितनया मयोपनीता रेवा प्रणमति ।

मुनिः । (सदयमवलोक्य) वत्स जानामीति परिष्वज्य मूर्धानमाघ्राय रेवां प्रति—

देवकीव हृषीकेशं पार्वतीव षडाननम् ।
इयं दमनभूपालतनया लभतां सुतम् ॥

समं प्रति—

कालिन्दीगर्भसम्भूते गोविन्दतनये त्वयि ।
त्रिलोकीलीनचित्तोऽपि नैव शाम्यं [वाशास्यं]लभे क्वचित् ॥

समः । भगवतश्चरणनलिनावलोकनवन्दनादेव सर्वमुपपन्नम् ।

अष्टा । रथ्याश्रमम्लानमवलोकयामि मुखम् । तदत्र क्षणमुपविश्य श्रममपनय ।

समः । यथा ज्ञा[प]यति भवानित्युपविशति ।

रेवापि तापसीभिः पर्णशालान्तरं प्रवेशिता

तां राजकन्यां स्मरलोभनीय-
कान्तिं निरीक्ष्य सु[क्ष्याशु]तपस्विबध्वः ।
तद्भूषणैरागतविस्मयास्ता
दयार्द्रचित्ताः परितः परीयुः ॥
कुशासनं कापि पयांसि कापि
फलं सुपक्वं मधुरञ्च कापि ।
नीवारमुष्टिमु[ष्टीरु]पहृत्य कापि
भूपात्मजातिथ्यमहो चकार ॥
काचित्तरूणां नवपल्लवौघैः
काचित् प्रसूनैर्विविधैर्मनोज्ञैः ।
काचिच्च वाग्भिर्मधुराभिरस्याः
स्वीयानुरूपामकरोत् सपर्याम् ॥
तद्भूषणं पाणितलेन कापि
स्पृष्टानभिज्ञा वत नामधेये ।
नताननां क्षौमनिबद्धदेहां
पुनः पुनः पृच्छति नाम तेषाम् ॥
तासां प्रियालापदयार्द्रभाव-
व्यग्रत्वनम्रत्वविलोकनेन ।
तत्तत्सखीनां विरहाधिदूना
रेवा मनः पल्लवितं चकार ॥
बद्धाञ्जलिर्भूपसुता मुनीनां
बधूरवादीत् क्षितिलग्नमूर्धा ।
मातुः सखीनामपि विप्रलम्भो
विस्मारितो मे भवतीभिरार्याः ॥
विहाय भोगानवधीर्य कामं
विमर्द्य देहानवलोक्य धर्मम् ।

तपांसि घोराणि सुदुश्चराणि
वनेषु यूयं चरथामलानि ॥
युष्माकमेतैर्विमलैस्तपोभि-
स्तातः [तः] क्षितिं रक्षति निर्विशङ्कः ।
यच्छन्ति भूयांसि पयांसि गावो
वर्षन्ति मेघाश्च फलन्ति वृक्षाः ॥
कृपालुतापूरितमानसानां
पदेषु याचे वरमेकमेव ।
अमुष्य दासीगणनावसाने
भवेयमेतत्करपद्मलेख्या ॥
एतन्निशम्य गदितं क्षितिपालपुत्री-
मङ्के निधाय वदनं परिचुम्ब्य तस्याः ।
आश्लिष्य निर्भरमिमां स्रवदस्रवस्ताः
कृच्छ्रात् सुतामिव चिराद् व्यसृजन् दयार्द्राः ॥
धीरः समोऽपि मुनिपादमथाभिवाद्य
मन्दं जगाम दयिताकरदत्तपाणिः ।
उत्कण्ठितः पितुरगोचरतः प्रवेशात्
तत्तापसप्रणयतः स्थगितश्चिराय ॥
संस्मृत्य तापसदयां स विचिन्त्य तत्तद्
भूमीरुहाद्भुतदलेषु [विशिष्ट] शोभाम् ।
एणीदृगञ्चलविलोकनमुग्धनेत्रः
हृष्यद् (न) रथं दयितया द्रुतमारुरोह ॥ कुलकम्
अन्योन्यदेहलतिकामवलम्बमानौ
तत्कौतुकानि च परस्परमालपन्तौ ।
अव्यक्तगद्गदगिरौ मिलितार्धनेत्रौ
निद्राणि[मि]ताविव जवोत्थसमीरणेन ॥

हृष्टं स्वान्नं [हृष्टान्तरं]सहचरीषु निवेदयन्तौ
वाग्भङ्गिभिस्तदधिकं परिवर्धयन्तौ ।
तत्तोषवञ्चितमुखीमनुतापयन्तौ
तां वीक्ष्य शोणनयनां निभृतं हसन्तौ ॥
नानाविचित्रधरणीतलदत्तनेत्रौ
तत्सौभगातिशयकर्षितचित्तवृत्ती ।
यद् यद् विलोकयि...मद्भुतमीहमानौ
तत्तत्क्षणेन समतीत्य परं विशन्तौ ॥
दात्यूहभृङ्गकलकण्ठशिखण्डिहंस-
पारावतादिविहगध्वनिदत्तकर्णौ ।
भूपालमन्दिरगुणाकरकाननानि
संवीक्ष्य वीक्ष्य रथवेगकृतानुतापौ ॥
वेलावलम्बिलहरीपरिधौतमूल-
हिन्तालतालबकुलाम्रकदम्बशोभाम् ।
तौ दम्पती प्रणयरत्नसुपूर्णकुम्भौ
तीरं विलोकयत आशु पुरः पयोधेः ॥
पाथोनिधिं प्रबलवारिदतुल्यगर्ज-
मुद्दामवायुपरिवर्धितवीचिहंसम् ।
नृत्यन्महामकरनक्रभुजङ्गमौघ-
मालोक्य विस्मयरसौ भवतश्चिरं तौ ॥
दिग्दन्तिलालितकरेणुकरोत्थवारि-
धाराभिरुक्षितवपुःपुलकाचितौ यौ ।
मुक्ताफलानि नवविद्रुमजीविशङ्खा-
नालोक्य धर्तुमनसौ भवतस्तदानीम् ॥
देवः समोऽपि सह योधवरैः पयोधि-
मुत्तीर्य तं रथजवात् क्षणतः सुखेन ।

१द्वारावतीनगरसीमनि सम्प्रविष्टौ
भास्वद्विधू इव चिरादुदयाद्रिमूर्ध्नि ॥
पाञ्चजन्यनिनदेन बोधिता
वर्त्मदत्तनयनाः पुरौकसः ।
शङ्खदुन्दुभिमृदङ्गवादनैः
२नृत्यगीतरसि……… ॥
आगतं पुरि निशम्य माधवं
बालवृद्धवनिता अपि तत्र ।
रेवया सह समागतं सम
द्रष्टुमुत्सुकितमानसा ययुः ॥
लोलकुन्तलकचाः श्लथचेलाः
श्वासकम्पितज[कम्पिज]ठरास्त्वरमाणाः
३… पुरलोकाः
कम्पयन्ति धरणीं पदवेगैः ॥
चन्द्रसंज्ञ (?) जलसेचितभूमिं
सूक्ष्मवस्त्रनिवहास्तृतमार्ग[ा]म् ।
हेमकुम्भपरिशोभितर[थ्यां]
तोरणध्वजविराजितशालाम् ॥
हेमचम्पकसुमौक्तिकमूर्च्छ[षां]
विद्रुमावलिविभूषितवीथिम् ।
गीतवाद्यबहुलोत्सवयुक्तां
भूरिभूरिगणिकाद्भुतनृत्याम् ॥

---

१ । अत्र मातृकायां पादचतुष्टयं पतितमिवाभाति ।

२ । मातृकाऽसम्पूर्णा

३ । अभ्रयानसिकाः Ms

हेमकुम्भविलसन्नवनीतां
१धूपकल्पितनभःस्थलशोभाम् ।
२राजहंसततिकूजितयुक्तां
वाजिकुञ्जरपदातिमनोज्ञाम् ॥

कौतुकादथ रथादवरुह्य
पाणिना धृतबधूकरपद्मः ।
द्वारकां हुलहुलीभिरावृतां
ह्यमरे[यादवे]न्द्रतनयः स विवेश ॥

तां विलोक्य भुवनैकदुर्लभां
मालवेन्द्रतनयां पुरौकसः ।
कण्ठकण्ठविनिबद्धपाणय-
स्ते परस्परमिदं समूचिरे ॥

अश्विनीसुतसमाकृतिः समो
भूपजा जगति दुर्लभाकृतिः ।
योग्ययोग्य[युग्म]घटना विधेरियं
कं जनं त्रिभुवने न मोहयेत् ॥

ईदृशं पतिमवाप दुर्लभं
पूर्वजन्मसुकृतेन भूपजा ।
अल्पपुण्यविभवेन मानवो
लब्धुमर्हति न कल्पपादपम् ॥

ईदृश[ी]ं प्रियतमामुपयेमे
पार्वतीचरणवन्दनादयम् ।
एतया निखिलनाथनन्दनो
भूरिकालमवनीषु मोदताम् ॥

---

१। कम्पित Ms  २। यति Ms

कान्तियौवनभरेण न दृष्टा
न श्रुता प्रतिकृतिः क्वचिदस्याः ।
रूपमेतदवलोक्य मनोज्ञ-
मुर्वशीप्रभृतयोऽपि सलज्जाः ॥
यत्र यत्र चरणं क्षिपतीयं
तत्र तत्र धरणी ससरोजा ।
यत्र यत्र निदधाति च दृष्टिं
तत्र नीलनलिनस्रगुदि[पे]ता ॥
कोमलेन चरणेन चलन्ती
[मन्द]मन्दमबला दयितेन ।
अम्बरस्फुरितदेहशोभिनी
रोहिणीव विधुना विराजते ॥ (क्रमशः)

## वृत्तवर्त्तिका

मान्याः पारिषदाः ! विदितमेवेदं युष्माकं यत् कियत्कालात् पूर्वं वङ्गीयराष्ट्राधिकारेण घोषितं नातिचिरेणैव कलिकाताराष्ट्रीयमहाविद्यालये गवेषणाविभागस्य प्रतिष्ठा भविष्यतीति । सौभाग्यतः संस्कृतविद्यायाः सोऽयं विभागो वर्त्तमानाङ्गलवर्षस्य मार्च्चमासीयप्रथमदिवसे गुर्वधिष्ठिते प्रातर्वङ्गराज्यपालानां मान्यमान्यानां काट्जुमहोदयानां वङ्गीयशिक्षामन्त्रिणां तथान्येषां बहुविपश्चितामधिष्ठानेन प्रतिष्ठितः । तद्दिनात् प्रभृत्येव तत्राध्यापकपदे वृताभ्यां महामहोपाध्यायश्रीयोगेन्द्रनाथसांख्यवेदान्ततर्कतीर्थ—डाक्तर-श्रसुशीलकुमारदेमहोदयाभ्यां कृतः कृत्यारम्भः । राष्ट्राधिकारघोषणानुसारेण तत्राध्यापकद्वयमपरं नियोक्ष्यत इति विज्ञायते । तस्यापि नातिचिरभावितां वयमाशास्महे । भगवत्या वाग्देव्याः प्रसादादयमारम्भः शुभोदर्को भूयात् ।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd , 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIII.
No. 12.
३३श-वर्षस्य
१२श-संख्या



April 1951
१८७२-शकीये
चैत्रे
मासे

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—14s.



# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्या प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामबाज़ार

कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIII. | १८७२-शकीये चैत्रे | April |
| --- | --- | --- |
| No. 12. | ३३श-वर्षस्य १२श-संख्या | 1951. |


## श्रीश्रीगौराङ्गमङ्गलम्

रसो राधिकाया निजे कृष्णरूपे
    कियान् कीदृशो वेत्ति सम्यक् प्रमातुम् ।
समाश्रित्य राधागतौ कान्तिभावौ
    शचीगर्भसिन्धोरभूत् कृष्णचन्द्रः ॥१॥
वदन्त्येवमेके विपश्चित्प्रवीणा
    वयन्तत्र मन्यामहे हेतुमन्यम् ।
निरुक्ते निदाने समाश्रीयमाणे
    परेशस्य सर्वज्ञताहानिदोषात् ॥२॥
युगे द्वापरे दुष्टकंसादिनाशं
    तथा प्रेमधर्मप्रतिष्ठां विधातुम् ।
विभुर्देवकीगर्भतः प्राप्तजन्मा-
    च्छलाद् गोकुले प्राप नन्दाधिवासम् ॥३॥
यशोदापयोदानपुष्टः प्रतीतः
    वयस्यैः समं वाललीलां वितन्वन् ।

मनो गोपिकानां हरन् वेणुनादैः
  परं प्रेमधर्मं प्रतिष्ठामनैषीत् ॥४॥
प्रिये कृष्णचन्द्रे रसो गोपिकानां
  तथा राधिकाया महाभावधारा ।
भजेते महाप्रेमणि दृष्टान्तभावं
  विनादर्शबोधं न शिक्षाविशुद्धिः ॥५॥
ततो राधिका-गोपिका-कृष्णचन्द्रा-
  नुपाश्रित्य योऽसौ स्थितः प्रेमधर्मः ।
स पुंस्त्रीप्रकृत्योर्मिथो योग्यरूपः
  कथं भक्तवृन्दस्य कृष्णे भवेद्वा ॥६।
तथा विश्वसन्तः प्रभूता हि सन्तो
  न वैमुख्यदुष्टा भवन्त्वत्र लोके ।
तदर्थं स्वयं गौररूपं दधानो
  दिदेशात्मभक्तिं सुभक्तैकयोग्याम् ॥७॥
निरस्ताभिमानः सहिष्णुप्रधानः
  प्रणीतान्यमानः प्रियाख्यानगानः ।
स्मरन् कृष्णविच्छेदमासाद्य भावं
  स कृष्णेति वाचा गतो मुग्धभावम् ॥८॥
हरेर्नामसङ्कीर्त्तनं तत्प्रयुक्तं
  सुचारुस्वराढ्यं लसद्भावमुग्धम् ।
विशत् कर्णरन्ध्रेण भक्तान्तरङ्गं
  तमोराशिमुक्तं विधत्तेऽविलम्बम् ॥९॥
चिरं विप्रलम्भोपलम्भेन दीनो
  भवन्नात्मभक्त्या सुभक्तप्रवीणः ।
सरण्यां सरण्यामनन्यानुरक्तः
  सदा गौरचन्द्रो हरेर्गानसक्तः ॥१०॥

हरेर्नामगानं सुधाब्धेः समानं
समास्तीर्य पर्यायतो भूमिभागे ।
विशालोपकारं पवित्रावतारः
प्रचक्रे प्रभुः कृष्णचैतन्यदेवः ॥११॥

प्रियप्रेमधर्मप्रचारेण तावत्
प्रचक्रे मिथो वैरदोषावसानम् ।
समाजे तदा कामिनीकाञ्चनादौ
विरागानुषङ्गादभूद् भूरि शान्तिः ॥१२॥

समीपे द्रवन्तं सुनीलाम्बुराशिं
समालोक्य कृष्णेति बुद्ध्यानुविद्धः ।
समुत्पत्य तत्राभवत् प्राणमुक्तः
क एवं तदन्यः स जीयादमेयः ॥१३॥

सनित्यं सनृत्यं सहाद्वैतचन्द्रं
हरेर्नामसङ्कीर्त्तने भावभाजम् ।
विलोक्यामलं कृष्णचैतन्यदेवं
मनस्याविरासीद्रसो नास्तिकानाम् ॥१४॥

विधर्मापि शर्मण्यसङ्कीर्तनस्थे
स्वधर्मानुवृत्तौ निरूढ़प्रतिज्ञे
दृढ़श्रद्धयाधत्त चित्ते मृदुत्वं
नमो नामसङ्कीर्तनायेद्धधाम्ने ॥१५॥

परित्यज्य विष्णुप्रियां मुग्धपत्नीं
शचीमातरञ्चाप्यजस्राश्रुपूर्णाम् ।
श्रितो येन गौरेण सन्न्यासधर्मः
स एको महात्यागशक्तेः प्रतीकः ॥१६॥

# मासप्रकृतिः

यस्मिन् चान्द्रे मासि प्रायेण चित्रानक्षत्रे पूर्णिमाया अन्तो जायते, स चान्द्रचैत्र इति व्यपदिश्यते। सूर्यस्य मीनराशिस्थितिकाल एव तस्य सम्भवात् स कालः सौरचैत्रसंज्ञां लभते। अयं वङ्गीयाब्दस्यान्तिमो मासः। वङ्गीयगणनानुसारेणायं वसन्तर्त्तोर्द्वितीयो मासः, अभिधानादि-गणनानुसारेण तु प्रथम एव। अस्मिन मासि जातकर्मादिसंस्कारसंकल्प-वाक्येषु 'चैत्रे मासि मीनराशिस्थे भास्करे' इत्येवं माससमुल्लेखः कार्यः। अत्र श्रीश्रीलक्ष्मीपूजा गृहस्थैः कर्त्तव्या।

अस्मिन वर्षे सौरचैत्रस्य अष्टमे दिवसे दोलयात्रासम्बन्धी वह्न्युत्सवः, नवमे श्रीश्रीकृष्णस्य दोलयात्रा, चतुर्द्दशे स्कन्दषष्ठी, षोड़शे शीतला-ष्टमी, विंशे वारुणी, एकोनत्रिंशे अशोकषष्ठी, श्रीश्रीकात्यायन्या वासन्त्याः पूजायाः षष्ठ्यादिकल्पारम्भः सायमामन्त्रणाधिवासौ च। त्रिंशे दिवसे सप्तमीपूजा। एकत्रिंशे अशोकाष्टमी श्रीश्रीअन्नपूर्णापूजा चैत्रसंक्रान्ति-कृत्यञ्च। तत्रैव चैत्रसंक्रान्तिनिबन्धनः शिवमहोत्सवः उपवासपूजादिकं पूर्वदिने। सौरचैत्रस्य नवमे दिवसे दोलपूर्णिमायां श्रीमन्महाप्रभुचैतन्य-देवस्याविर्भावमहोत्सवः। तद्दिन एव वङ्गेषु चैतन्याब्दप्रारम्भ-महोत्सवः। चैतन्याब्दस्य चतुःषष्ट्यधिकचतुःशती संख्या व्यतीता। प्रवर्त्तते च तद्दिने पञ्चषष्ट्यधिकचतुःशती संख्या। तस्मिन्नेव दिने खृष्टधर्मावलम्बिनां 'गुड्फ्राइडे' इत्याख्यप्रशस्तकालसम्बन्धः। अष्टादशे दिवसे श्रीधामनवद्वीपे श्रीमन्महाप्रभोः दशमदोलयात्रामहोत्सवः। त्रयोविंशे दिवसे संवत्संज्ञकवर्षारम्भस्मृतिः। तस्य वर्षस्य सप्ताधिका द्विसहस्री संख्या व्यतीता प्रवर्त्तते चाद्य अष्टाधिका द्विसहस्री। पञ्चविंशे साहित्य-सार्व्वभौमस्य वङ्गभाषाकविकुञ्जरस्य वङ्किमचन्द्रस्य तिरोभावस्मृतिः। सप्तविंशे श्रीश्रीतारकेश्वरधाम्नि श्रीश्रीतारकनाथस्य महादेवस्य पञ्चदिन-

व्यापिपूजनसमारम्भः। एकत्रिंशे दिवसे च त्रसंक्रान्तिपुण्याहे फरिद्-पुरान्तर्गतकोटालिपाड़प्रभृतिषु बहुस्थानेषु नानाविधपुण्यानन्दमहोत्सवः।

---

## नवसूक्तिमालिका

विद्यार्जने वा धनसञ्चये वा यावानपेक्ष्यो मनुजैः प्रयासः।
शीलप्रकर्षानुगतौ न तावांस्तथापि किं सञ्चरिते न रागः॥
ये पूर्वजाताश्चरितावदाता ये चाधुनापि प्रथिता धरायाम्।
तेषां विशुद्धे चरितेऽनुरक्ता यशो हितञ्चापि जना वृणुध्वम्॥
वाचाथवा कर्मचयेन लोके युष्माकमन्ये न वहन्तु दुःखम्।
सर्वत्र सिद्धो भगवान् परेशस्तस्यैव तद्दुःखसुखे न भिन्ने॥
शक्त्योपकारं भविनां कुरुध्वं नैवापकारं हृदये वृणुध्वम्।
शक्तिः समिद्धा भगवत्प्रदत्ता तथैव लोके भविता फलाढ्या॥
वीर्य्येण रक्षां कुरुतापरेषां धनेन दैन्यं विधुनीत धन्याः।
ज्ञानेन चाज्ञानमपाकुरुध्वं तत्तत्फलं सन्ततमातनुध्वम्॥

---

## मतिमञ्जरी

मान्याः पारिषदाः! पश्यतामेवास्माकमेकः संवत्सरो व्यतिक्रान्तः। अनेन च कालपर्य्यायेण कियत्यो विपदः कियत्यश्च सम्पदः समनुभूताः यासां मिथः साङ्कर्य्येण समुपलब्धं सुखदुःखयोः संसारपरिणामभूतं साङ्कर्य्यम्! तथाहि महता दौर्भाग्येण सर्वस्या एव वसुन्धराया भौतिकदेहं विमुच्य स्वकर्मोपार्जितं लोकमभिप्रस्थितो नातिचिरात् पूर्व-मस्मिन्नेव संवत्सरे तत्रभवानग्र्यिुगनायकः कारणान्तरेण राज्यान्तर-

माश्रित्य योगमार्गं प्रविष्टो लब्धात्मसमुत्कर्षः श्रीमानरविन्दो नाम महापुरुषकुञ्जरः। यदीयं नवीनं दार्शनिकमार्गमधिकृत्य साम्प्रतं तदीयशिष्या योगादिमार्गेषु सुविश्वस्ता रमन्ते।

गतश्च पारलौकिकीं गतिं जनितभारताभ्युदयः सुगृहीतनामधेयो भारतीयराष्ट्राधिकारसहप्रधानमन्त्री प्याटेलमहोदयः। यस्यैव बुद्धिनैपुण्येन भारतान्तर्गतखण्डराज्याधिकाराः प्रायेण सर्व एव भारतीयराष्ट्राधिकारतन्त्रतां सच्छन्दमङ्गीचक्रुः। यस्य च नीतिचातुर्य्येण भारताधिकाराद् भीतिमुपगतानि भारतविरोधबुद्धिं स्वप्नेऽपि जहुः परराष्ट्राणि।

तदेतयोः सर्वपृथिवीविदितमहिम्नोः परलोकप्रयाणेन जगतो महान्तमपचयमन्यथानपनेयं मन्यमानाः संवत्सरावसानेऽपि वयं खिद्यामहे समाशास्महे च श्रीभगवतः पदप्रान्ते कातर्य्येणास्य खेदस्य प्रतीकारम्। ये चापरे विशिष्टाः परलोकमुपेताः परिषदः प्रेष्ठाः, तेषामपि वियोगजेन विषादेन सुतरामुन्मनायिताः शोकदूना वयमत्र मानसवैकल्यातिशयप्रतीकाराय भगवन्तमेव शरणीकुर्मः। दुस्तरः किल कालप्रभावमहासमुद्र इत्येवास्तु नः सान्त्वनास्थानम्।

आनन्दनिदानमप्यनल्पमेव शक्यजल्पम्। तथाहि संस्कृतसाहित्यपरिषदि संस्कृतशास्त्रगवेषणाविभागपरिचालनार्थं तथा संगृहीतपूर्वहस्तलिखितग्रन्थसूचीनिर्माणव्ययनिर्वाहार्थं वङ्गीयराष्ट्रशिक्षाधिकारेण वितीर्णः कियानर्थराशिः। तेनैव सहायेन प्रचलद्रूपश्च वरीवर्त्ति तदिदं कृत्यद्वयं निपुणाधिष्ठातृसन्नियोगेन। संस्कृतसाहित्यपरिषदः स्वीयभवनस्य बहुकालात् पूर्वमारब्धस्य अन्तरा सुचिरमवरुद्धनिर्माणव्यापारस्य महता सौभाग्येन समाप्ता प्रथमभूमिका, यत्र सुदीर्घे प्रकोष्ठे भवितुमर्हति सुबृहत्सभाधिवेशनप्रबन्धः सुप्रतिष्ठते चैकभागस्थे रङ्गमञ्चे सामयिकोत्सवादौ संस्कृतरूपकाभिनयसौकर्य्यं, न चिरादेव तत्र परिषदः कार्य्यालयस्य ग्रन्थालयादेश्च स्थापनसौकर्य्यसम्भावनया सुतरां वयं प्रमोदमनुभवामः।

बहिरपि वङ्गराष्ट्रीयशिक्षाधिकारेण संस्कृताभ्युदयाय नवीनकृत्य-विशेषाणां साधनार्थमर्थराशीनां विनियोजनं संस्कृतप्रियाणामस्माकमत्यानन्द-कारणम्। तथाहि वङ्गराष्ट्रीयशिक्षाधिकारेण प्राच्यपद्धत्या प्रचलितानां संस्कृतविद्यालयानां साहाय्यार्थं वितीर्य्यते नियमेन प्रतिमासम् तदध्या-पकेभ्यः सुयोग्यतया प्रतिपन्नेभ्यो भूयानर्थराशिः, राष्ट्रीयसंस्कृतमहा-विद्यालये प्रतिष्ठिता अतिरिक्ताश्चत्वारः काव्यसांख्यवेदज्योतिषशास्त्राध्या-पनार्थमध्यापकाः, चतुर्णामध्यापकानामनुमोदनेन तथा चतुर्णां सहकारि-गवेषणाकारिणामनुमोदनेन प्रतिष्ठित एकः संस्कृतशास्त्रगवेषणाविभागः। वङ्गीयसंस्कृतशिक्षापरिषदि परीक्षकादीनां संस्कृतशिक्षासंस्कारसमिति-प्रस्तुता पारिश्रमिकार्थवृद्धिरनुमोदिता। प्रतिष्ठापिता च मेदिनीपुरान्तर्गत-'काँथि'नगरे तथा 'नवद्वीप'नगरे संस्कृतमहाविद्यालयद्वयी विविधशास्त्रा-ध्यापनार्थमनेकाध्यापकसमुपस्कृता। तदेतत् सर्वमत्यानन्दकरमेवास्माकं संस्कृतसमुन्नतिप्रियाणाम्।

अन्ते च वयं तेषां समीपे ससाधुवादं कृतज्ञतां घोषयामः, ये बह्वायास-प्रसूतपरमोपादेयनिबन्धदानेन पत्रोपचारानुकूलद्रव्यवितरणेन परिषदः कृत्यान्तरसमूहसम्पादनार्थमर्थविनियोगेन सदुपदेशप्रदानादिना वा यथाकालं परिषदमिमामुपकृतवन्तः, भगवान् सर्वाधिनाथः सर्वदा विदधातु तेषां कल्याणमित्यर्थयामहे कामयामहे च सविनयं संस्कृतज्ञताकं सुमधुर-सम्भाषं सुदृढप्रत्ययञ्च भाविन्यपि वर्षे तेषामबाधमानुकूल्यम्। ॐशान्तिः!

# आनन्दलतिका

( पूर्वानुवृत्तम् )

द्वारका निखिलरत्नपूरिता-
प्येतयैव परमुज्ज्वलीकृता ।
कैरवादिकुसुमावलिकीर्णा१
वापिका सुरुचिरेव नलिन्या ॥
रूपयौवनभरैः स्मरलोभि-
कोटिकोटिमहिलागणपूर्णा ।
अद्भुताजनि परन्त्वनयैव
मालया सुररिपोरिव देहः ॥
प्रेमकण्टकितसादरकान्त-
पीनपाणिधृतकोमलपाणेः ।
राजते सरसि वर्त्मनि रेवा
हस्तिहस्तकलिता नलिनीव ॥ कुलकम् ।
अथ भ्रमरपंक्तिभिश्चकितनेत्रनीलोत्पला
लला]ट]तिलकोल्लसद्द्युमणिशोभिवक्त्राम्बुजा ।
विलोलकुटिलालकस्फुरितमौक्तिकैराचिता
चलत्कनककुण्डलद्युतिविकाशिगण्डस्थला ॥
उरःस्थलघनोल्लसद्विविधहारभारानता
दरस्मितसुधारसस्नपितपक्वबिम्बाधरा ।
पटान्तरविलोकने नयनचातुरीपण्डिता
नितम्बनवकिङ्किणीक्वणितमाधुरीमण्डिता ॥
चलच्चरणनूपुरक्वणितनिन्दिपुष्पन्धया
पयोधरभरश्रमस्खलितघर्मबिन्दूत्करा ।

---

१। सुभ्रुया Ms

पुरोदरविनिर्गतत्वरितपाद्यानाकुला१
प्रभूतकुलकामिनीकलितमण्डलीरञ्जिता ॥
प्रियप्रणयपालिनी तदनुगामिनी कामिनी
मुनेरपि विमोहिनी दमनभूपतेर्नन्दिनी ।
ससम्भ्रमपदद्वयालसगतिर्विनम्रानना
सखीगणसमावृता विशति सादरं मन्दिरम् ॥
अनेकगणिकागण[णा०]विविधगीतनृत्योद्यता[ः]
पतन्ति कुसुमान्यथो गगनचारिणां पाणितः ।
नदन्ति पटहानकाः क्वचन भूरिभेरीरवा[ः]
स्तुता हुलहुलीरवैर्विविधकौतुका द्वारका ॥
सुतं बधूपाणिनिबद्धपाणिं
चिरेण दूरादवलोक्य देवी ।
प्रमोदनेत्रस्रवदस्रबिन्दु-
स्तनस्तनं गद्गदवाग् बभूव ॥
कुलाङ्गनाभिर्वरणादिकानि
सम[श्नु]वाना स्वकुलोचितानि ।
रत्नैरनेकैर्जननी सुतस्य
निर्मञ्छयामास मुखारविन्दम् ॥
अङ्के निधाय तनयं जननी चिरेण
सम्मार्ज्य पाणिकमलेन मुखेन्दुमस्य ।
२आघ्राय मूर्धनि निभाल्य तदङ्गशोभा-
मानन्दजं नयनवारि विमुञ्चति स्म ॥
उन्नमय्य चिबुके मुखे तयो-

---

१ नामिनी Ms २ मूर्द्धि Ms.

रेकदैव निपुणं निभाल्य सा।
रुक्मिणीसुतवधूभवगर्वं
खर्वमेव कलयत्यथ चित्ते॥
[१]तावङ्के विनिधाय वीक्ष्य वदने संमार्ज्य देहौ करे-
णामोदं यमवाप निर्भरमियं देवी कलिन्दोद्भवा।
[२]न त्रैलोक्यमहाधिपत्यविभवे गीते नरेंदुर्लभे
नो पीयूषरसे न चामृतपदे नान्य[त्र कु]त्रापि सः॥
भूलोके जगदीशकोमलपदद्वन्द्वेऽरविन्दाङ्किते
कुब्जी ब्रह्मपदं जगाम कुटिलः कंसोऽपि वंशान्तकः।
वैकुण्ठाधिकनिर्वृतिं निरुपमां गोप्योऽपि संलेभिरे
तस्यापत्यकलत्रसौख्यविभवः कैर्निस्त्रपैर्वर्ण्यते।
[३]ईषद्दृष्टिरुताल्पवाक्यविभवः स्तोकायुरज्ञो जनो
विश्वालोकक(?)वागधीश्वरसदानन्ताखिलज्ञानिनः।
यन्मौढ्याद् गुणवर्णनाय रसनां व्यामोहयत्यादरा-
[४]च्चापल्यं तमिदं दयार्द्रहृदयैः क्षन्तव्यमार्यैर्बुधैः॥
[५]चित्ते कामवशाः स्वरे मृगतृषा वक्त्रेन्दुलुब्धेऽक्षिणि
कर्णे च प्रतिवाचिकं प्रणयिणि स्पर्शादरिण्यां त्वचि।
पाणाविङ्गितसेविनि स्तुतिकथामुग्धे रसज्ञादले
धावत्स्वेषु रतेन्द्रियेषु महिमा केन प्रभोर्वर्ण्यते॥ (?)
कविवरकृतकाव्येष्वत्र चित्रेषु सत्सु
[६]तदपि[सुकविमु]ख्यैरेतदालोचनीयम्।

---

१ वदनं Ms.
२ नर Ms.
३ स्तोकोयुवाब्धो Ms.
४ स्वहृदयैश्च Ms.
५ शश्वदे
६ तादपि सवल Ms.

सति हि कनकहारे रत्नमुक्तादिचित्रे
लघुरपि हृदि काची न्यस्यते कामिनीभिः ॥

इत्यानन्दलतिकायां पञ्चमं कुसुमम् ।

समाप्तोऽयं ग्रन्थः ॥

शाके वेदमुनीषुचन्द्रस(व)मिते पक्षे वलक्षे मधौ
श्रीमद्वन्द्यपदारविन्दयुगलश्रीतर्कवागीश्वरम् ।
नत्वा श्रीद्विजकृष्णनाथवटुना काव्यं मया कल्पितं
दोषावेशमपास्य साधुहृदयैरास्वाद्यमेतच्चिरम् ॥

---

# वृत्तवर्तिका

श्रीमन्तो विपश्चित्प्रवराः ! नातिचिरात् पूर्वमस्माभिः काश्मीरमण्डल-मण्डनभूतेन माननीयश्रीमत्परमानन्दपण्डितप्रवरेण मुद्रापित-न्न प्रचारित-मेकं पत्रं 'सरस्वतीसमुपासकेभ्यो निवेदनम्' इति शीर्षनामधेयं समासादितम् ; यत्र काश्मीरमण्डलस्य प्राचीनं संस्कृतविद्यासम्बन्धि-महिमानमपरिमाणमुद्घोष्य वर्त्तमानञ्च तदपकर्षमसीमं पुनः तदुद्धाराय एकस्य संस्कृतमहाविद्यालयस्य प्रतिष्ठाप्रक्रमः प्रस्तुतः समुपलक्ष्यते। तस्यै-वांशविशेषमुद्धृत्य तद्विषये विशेषविज्ञानं वाचकमहोदयानामनुकूलयामः। एतदुक्त तत्र पत्रे,—

'अस्माभिर्मनसि सुविमृश्य निर्धारितं यद् वयं काश्मीरमण्डलस्य प्रजाया यथाशक्ति संस्कृताध्यापने यत्नं विधास्यामः। कार्यारम्भः श्रीनगर एव भविता। इयमायोजना तावदस्माकमेवमस्ति, यत श्रीनगरे स्थापनीय एकः कन्यामहाविद्यालयः, योऽसौ कालान्तरे विश्वविद्यालयत्वं धारयेत। आदौ विद्यालयेऽस्मिन कन्यानां भारतीयधर्मसभ्यतयोः शिक्षणपुरःसरं

रत्न-भूषण-प्रभाकर-प्राज्ञ-विशारद-शास्त्रिपरीक्षाणां प्रबन्धो भविष्यति, येन मातृशक्तिः संस्कृतभाषाविज्ञानवती स्यात्। युवकास्तु वर्त्तमानप्रणाल्यनुसारं प्राचुर्य्येण धनागमसाधनभूतामांग्लचालितां पद्धतिमेव शिक्षणविधौ समनुसरन्तीति नहि पुरुषाणां महाविद्यालयस्यावश्यकता। पुरुषाणां शिक्षाप्रदानाय अस्माभिर्लघुविद्यालयाः समुद्घाटनीयाः, यत्र अन्यत्र अधीयानाश्छात्राः अन्यत्र कार्यं कुर्वन्तश्च कर्मचारिप्रभृतयः सायंकाले अध्येतुं पारयेयुः। एषु विद्यालयेषु संस्कृतभाषया साकं रामायणभगवद्गीतादिधार्मिकग्रन्थानामध्यापनं भविष्यती'त्यादि।

अस्माभिरेष प्रारम्भः समीचीन एव मन्यते। बहोः कालात् पूर्वमस्माभिरपि कन्यानां संस्कृतशिक्षादानेन संस्कृतविद्यायाः परिरक्षणे महादानुकूल्यं भवतीति समुद्घोषितं सोपपत्तिकमेव। लघुविद्यालयेषु पुरुषप्रयोजनानुकूलेषु रामायणादिपाठनव्यवस्थापि सुसमीचीना। तेन हि संस्कृतशास्त्रं प्रति तेषां महती श्रद्धा, तया च महानभ्युदयः संस्कृतशास्त्रस्य तत्र तेषामुत्तरोत्तरं गभीरशिक्षासु प्रवृत्तिजननेन।

तत्तद्विद्यालयेन नान्ये विश्वविद्यालया अनुसरणीयाः, परं स्वतन्त्रता रक्षणीया, अन्यथा स्वाभिमतरीतेः साकल्येन शिक्षादिव्यापारेषु परिचालयितुमशक्यत्वात्। कन्यकाविद्यालयेषु आदौ किञ्चित् सुगमं स्वल्पविषयं व्याकरणं सरलं पञ्चतन्त्रादि काव्यञ्च भाषाज्ञानाय पाठ्यतया निर्द्देश्यं संवादमुखेन च संस्कृतभाषाशिक्षणं देयम्। नियमेन च रामायणमहाभारतादीनामंशाः अनन्तरभूमिकायां पाठ्यतया निर्द्देश्याः। ततो यथाकामं दर्शनादयो विषयाः। एवमेवं पाठ्यादिनिर्द्देशेन परीक्षाविशेषप्रवर्त्तनेन तत्तत्परीक्षाः समुत्तीर्णानां राष्ट्राधिकारस्वीकारणया विश्वविद्यालयान्तरसमादरः शक्यो लब्धुम्। परीक्षाभेदेन पाठ्यविशेषसूची विशेषज्ञसमित्या कारयितव्या। समासतस्तावदिदमभिधीयते विस्तरे समपेक्षिते कालान्तरे सूचनालाभतः प्रतिपादयिष्यते।

---

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court pcet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV.
No. 1.
३४श-वर्षस्य
१म-संख्या

May 1951
१८७३-शकीये
वैशाखे
मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)।
Foreign price—14s.



## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामबाजार
कलिकाता-४

संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिमा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIV. No. 1. | १८७३-शकीये वैशाखे ३४श-वर्षस्य १म-संख्या | May 1951.

## नववर्षमङ्गलम्

एहि नववर्ष भुवि वर्ष मधुसञ्चयं
लोकहृदि देहि नवशान्तिविभवोदयम् ।
देववरराशिरिव भव्यशतकारणं
सञ्जनय भूरिजयमाधिकुलवारणम् ॥१॥
वहतु तटिनीकुलं मधुररसधारया
चरतु पवनश्चिरं कुसुमरसमालया ।
हसतु कुसुमावलीकलितनववल्लरी
वितरतु महोत्सवं प्रकृतिकनमाधुरी ॥२॥
अतिगतविपत्तयः स्मृतिसरणिदूरतः
सततमिह यान्तु नः सुकृतततियोगतः ।
सपदि नवसम्पदो विमलसुखसिद्धये
प्रचयमभिवृण्वतां जगति विगतामये ॥३॥
सुखकलितजीवितस्थितिकुशलसाधनं
प्रचुरतरशस्यमुपयातु वसुधा धनम् ।
वसनविरहेण भुवि मास्तु विपदुद्भवः
शान्तिमुपयातु जनरोगसमुपद्रवः ॥४॥

समयमनु नीरदा विदधतु सुवर्षणं
तरुषु फलसञ्चयो व्रजतु भृशवर्द्धनम् ।
क्षुधितजनतानिशं भजतु बहुभोजनं
न खलु समयाद् बहिर्व्रजतु जनजीवनम् ॥५॥

परिगतमहिंसया निखिलहितसङ्गतं
भवतु चिरमुन्नतं शमनिलयभारतम् ।
सुचिरपरतन्त्रताजलधितरणाहितं
सुखमनिशमेधतां बहुसुकृतसाधितम् ॥६॥

विमलमतिरेधतां प्रतिमनुजमानसं
तिमिरमभिलीयतां लयमयतु साहसम् ।
भजतु भुवि शात्रवं शममिह परस्परं
कृतयुगमुदित्वरं भवतु चिरसुन्दरम् ॥७॥

ग्रहनिकरसंस्थितिर्भवतु हितसाधनो
विबुधकरुणास्तु नो दोषविनिवर्त्तनी ।
जलपवनवह्निजाद्यपचयविवर्जिता
धरणिरनुवासरं भवतु कुशलान्विता ॥८॥

खरकरसुधाकरौ मधुरकरदानतः
कुशलमभिवर्षतां चिरमपरिमाणतः ।
भवतु नववत्सरः क्षपितदुरितादरः
त्रिदशकरुणाभरप्रभवरुचिभास्वरः ॥९॥

वहतु सुरभारती प्रतिविषयमुन्नतिं
तदनुगतमानवा दधतु कुशलायतिम् ।
पुनरपि तपोवनं यमनियमशोभनं
श्रयतु नवभारतं सकलसुखसाधनम् ॥१०॥

---

# मतिमञ्जरी

मान्याः पारिषदाः ! पश्यतामेवास्माकमतीत एकः संवत्सरः, प्रवर्त्तते चायमपरो नवीनो नाम। एवमेव हि प्रत्यहमतियन्तं नोपलक्षयामहे वयं समयसङ्घातम्। केवलं व्यतीते समये समुपजातां विपदं स्मरन्तः खिद्यामहे प्रमोदामहे च तथैव प्रमोदवृत्तान्तम्। अद्यापि स एष नियमो न ग्रस्तो व्यभिचारेण। तदद्य श्रीभगवच्चरणारविन्दे प्रवर्त्तमानवत्सरस्य सर्वथा मङ्गलमयमभ्युदयं कामयामहे, प्रार्थयामहे च सर्वेषामेव भवतां समीपे सश्रद्धं वा सप्रणयं वा सस्नेहं वा सकृतज्ञताकं सानुरोधश्च सपादवन्दनं वा सकण्ठग्राहं वा सशुभाशीर्वादं वा सकलकृत्यानुकूल्यम्।

अस्माभिरस्मिन् वर्षे पत्रिकायाः कृत्यपद्धतौ कल्पितः कश्चिदन्यथा-भावः। तथाहि व्यतीते वर्षे प्रतिमासं मासप्रकृतिरिति नाम्ना माससम्बन्धि-विशेषनिवेदकः कश्चन निबन्धो नियमेन समुपहृतः श्रीमत्सु, स एष वर्त्तमाने वर्षे परिहास्यते। माससम्बन्धिविशेषाणां प्रायेणैकविधत्वात् पुनरुक्ततादोषकलुषस्य तत्रातिक्रमितुमशक्यत्वात्। अन्यत् सर्वं प्रायेण समानमनुवर्त्तिष्यामहे, अन्तरान्तरा च नवीनपद्धतिसमुपहारे प्रयत्न-मवलम्बिष्यामहे, सुखलेखनादिग्रन्थप्रकाशो यः किलास्माभिरारब्धः स यथा-सम्भवमविच्छेदेन यथा शक्योऽनुवर्त्तितुं तत्रापि सावधानां दृष्टिं समारोप्य श्रीमतां संस्कृतविद्यानुरागिणां मानसीं प्रीतिमुपकारञ्च सम्पादयितुं प्रयत्नभूमानमाश्रयिष्यामहे। निष्कम्पामनुकम्पां विदधातु भगवान् सर्व-शक्तिमानस्मत्कल्पितपद्धतिपरिपुष्टये सृष्टये च महोपकारस्य महनीयायाः संस्कृतविद्यायाः। कुरुताञ्च प्रवर्त्तमाने वत्सरे सकलविघ्नसङ्घातप्रतिबन्धम्। सन्तु स्वस्तिमयानि सर्वाण्यस्मदीयानि कृत्यानीति शम्।

# नवसूक्तिमालिका

स्वल्पज्ञतामेत्य वृथैव लोके
बहुज्ञताख्यातिरभीप्सिता चेत् ।
काले कदाचिद् भवतोऽपमानः
समुद्भवेदेव विदां समाजे ॥

एकत्र चेदस्ति विशेषविद्या
तथापि कीर्त्तिर्भविता त्वदीया ।
तत् किं मृषा भूरिविदः प्रशस्तिं
प्रतार्य लोकानधिगन्तुमिच्छेः ॥

जानीहि विज्ञेयमशेषमेकं
तत् स्वल्पमप्यस्ति भवत्प्रशस्त्यै ।
किं तेन दीपेन गृहस्थितं यः
सर्वं तमो नैव निहन्ति दीप्तया ॥

स्वाभाविकी यत्र रुचिस्त्वदीया
तत्रैव भूरि श्रममाश्रय त्वम् ।
एवं कृते तत्र विशिष्टविद्या
स्वल्पेन कालेन भवेदवश्यम् ॥

---

# कालिदासीय-कुमारसम्भवम्

( पूर्वानुवृत्तम् )

[ निबन्धकः— श्रीकरुणाकुमारशास्त्री ]

तृतीयाध्यायः

यद्यपि संस्कृतसाहित्यस्य नामोल्लेखे कालिदासस्य रघुवंशमेवादावस्माकं हृदये प्रतिभाति, तथापि कैश्चिद् हेतुविशेषैः कुमारसम्भवं महाकाव्यं रघुवंशात् प्रागेव कविना विरचितमिति मन्यामहे। अत एवेदं कालिदासस्य प्रथमं

महाकाव्यमित्यनुमायैव कुमारसम्भवस्यालोचना प्राङ्मया कर्त्तव्या। ॥ कुमारसम्भवस्य रघुवंशस्य च रचनाप्रणाल्या वस्तुसमावेशस्य च विचारेण प्रायेण सर्वएव अंशा हृदयग्राहिणो विशेषाह्लादविवर्द्धकाश्च प्रतीयन्ते। परन्तु कुमारसम्भवाद् रघुवंशस्य वैशिष्ट्यमेतदेव यद्, रघौ तयेव चारुतराः। अपरञ्च कुमारसम्भवे क्वचित् क्वचित् कालिदासोचितनैपुण्याभावः परिलक्ष्यते, रघुवंशे तु न तथा। यदा वयं रतिविलापमजविलापञ्च, पार्व्वतीपरिणयमिन्दुमतीपरिणयञ्च, हिमालयगृहे जामातुश्चन्द्रशेखरस्य प्रवेशं तथा विदर्भाधिपतेर्गृहं प्रति राजकुमारस्याजस्य यात्रां सममेव पठामस्तदास्माकं मन्तव्यस्य याथार्थ्यं प्रमाणितं भवति। कुमारसम्भवस्य तादृशस्थलेषु ये विषया वर्णिता रघुवंशेऽपि प्रायशस्तयेव पुनरावृत्ताः, कुत्रापि वेषतपरिवर्त्तिताकारेण तत्तद्भावस्य पुनरुल्लेख एव कृतः। वस्तुतः कुमारसम्भवे कालिदासो या या हिरण्मयीः प्रतिमा अङ्कितवान, रघुवंशे तु तास्ता बहुभिर्हीरकमुक्तादिखचितानवद्याभरणैः सज्जितवान्। अतो मन्यते कुमारसम्भवं रघुवंशात प्रागेव रचितमिति।

अपरञ्च—कुमारसम्भवस्य नायकदम्पती हरपार्व्वत्यौ स्वर्गदेवते स्वर्गमर्त्त-रसातलानामुपास्यभूते एव। रघुवंशस्य प्राधान्येन प्रतिपाद्यपुरुषाः पुनर्मर्त्त्या एव भारतीयप्रधानतमनरपतिर्वैवस्वतमनोर्वंशकरीराः। कुमारसम्भवे लीलास्थलानि स्वर्ग-मर्त्त-रसातलानि, रघुवंशे तु मर्त्त्यलोकमात्रम्। अयं ह्येकश्चिन्तनीयो विषयः। नवीन-कल्पनया प्रायशश्चेदृश एव पदार्थो वर्ण्यते यत्र कवेरनियन्त्रिता कल्पना यथेष्टं प्रयुक्ता भवति। मर्त्त्यानां नयने सुकवि-चित्रितमदृश्यजगच्चित्रं मनोज्ञमेव भवितुमर्हति। परन्तु नियतपरिदृष्टानां चिरपरिचितानां मर्त्त्यलोकविषयाणां वर्णने चमत्कारित्वसाधनं हि कविना दुष्करमेव। अतीन्द्रियपदार्थानां वर्णने कवेः पर्याप्तं प्रभुत्वमस्ति। परन्त्विन्द्रियग्राह्याणां नित्यानुभूतानां पदार्थानां वर्णने कविकल्पनातीव संयता भवति। स्वर्गमन्दाकिनीवर्णने स्वर्णकमलं काञ्चनी तटरेखा च नासम्भाव्ये। परन्तु मर्त्त्यभागीरथीवर्णनकाले

सुतरामवधानेन मर्त्त्यहृदयानुगमनेन कविना गन्तव्यम्। अन्यथा येषां सौन्दर्यदर्शनेन जनाश्चमत्कृता जातास्तेषामनुभूतपदार्थानां प्रतिकृति-प्रदर्शनात् पुनर्जनानां विस्मयातिशयो भविष्यति न वेति दुरुच्छेदः सन्देहः। अतः कालिदास आदौ लोकनयनातीतवस्तुमयं दैवत-वृत्तान्तमेव स्वीकृत्य काव्यं निर्म्ममे। सनातनधर्म्मावलम्बिनो वयं ययोर्नामोल्लेखेनैव पवित्रम्मन्या भवामः,—भक्त्या च ययोर्नामकीर्त्तनेन शय्यां त्यजामः,—दिनान्ते च दिनगतपापक्षयं साधयामस्तयोरतिरञ्जन-मस्माकमार्यहृदयानामानुकूल्यायैव,—नतु प्रातिकूल्याय—। अत एव तादृशाराध्यवर्णने कवेरधिकारभूमिर्विस्तीर्णा। 'तयोः प्रभावं दर्शयितुं कविरकालवसन्तमाकाशभवां सरस्वतीं वा स्रष्टुं समर्थः। तत्र च सौन्दर्यविभूतीनां स्वाच्छन्द्येन प्रकटने कवेरप्रतिहताधिकारः। परमैहिक-पदार्थानां वर्णनकाले कविना नियतैहिकवस्तुतन्त्रकल्पनाधीनेन भवितव्यम्। शरच्चन्द्रः सर्वैरस्माभिर्दृष्टः। परन्तु शरच्चन्द्रवर्णनकाले वर्णयित्रा तादृशं तत्त्वं वर्णनीयं—तादृशं सौन्दर्यं चोद्घाटयितव्यं—यद् यदस्माकं प्राकृतनयनेषु नैतावत्कालं प्रतिफलितम्। तेनैव प्रकारेण तदुपभोजयितव्यं येन प्रकारेण न तदुपभुक्तमस्माभिरेतावत् कालम्। तथैव वर्णना चमत्कारिणी जायते। मर्त्त्यपदार्थमवलम्ब्य काव्यरचनाकाले कविना पदार्थे साधारणाः सर्वव्यापारा अवश्यमेव प्रदर्शनीयाः। न केवलं त एव किन्तु तदतिरिक्तमपि किञ्चित् प्रकटनीयम्। अन्यथा ह्येतादृशं कवेः साहसं विडम्बनमेव। अत आदौ कालिदासोऽतिमर्त्त्य-चरित्रमुपजीव्य कुमारसम्भवं विरचितवान्। पुनर्हरपार्वत्यौ वर्णयन् कालिदासो बहुस्थलेषु तयोश्चरित्रयोर्मर्त्त्यधर्म्मानारोपितवान्। उदारमानवप्रकृतेः श्रेष्ठगुणैर्दैवदम्पती सज्जीकृतवान्। दैवदम्पत्योर्निर्म्मल-चरित्रेऽतिविशुद्धानां पार्थिवधर्माणां छायापातं सम्पाद्य पार्थिवदर्शकानां नयनरञ्जनं विहितवान्। तस्माद्धरपार्व्वतीचरित्रयोः कुत्र कुत्रापि वा गौणतो विशुद्धमानवप्रकृतेर्विशुद्धतमानामंशानां प्रतिविम्बनं वयं पश्यामः।

परन्तु विचित्रमेतत् तत्र कुत्रापि मर्त्यधर्मप्रकृतेः पार्थिवभोगलालसाया लेशोऽपि न विद्यते। अत एव हरपार्वतीचरित्रं पार्थिवच्छायासम्पन्नमप्यपार्थिवमननुमेयञ्च।

अतिमर्त्यचरितमय—कुमारसम्भवरचनां समाप्य कालिदास ईदृशं काव्यं रचितवान् यत्र प्राधान्येनैव मर्त्यानामतिमर्त्यानाञ्च व्यापाराणां सन्निवेशो दृश्यते। तच्च मेघदूतम्। तत्र यक्षस्य यक्षवध्वाश्च देवयोनित्वे सत्यपि मर्त्यधर्मलालसाविकारः। तत्रत्यवर्णने स्वर्ग्यो मर्त्यश्च भावो विद्यते। तत्र जड़मेघस्य यादृशं दौत्यमस्ति, कनकसिकतामुष्टेरपि क्रीड़ास्ति; काञ्चनीं वासयष्टिमाश्रित्य मयूरस्य तालानुषङ्गिकं नर्त्तनं विद्यते। मुग्धाया यक्षवध्वाः स्वर्णवलयशिञ्जितमप्यस्ति। वस्तुतोऽतीन्द्रियाणामिन्द्रियग्राह्यपदार्थानां च तुल्य एव समावेशो दृश्यते। परन्तु तत्रैकस्य पदार्थस्याभावः,—तथाहि नास्ति तत्र कश्चिन्महानादर्शो लोकशिक्षाया योऽपरिहार्य एव काव्ये। केवलं भोगलालसापरत्वमत्युच्छ्वसितम्। अतः परं स्वकीयशक्तौ जातागाधविश्वासः कविर्निरवच्छिन्नमर्त्यचित्राण्यङ्कितवान समाजशिक्षायां सम्यगेवोपयोगिताशालीन्यत्युज्ज्वलानि। तानि तु भारतीयानां नित्यपरिचितानि नित्यपूजितानि च। रघुवंशेऽतिमानुषवर्णनं क्वचिदेव दृश्यते। तत्र वर्णनं स्वाभाविकं परिचितञ्च; परन्तु तदेव कवेरसीमविद्युत्प्रतिम-प्रतिभालोकेनेदृगेवालोकितं यत् चिरपुरातनमपि नूतनवत् प्रतीयते। अतो मन्यते बहुभिः समालोचकैर्यत् कालिदास आदौ कुमारसम्भवमतःपरं मेघदूतमतः परमेव च रघुवंशं विरचितवान्। कुमारसम्भवे दैवत-विषयान् स्वर्गव्यापारान प्राधान्येन, मेघदूते देवयोनिमात्रं स्वर्गमर्त्य-विषयांश्च, तथा रघुवंशे केवलमेव मर्त्यविषयान भारतीयप्रसिद्धस्थानानि प्रसिद्धान् भूपतीनेव च वर्णितवान्। आदौ देवता, ततो देवयोनिविशेषः पश्चाच्च मानुष इत्येवं कालिदासवर्णने त्रिधा पद्धतिर्दृश्यते।

कालिदासीयनाटकावलीक्रमोऽपीत्थं निर्देशं लब्धुमर्हति। प्रथमतो

स हि महानादर्शो मानवानां परिमितहृदये धारणातीतः। अत एव कविर्मर्त्त्यादर्शे दृष्टिं पातितवान्। देवतादर्शो मानवामननुभवनीयः। तस्मात् कविरनुभवनीयमनुकरणीयञ्च नराणां पुरुषोत्तमं रामं नारीदेवतां च सीतामादर्शीकृत्य काव्यं निर्म्ममे। अतो मेघदूतं कुमारसम्भवात् प्रागेव कृतमिति।

## चतुर्थाध्याये—कुमारसम्भवस्याष्टमादिसर्गाः।

कुमारसम्भवस्य संक्षिप्तवृत्तान्तः ;—यथा—तारकनामा कश्चिन्महाबलो दुर्दान्तोऽसुरो ब्रह्मदत्तवरप्रभावेणातिगर्वितो दुर्ज्जयत्वमधिगम्य देवान् स्वाधिकारेभ्यो दूरीकृत्य स्वयमेव स्वर्गराज्यमधिकृतवान्। देवास्तु दुर्द्दशापन्ना ब्रह्माणं शरणं गताः। पद्मयोनिरपि तानाश्वासयामास,—पार्वतीपरमेश्वरसुतो युष्माकं सैनापत्यमुपेत्य तारकासुरं निहत्य च पुनर्युष्माकमधिकारान् प्रत्यर्पयितेति। तदनुसारेण देवा उद्योगिनो हरगौर्योः प्रणयसम्पादनार्थं कन्दर्पं नियुक्तवन्तः। कन्दर्पस्तु यावत् समाधिमग्नविरूपाक्षस्य ध्यानभङ्गार्थमुद्यतः "तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार"। अतःपरं हरगौरीपरिणयः सम्पन्नः कार्त्तिकेयस्य च सम्भवः। अनन्तरं कियतैव कालेन स देव-सेनापतित्वं गृहीत्वा प्रबलप्रतापं तारकासुरं निहत्य च देवान् पुनः स्वाधिकारेषु स्थापितवानिति। "कुमारसम्भवं काव्यं सप्तदशसर्गैः विभक्तम्। तत्रादितः सप्तमसर्गं यावत् सर्वत्र प्रचरद्रूपम्। अवशिष्टा दश सर्गा अप्रचलिता विलुप्तप्राया एव जाताः। उत्कृष्टकवित्वफलीभूता अपि ते कथं विलुप्तप्राया इत्यत्र कारणं मन्ये,—अष्टमे सर्गे हरपार्वत्योर्विहारवर्णनम्। नवमे सर्गे हरगौर्य्योः कैलासगमनं। दशमे कार्त्तिकेयजन्मवृत्तान्तो वर्णितः। अत्र नवम-दशमयोः सर्गयोरश्लीलवर्णतज्वाला परिलक्ष्यते। भारतीयास्तु जनास्तौ दम्पती जगत्पितरौ मन्यन्ते। अत एव आलंकारिकास्तद्वर्णनमनुचितं दूष्यं च निरदिशन्। एकादशतः सप्तदशपर्यन्त,

दरणीयम्। तत्र कुत्रापि प्राणविहीनता चान्तःसारविहीनालंकारच्छटा च; कुत्रापि चाशोभनवर्णना। तत् सर्व्वं दूषणं कालिदासे नैव शक्या-रोपणम्। विशेषतो मल्लिनाथोऽष्टमोत्तराणां सर्गाणां टीकां न कृतवान्। अतो मन्यते—कालिदासोऽष्टमोत्तरान् सर्गान् न हि रचितवानिति। महादेवेन सह पार्व्वत्याः परिणये सम्पन्ने कुमारस्य सम्भवः। (क्रमशः)

---

(५१) मुञ्च कोपमनिमित्तकोपने! सन्ध्यया प्रयमितोऽस्मि नान्यया।
किं न वेत्सि सहधर्म्मचारिणं चक्रवाकसमवृत्तिमात्मनः॥

(५२) निर्म्मितेषु पितृषु स्वयम्भुवा या तनुः सुतनु पूर्व्वमुज्झिता।
सेयमस्तमुदयञ्च सेवते तेन मानिनि ममात्र गौरवम्॥

(५३) तामिमां तिमिरवृद्धिपीड़ितां भूमिलग्नमिव सम्प्रतिष्ठिताम्।
एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव॥

(५४) सान्ध्यमस्तमितशेषमातपं रक्तलेखमपरा विभर्त्ति दिक्।
सम्परायवसुधा सशोणितं मण्डलाग्रमिव तिर्य्यगुत्थितम्॥

(६३) अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुट्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी॥

(६४) रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः।
विक्रिया न खलु कालदोषजा निर्म्मलप्रकृतिषु स्थिरोदया॥

---

## वृत्तवर्त्तिका

परमसन्तोषसाधनमेकं वृत्तं निवेद्यते, न चिरादूर्द्ध्वं वङ्गराष्ट्रीयशिक्षाधि-कारेण प्राच्यायुर्विद्यासमभिवर्द्धनार्थं यामिनीभूषणाष्टाङ्गायुर्वेदविद्यालयाय रूप्यकाणां दश सहस्राणि विश्वनाथायुर्वेदमहाविद्यालयाय पञ्च सहस्राणि श्यामादासवैद्यशास्त्रपीठाय च विंशतिः सहस्राणि एककालीनवृत्तिरूपेण वितीर्णानि। वङ्गीयराष्ट्राधिकारस्य तथैवोत्तरोत्तरं भारतीयसंस्कृतिरक्षणाय तत्परिवर्द्धनाय च प्रयत्नं वर्द्धमानमाशास्महे।

# १८७२ शकाब्दीयसंस्कृत-साहित्य-परिषत्पत्रिकास्थ-विषयानुक्रमणी

( वर्णक्रमानुसारिणी )

## Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakra varti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta,

Reg. No. C 1073

Vol. XXXIV.
No. 2.
३४श-वर्षस्य
२य-संख्या

June 1951
१८७३-शकीये
ज्यैष्ठ्ये
मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६).
Foreign price—14s.

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामबाजार

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIV. | १८७३-शकीये ज्यैष्ठे | June |
| --- | --- | --- |
| No. 2. | ३४श-वर्षस्य २य-संख्या | 1951. |


## सुगतमङ्गलम्

निर्वैरं पितृराज्यमुज्ज्वलसुखं पत्नीं गुणैराचितां
तातं स्नेहमयं सुतं सुललितं स्निग्धात्मनो बान्धवान् ।
हित्वा यः समवाप दूरसरणिं वैराग्यतः शान्तये
तस्मै नूतनधर्ममार्गगुरवे बुद्धाय धाम्ने नमः ॥१॥

यो हिंसां विधिबोधितामपि महादोषां विदन्नात्मना
लोके धर्म्यमुपादिशद्धृदि कृपास्पर्शादहिंसाव्रतम् ।
शीलं वीतमलं विधातुमनिशं यस्याभवद्देशना
तस्मै नूतनधर्ममार्गगुरवे बुद्धाय धाम्ने नमः ॥२॥

सत्त्वेन क्षणिकं निरूप्य सकलं यस्तत्त्वविद्यापतिः
शिष्याणां प्रतिपत्तये प्रतिजगौ तत्त्वार्थवाक्सञ्चयम् ।
तेषाञ्च प्रतिभा-विभेदवशतो बौद्धाश्चतुर्धाभवन्
तस्मै नूतनधर्ममार्गगुरवे बुद्धाय धाम्ने नमः ॥३॥

## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामबाजार

कलिकाता-४

योऽधारामयवासनाप्रविलयाद् बुद्धिं विशुद्धोदयां
शून्यं वा परमार्थसत् परतरं मुक्तेः स्वरूपं जगौ ।
यः सङ्घं विदधे हिताय महते सर्वैषणावर्जितं
तस्मै नूतनधर्मनीतिगुरवे बुद्धाय धाम्ने नमः ॥४॥
यो जातेरुपयोगितामगणयन्नो गौरवासादने
नो वर्णाश्रमधर्मसम्मतविधेर्वित्तस्य वा मूर्च्छतः ।
त्यागस्यैव शमान्वितस्य सुतरां मेने महत्त्वं भवे
तस्मै सङ्कलवोज्झिताय महते बुद्धाय धाम्ने नमः ॥५॥
नैरात्म्यं खलु येन तत्त्वमुदितं मानं स्वकीयं वचो
भिक्षामात्रकसम्बलाः प्रियतमाः शिष्या यदीया भवे ।
आप्तो यः प्रशमं निराविलशुभध्यानेन संसर्पता
तस्मै दैवतवन्दिताय गुरवे बुद्धाय धाम्ने नमः ॥६॥
बौद्धं वाक्यमधीयतां शममये मार्गे सदा गम्यतां
दोषः कश्चन सौगते यदि मते सोऽयं धिया शोध्यताम् ।
दृष्टान्तं सुगतं विधाय भुवने वैराग्यमालम्ब्यतां
भक्त्या भद्र ! विधीयतां हितकृते बुद्धाय नित्यं नमः ॥७॥
वृषं गते भास्वति बुद्धपूर्णिमा षष्ठे दिनेऽभूत् कुशलार्थमेषमः ।
सा स्मर्य्यतां सौगतसिद्धिदायिनी महोत्सवस्तत्र चिराय जायताम् ॥८॥

---

## मतिमञ्जरी

'सङ्घशक्तिः कलौ युगे' इति महाजनोक्तिमनुस्मृत्य वा पाश्चात्त्यादर्शदर्शनाद् वा प्रतिविषयमेवाभ्युदयविशेषलाभार्थमिदानीं सङ्घसङ्घटनप्रवृत्तिरात्मानं लभते। सङ्घटितेन च सङ्घसङ्घेन प्रतिस्वमभ्युदयाय यानि द्रव्याणि समुपार्ज्यन्ते, तानि सर्वत्र यथोपयोगं न व्ययितानि भवन्ति, तेन व्यर्थता-

मापद्यते तत्तद्विशेषफलसञ्जननेच्छया दानधर्मः। क्वचित् साधारण-जनोपकाराय वदान्यैर्दत्तानि द्रव्याणि सङ्घाधिकारिभिः स्वजनोपकाराय नियुज्यन्ते, क्वचिद् योग्यजनेषु कृत्यादिभारनियोगविरहादपकृष्टवस्तु-सृष्ट्या विप्लवन्ते दानकृद्भिरभिमतानि वस्तूनि, क्वचिद् वा यदुद्दिश्य वितीर्य्यन्ते द्रव्याणि वदान्यैस्ततोऽन्यत्रैव तद्द्रव्याणां विनियोगेन। तदेता-दृशैरपरैश्च बहुभिर्दोषप्रपञ्चैः सङ्घकृत्यानि नोपयन्ति साफल्यम्। तेन तेन च दोषेण सङ्घेषु समुपजाता लोकानामनास्था। तदेतेषां दोषाणां प्रतीकारः कृतश्चेत् सङ्घशक्तिः साफल्यमर्जयितुमलं भवेत्, नान्यथा।

---

## नवसूक्तिमालिका

यथा यथा पुत्तलिकाभिरन्वहं बालाः प्रकुर्वन्ति मनोविनोदनम्।
तथा तथा संसृतिसेविनो जना विन्दन्ति पुत्रादिभिरात्मनो मुदम्॥
नाट्यप्रयोगेण समो विचित्रः संसाररङ्गे भविनां प्रकारः।
कालं कियन्तं तमुपेत्य भावं काले जना भिन्नपदं श्रयन्ति॥
असारसंसारगतिं विचित्रां सारैः परीतामिह मन्यसे चेत्।
जानासि नूनं दहनं ज्वलन्तं शीतोपचारं करकासमानम्॥
ये त्वामुपाश्रित्य गृहे त्वदीये वसन्ति जीवन्ति च दैवयोगात्।
न तेषु सक्तो भव वा विरक्तस्तत्पालनं किन्तु भवद्विधेयम्॥
तवापचाराद् यदि तेष्वनिष्टं तदा महत् पातकमेष्यसि त्वम्।
कुरुष्व तस्मात् स्वविधेयराशिं धात्रा वितीर्णं यदि भव्यमिष्टम्॥

---

# सुखलेखनम्

( पूर्वानुवृत्तम् )

[ श्रीरामधनशास्त्रिणा टिप्पण्यादिभिरुपस्कृतम् ]

दिवि-सव्येऽ[प]-पुञ्ज्यम्बा[1] अम्ब-मञ्जि-कु-बर्हिषः[2] ।
एभ्यः स्थस्थानां ष्टुश्च[3] [स्याद्] भूमिष्ठ-परमेष्ठिनौ(१) ॥२३॥

प्रते[:] स्थस्याग्रगे प्रष्ठ(२)आख्यायामेत्यकाद् यथा ।
हरिषेणः सुषेणश्च(३) विष्वक्सेन[4][:] ककारतः(४) ॥२४॥

१। अत्र हि "अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमे-बर्हि-र्दिव्य-ग्निभ्यः स्थः" [अ० ८। पा० ३। सू० ९७] इति पाणिनिः। "गोभूमिद्वित्रि-कुशङ्कुमञ्जिपुञ्जिदिव्यग्निबर्हिषः स्थस्य" [अजन्तपु०, सू० १११] इति च दुर्गा-दासः। श्रीपतिना पुनः "गो-भूमिद्वित्रिकुशङ्क्वङ्गुमञ्जिपुञ्जिदिव्यग्निबर्हिषः स्थस्य" [षत्वप्र०, सू० १७ ] इति सूत्रं विधाय "सुषामादिश्च" [ सू० २० ] इति सूत्रे "शेकुष्ठ-परमेष्ठि"प्रभृतयो निपातिताः।

२। अत्र "प्रष्ठोऽग्रगामिनि" [अ० ८। पा० ३। सू० ९२] इति पाणिनिः। "प्रष्ठोऽग्रगे" [ षत्वप्र०, सू० १३ ] इति श्रीपतिः। "प्रादग्रगे स्थस्य" [ अजन्तपु०, सू० १११ ] इति च दुर्गादासः।

३। इह "एति संज्ञायामगात्" [ अ० ८। पा० ३। सू० ९९ ] इति पाणिनिः। "एत्यको नाम्नि" [ षत्वप्र०, सू० १८ ] इति श्रीपतिः। "इलादेति नाम्नि भात्तु वा" [ अजन्तपु०, सू० १११ ] इति च दुर्गादासः।

४। अत्र "अगादिति किम् ? विष्वक्सेनः" [ अ० ८। पा० ३। सू० ९९ ] इति जयादित्यः। "अक इति किम् ? विष्वक्सेनः" [ षत्वप्र०, सू० १८ ] इति श्रीपतिः। "इलात् किम् ? विष्वक्सेनः" [ अजन्तपु०, सू० १११ ] इति चाह दुर्गादासः।

1 Ms. ०शव्येऽपञ्जाम्बा 2 Ms. ०मञ्जिन्न० 3 Ms. स्थस्य
4 Ms. विश्वक्०

त्रिस्रोता[1] एद्भावात्तु (१)नक्षत्रेतो विकल्पतः ।
यथा भरणिषेणश्च भरणिसेन इत्यपि(२) ॥२५॥

प्राद्विसोर्विविधार्थे[2] वेर्विषुवद् विषुवं यथा(३) ।
स्वसुर्मातुः-पितुभ्यां च विकल्पेन पितुःष्वसा ॥२६॥

पितुःस्वसा तथा मातुःष्वसा मातुःस्वसापि च(४) ।
अनुः प्रतिरधिः सुर्विन्र्यभी[3] अतिरपिः परिः ॥२७॥

---

१। अत्राह श्रीपतिः—"एतीति किम्? त्रिस्रोताः" [ षत्वप्र०, सू० १८ ] इति। दुर्गादासोऽपि [ अजन्तपु०, सू० १११ ] व्यावृत्तिपक्षे एवमेवोदाजहार।

२। इह हि "नक्षत्राद् वा" [अ० ८। पा० ३। सू० १००] इति पाणिनिः। "इतो नक्षत्राद् वा" [षत्वप्र०, सू० १६] इति च श्रीपतिः। दुर्गादासस्तु [ अजन्तपु०, सू० १११ ] "इलादेती"त्यादिसूत्रे "भात्तु वा" इति निर्दिश्य विकल्पेनात्र षत्वं प्रदर्शितवान्।

३। अत्र श्रीपतिः—"विष्विति मूर्द्धन्यो निपातः, तस्य विष्वक्-विषुव-विषुवदादयः प्रयोगाः" इति। "विष्विति नानार्थेऽव्ययम्" इति चाह गोपीनाथः [ षत्वप्र०, सू० १८ ]।

४। पितुःष्वसेत्यादौ "मातुःपितुभ्यामन्यतरस्याम्" [ अ० ८। पा० ३। सू० ८५ ] इति पाणिनिः। "मातुःपितुभ्यां वा" [ षत्वप्र०, सू० १० ] इति श्रीपतिः। "मातृपितृभ्यामि"त्यादिसूत्रे "वा तु मातुःपितुभ्याम्" [अजन्तपु०, सू० १११ ] इति च दुर्गादासः।

---

1 Ms. त्रिश्रोता

2 Ms. प्रादिसो विवि०

3 Ms. सुर्विन्यभी

एभ्यः सुनोति-सुवति[1]-स्तु-स्तुभामपिस्यत्यपि[2] ।
सुषुणोति[3] प्रतिष्टौति प्रत्यष्टौदेवमादयः(१) ॥२८॥

स्वनजि-स्था-सेनि-सनजीनां खिव्यवाये[ऽ]पि खेरपि ।
अनुष्वास्यति पर्यष्ठात् परितष्ठौ व्यषेणयत् ॥२९॥

अनुषिषङ्क्षतीत्यादि पदं ज्ञेयं विचक्षणैः ।
सिधोरगमनार्थस्य न्यषेधत् परिषेधति(२)॥३०॥

व्यसेधद् देवसरितमत्र न गमनार्थतः(३) ।
परित्यक्तयङः सिञ्चो निषिषेच निषिञ्चति ॥३१॥

न्यषीषिचद्[4](४) यङन्तस्य परिसेसिच्यते यथा(५) ।
स्तभ्नातेरनङन्तस्य विष्टभ्नाति च व्यष्टभ्नात्[5] ॥३२॥

---

१ । अत्र "उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्ज-स्वञ्जाम्" [ अ० ८। पा० ३। सू० ६५ ] इति पाणिनिः । "उपसर्गात् सुनोतिसुवतिस्यति-स्तौतिस्तोभतीनामड़न्तरोऽपि" [ षत्वप्र०, सू० २३ ] इति च श्रीपतिः ।

२ । अत्र [ अ० ८। पा० ३। सू० ६५ ] इति सूत्रमष्टाविंश-श्लोकीयपादटीकायां द्रष्टव्यम् । श्रीपतिस्तु "स्था-सेनि-सेधति-सिच्-सनूज्-स्वनूजा-मड्भ्यासान्तरश्च" [ षत्वप्र०, सू० २४ ] इति सूत्रयाञ्चकार ।

३ । अत्र हि "सेधतेर्गतौ" [ अ० ८। पा० ४। सू० ११३ ] इति पाणिनिः । श्रीपतिरपि एवमेव [ षत्वप्र०, सू० ४६ ] सूत्रितवान् ।

४ । यत्र यङ् नास्ति, तत्रैव सिचः षत्वमित्याह—परित्यक्तयङ इति । एवञ्चोक्तं व्यावृत्तिपक्षे [ अ० ८। पा० ४। सू० ११२ ] जयादित्येन "यङीति किम् ? अभिषिषिक्षति" इति ।

५ । यङन्तस्य सिचः षत्वं निषेधति—यङन्तस्येति । तथाच निषेध-

---

1 Ms. सुवसो  2 Ms. ०स्सत्यप्यपि  3 Ms. सुषुनोति
4 Ms. नषिषच  5 Ms. व्यंष्टभत्

वितष्टम्भ(१) त्वङन्तत्वादभ्यतस्तम्भदत्र न(२)।
सदः प्रतिं वर्जयित्वा निषीदत्यभ्यषीषदत्(३) ॥३३॥

अवादाश्रयसामीप्ये स्तम्भ और्जित्य एव च।
आस्ते ग्राममवष्टभ्य जनः सैन्यम[व]ष्टभत् ॥३४॥

अहो योद्धुरवष्टम्भोऽवस्तब्धोऽसौ हिमेन च(४)।
स्वनेर्व्यवाभ्या[1]म्दनेऽवष्वणति च व्यष्वणत्[2] ॥३५॥

---

पक्षे पाणिनिराह—"सिचो यङि" [ अ० ८। पा० ४। सू० ११२ ] इति। श्रीपतिनाप्युक्तं—"सिचश्चेक्रीयिते" [ षत्वप्र०, सू० ४३ ] इति। "विसेसिच्यते, यङन्तत्वान्न षः" [ यङन्तप्र०, सू० ८२३ ] इति च वोपदेवः।

१। "स्तम्भुसिवुसहां चङि" [अ० ८। पा० ४। सू० ११६] इति सूत्रे पाणिनिना चङन्तस्य स्तन्भेः षत्वं निषिद्धमिति चङन्तादन्यत्र षत्वं प्राप्तम्। श्रीपतिस्त्वत्र "प्रतेरपि स्तन्भेः" [षत्वप्र०, सू० २६] इति सूत्रमुक्त्वा "प्रतिष्टभ्नाति, विष्टभ्नाति, व्यष्टभ्नात्" इत्यादीन्युदाहरणानि च दत्त्वा चङन्तत्वमधिकृत्य पृथक् सूत्रयाञ्चकार [षत्वप्र०, सू० ४५]।

२। अङन्तनिषेधपक्षे पाणिनेः [अ० ८। पा० ४। सू० ११६] इति सूत्रं द्रष्टव्यम्। श्रीपतिरपि अत्र "स्तन्भुसिवुसहां चणि" [षत्वप्र०, सू० ४५] इति सूत्रमाह।

३। प्रतिं वर्जयित्वेत्यनेन प्रतिपूर्वकस्य सदेः षत्वं निषिध्यते। यथा प्रतिसीदति इति। अत एवाहतुः पाणिनि-श्रीपती "सदेरप्रतेः" [अ० ८। पा० ३। सू० ६६ ; षत्वप्र०, सू० २५] इति।

४। "अवाच्चालम्बनाविदूर्ययोः" [अ० ८। पा० ३। सू० ६८] इति पाणिनिः। तत्र "आलम्बनाविदूर्ययोरिति किम्? अवस्तब्धो वृषलः शीतेन" इति जयादित्यः। "अवादौर्जित्यनिकटाश्रयेषु" [षत्वप्र०, सू० २७] इति च श्रीपतिः।

---

1 Ms. स्वने व्यवाभ्या०

2 Ms. ०ऽवषष्वनि व्यषष्वणत्

विष्वणत्योदनं कव्यान्नरविष्वणसंज्ञकः(१) ।
सेवो वेर्निपरिभ्याश्च व्यषेवत निषेवते[1](२) ॥३६॥

सीव्यतेरनङन्तस्य निषीव्यति व्यसीषिवत्[2](३) ।
अजातौकारसहतेः परिषेहे(४) विसोढ़वान्(५) ॥३७॥

परेः सुनः[3] परिष्कार[ः] परिष्कुरुत इत्यपि ।
नेर्वः परेश्च सुट्स्वनञ्जस्तूनां सिवसहोरपि[4] ॥३८॥

अम्व्यवाये विकल्पाद्व्यसहत व्यषहतापि च ।
न्यष्वङ्क्त न्यस्व[ङ्क्त] पर्यष्टावीत्[5] पर्यस्तावीच्च ॥३९॥

---

१। अत्र "वेश्च स्वनो भोजने" [अ० ८। पा० ३। सू० ६९ ; षत्वप्र०, सू० २८] इति पाणिनिश्रीपतिभ्यामुक्तम् ।

२। इह हि "परिनिविभ्यः सेवसितसयसिवुसहसुटस्तुस्वन्जाम्" [अ० ८। पा० ३। सू० ७०] इति पाणिनिः। श्रीपतिस्तु "परिनिविभ्यः सेवतेः" [षत्वप्र०, सू० २९] इत्याह ।

३। अत्र "सिवादीनां वाड्व्यवायेऽपि" [अ० ८। पा० ३। सू० ७१] इति पाणिनिः। अत्र अनङन्तस्येत्यनेन अङन्तस्य षत्वं निषिद्धम् । तदेवोदाहरति —व्यसीषिवदित्यादि। एतदेव स्पष्टीकृतं दुर्गादासेन [षवत, सू० ५७२] "अङि तु पर्यसीषिवत्" इति ।

४। अत्र 'अजातौकारसहतेरि'त्यनेन यत्र सहतिः सोढ्भूतो न भवति तत्रैव षत्वमित्याह। एतदेवोदाहरति—परिषेहे। इदमेवाह जयादित्यो भङ्ग्यन्तरेण "सोढ्भूतग्रहणं किम्? परिषहते" [अ० ८। पा० ४। सू० ११५] इति ।

५। अत्र "सोढ़" [अ० ८। पा० ४। सू० ११५] इति पाणिनिः। अस्य

---

1 Ms. निषेवतेः 2 Ms. ०सिवत्

3 Ms. सुषः 4 Ms. सुमोरपि 5 Ms. ०त

व्यषीव्यदेवं व्यसीव्यत पर्यष्कार्षीत् पर्यस्कार्षीच्च[1](१)।
पर्यभ्यनुनिरो नेर्वः स्यन्दो[2]ऽप्राणिनि कर्त्तरि ॥४०॥

विकल्पतो यथा निष्यन्दते निस्यन्दते घृतम्(२)।
हस्ती निस्यन्दते नात्र प्राणी कर्त्तेति हेतुतः(३) ॥४१॥

अप्राणि-प्राणिसंसर्गेऽनुष्यन्देते[3] पयोमत्स्यौ(४)।
परेः स्कन्दः परिष्कन्नः परिस्कन्नादयो यथा(५) ॥४२॥

---

च "सहिरयं सोड्भूतो गृह्यते। तस्य सकारस्य मूर्द्धन्यादेशो न भवति।" इति जयादित्यव्याख्यानम्। "सोढश्च" [ षत्वप्र०, सू० ४८ ] इति पुनः श्रीपतिः।

१। "परिनिविभ्यः सेवसितसयसिवुसहसुटस्तुस्वञ्जाम्" [अ० ८। पा० ३। सू० ७० ] इति पाणिनिः। "सितसयसिवुसहसुटामनन्तरः" [ षत्वप्र०, सू० ३० ] इति "सिवुसहसुटस्तुस्वन्जां विभाषाद्वः" [षत्वप्र०, सू० ३१ ] इति चात्र श्रीपतिः।

२। "अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु" [अ० ८। पा० ३। सू० ७२] इति पाणिनिः। "व्यनुपर्यभिनिभ्यः स्यन्दतेरप्राणिनि" [षत्वप्र०, सू० ७२ ] इति च श्रीपतिः। मूलेऽत्र 'निरो' इति नेरुपसर्गस्य ग्रहणम्। तन्मते "निःष्यन्दते निःस्यन्दते" इत्येवंविधमेवोदाहरणं युक्तम्। किन्तु पाणिन्यादीनामेतदनभिप्रेतमिति नास्माभिः परिवर्त्तितमित्युन्नेयम्।

३। "हस्ती निस्यन्दते" इत्यत्र प्राणिकर्तृत्वेन षत्वाभावं निरूपयति—नात्रेत्यादिना हेतुत इत्यन्तेन।

४। ननु प्राण्यप्राणिसंसर्गे षत्वस्य का गतिरित्याशङ्क्याह—अप्राणीति। एतदेवोदाहरति—अनुष्यन्देते इति। अत्रोदाहरणे कृतषत्वस्य स्यन्दतेः प्रयोगात् पक्षेऽकृतषत्वस्य प्रयोगो न स्यादिति शङ्का न कार्य्या। काशि-

---

1 Ms. ष्कार्षीच्च 2 Ms. स्वन्दो० 3 Ms. ०ष्यन्दते

वेश्च विष्कन्दति प्रायो विस्कन्दत्यपि क्ते तु न ।
क्तवतावपि विस्कन्नो यथा विस्कन्नवानपि(१) ॥४३॥

स्फुरस्फुलोर्निर्निविभ्यो[1] निष्फुरेदपि निस्फुरेत्[2](२)
वर्णे[3] स्तानस्याभिनिरो अभिष्टानो विलोक्यते ॥४४॥

अभिनिस्तानः (३)स्कन्नभो वेर्नित्य' विष्कम्भकादयः(४) ।
स्यन्दस्कन्दस्फुरस्कन्नभस्फुलां द्विः षत्वके कृते ॥४५॥

---

कायामेवंविधस्थले षत्वाषत्वयोर्विकल्पेन दर्शनात् । तथाचाह जयादित्यः—"प्राण्यप्राणिविषयस्यापि स्यन्दतेरयं विकल्पो भवति । अनुष्यन्देते मत्स्योदके, अनुस्यन्देते । अप्राणिष्विति पर्य्युदासोऽयं न प्रसज्यप्रतिषेधः" [ अ० ८। पा० ३। सू० ७२ ] इति ।

१ । "परेश्च" [ अ० ८। पा० ३। सू० ७४ ] इति पाणिनिः । "परेः स्कन्देः" [ षत्वप्र० सू० ३३ ] इति च श्रीपतिः ।

२ । "वेः स्कन्देरनिष्ठायाम्" [अ० ८। पा० ३। सू० ७४] इति पाणिनिः । "वेरनिष्ठायाम्" [षत्वप्र०, सू० ३४ ] इति च श्रीपतिः ।

३ । "स्फुरतिस्फुलत्योर्निर्निविभ्यः" [ अ० ८। पा० ३। सू० ७६] इति पाणिनिः । "स्फुरिस्फुल्योर्निर्निविभ्यः" [षत्वप्र०, सू० ३५] इति च श्रीपतिः ।

४ । "अभिनिसस्तनः शब्दसंज्ञायाम्" [ अ० ८। पा० ३। सू० ८६ ] इति पाणिनिः । "वर्णेऽभिनिसः स्तानस्य" [षत्वप्र०, सू० ११], "अभिनिष्टानो विसर्गो वर्णश्च । वर्ण इति किम् ? अभिनिस्तानो गर्भिण्याः" । इति श्रीपतिः । "अभिनिस्तानो गर्भायासजनितशब्द इत्यर्थः" इति गोपीनाथः । "अभिनिरः स्तानस्य शब्दनाम्नि" इति तर्कवागीशः । "अभिनिरस्तानस्य" [अजन्तपु०, सू० ११२] इति च दुर्गादासः ।

५ । "वेः स्कभ्नातेर्नित्यम्" [अ० ८। पा० ३। सू० ७७] इति पाणिनिः । "नित्य' वेः स्कन्मेः" [षत्वप्र०, सू० ३६] इति च श्रीपतिः ।

---

1 Ms. ०र्निर्निर्विभ्यो 2 Ms. निष्फुरेत् 3 Ms. वर्णें

विषष्यन्दे विचष्कन्द विचष्कम्भादयो यथा ।
तपो[1] निरः सकृतसेवे निष्टपत्यनलं नृपः(१) ॥४६॥

प्रादीक[ः] प्रादुष[2]श्चास्तेरचि ये च निषन्ति च ।
निषन्ति मास्म व्यतिषि[3] प्रादुःष्यादेवमादयः(२) । ४७॥

सनोतेरनदन्तस्य यथा गोषा नृषा[4] इति(३) ।
नातेरतिप्रवृत्तौ च यथातिस्तूयते शिवः ॥४८॥

---

१। "निसस्तपतावनासेवने" [ अ० ८। पा० ३। सू० १०२ ] इति पाणिनिः। "निसस्तप्यनभ्यावृत्तौ" [ षत्वप्र०, सू० ४० ] इति श्रीपतिः। "निसस्तपतावनभ्यावृत्तौ" इति च दुर्गादासः।

२। "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" [अ० ८। पा० ३। सू० ८७ ] इति पाणिनिः। "उपसर्गप्रादुर्भ्यामस्तेर्यस्वरेषु" [ षत्वप्र०, सू० ३७ ] इति श्रीपतिः। "प्रादुर्णींगः सः षोऽच्ये" [ अदादि०, सू० ६६३ ] इति च वोपदेवः। "प्रादुष" इत्यत्र "प्रादुर" इति वोपदेवसम्मतः पाठः। दुर्गादासेन तथा व्याख्यानात्।

३। "सनोतेरनः" [ अ० ८। पा० ३। सू० १०८ ] इति पाणिनिः। श्रीपतिस्तु "सुषामादिश्च" [षत्वप्र०, सू० २०] इति सूत्रे नृषागोषेत्यादीन्युदाजहार।

---

1 Ms. तपौ　　2 Ms. प्रादुर०
3 Ms. मानुव्य०　　4 Ms. निषा

# वृत्तवर्तिका

वर्त्तमानखृष्टाब्दीय-मे-मासस्य सप्तविंशदिवसे रविवासरे ढाकानगर-वर्त्तिनि 'जगन्नाथ हल्' इत्याख्यभवने सारस्वतसमाजस्य द्विसप्ततितम-समावर्त्तनमहोत्सवः पूर्ववङ्गराज्यपाल-मालिक-फिरोजखाँनूनमहोदयाना-माध्यक्ष्येण निरपद्यत। तत्र वङ्गीयविभिन्नस्थानेभ्यः षष्टिसंख्यका विशिष्टपण्डिताः समवेता अभूवन। तत्र अष्टादशभ्यः विभिन्नविषयो-पाधिपरीक्षाः समुत्तीर्णेभ्यश्छात्रेभ्यः उपाधिमानपत्रं पदकादिकञ्च वितीर्णमभूत।

तस्मिन्नुत्सवे सभापतिपदमध्यासीनाः पूर्ववङ्गीयराज्यपालमहोदयाः स्वीयाभिभाषणनिबन्धे वङ्गभाषया हिन्दीभाषया तथा उर्दुभाषया संस्कृत-साहित्यस्य अनुवादप्रस्तावं कृतवन्तः तदनुसारेण च साधारणजनकल्याणाय वेदस्य पुराणस्य तथा अपरेषां संस्कृतग्रन्थानामनुवादसम्पादनार्थं सार-स्वतसमाजाय रूप्यकाणामेकं सहस्रं ते दास्यन्तीति प्रतिश्रुतिमपि व्यदधुः। राज्यपालाः सभापतयः सुदृढेन वचसा प्रोक्तवन्तो यथा संस्कृतभारतीं प्रति हिन्दव इव माहम्मदा अपि सुतरां श्रद्धावन्तः। सैषा भाषा विपुल-सम्पत्समन्विता जननी च बहुभाषाणाम्। तदेतद्गतसम्पत्सु यथा सर्वेषामधिकारः सम्पद्येत तथा प्रयतितव्यं सर्वैरिति। माहम्मदधर्मा-वलम्बिनां पूर्ववङ्गराज्यपालानामसौ वाणी नहि 'स्वकीयदधिमाधुर्यन्याय'-मनुहरति। अनया निरपेक्षवाचा मन्ये दृष्टिरुन्मीलिता भवेत्तेषां ये किलाद्यापि संस्कृतसाहित्यस्य समुत्कर्षप्रतिपत्तावन्धाः। कथञ्चित् संस्कृतसाहित्यसमुन्नतिसम्पादने दत्तावधानमपि पश्चिमवङ्गादिराष्ट्राधिकार-समूहं सम्यगवधानदानाय समुद्बोधयामः।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakrvarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV. | July 1951
No. 3. | १८७३-शकीये
३४श-वर्षस्य | आषाढ़े
३य-संख्या | मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

स्कृत-साहित्य-परिषत्,
मबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)।
Foreign price—14s.

## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-<br>
सम्पादकः, श्यामबाजार<br>
कलिकाता-४

संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्म' प्रकाशयतु धीमताम् ॥

Vol. XXXIV. No. 3. } १८७३-शकीये आषाढ़े ३४श-वर्षस्य ३य-संख्या { July 1951.

## श्रीश्रीजगन्नाथमङ्गलम्

महासिन्धुतीरे पुरीमन्दिरान्तः सुभद्राहलिभ्यामुपेतः प्रशान्तः ।
रथे दृश्यमानो विमुक्तिप्रदाता जगन्नाथदेवो विपन्नप्रपाता ॥१॥
यदीयप्रसादे न जातिव्यवस्था समं नीलशैले समेता गृहस्थाः ।
प्रकुर्वन्ति सर्वे समं यत्सपर्य्यां तदीयप्रसादाद् गतिं यान्ति धुर्याम् ॥२॥
सुदूरप्रदेशागता भूरिभक्ताः कृतार्थाः सपर्य्याविधानानुरक्ताः ।
विषयान्तरस्थं मलं पुण्यलोकं लभन्ते भवान्ते समोदं विशोकम् ॥३॥
सुरम्यारुणस्तम्भशोभाविचित्रं बृहत्तोरणं यस्य भक्तैः पवित्रम् ।
सुशिल्पैरनल्पैर्विशेषानुविद्धे जगन्नाथदेवः स्थितस्तत्र सिद्धे ॥४॥
कियत्यस्ततो देवताः प्राप्तमाना जगन्नाथदेवं प्रति श्रद्दधानाः ।
पुरीमन्दिरान्ते श्रिता नित्यवासं प्रकुर्वन्ति भूयो भवे भव्यभासम् ॥५॥
यदैश्वर्य्यमुग्धो नवद्वीपचन्द्रः पुरीमाश्रितः स्वैर्गणैरस्ततन्द्रः ।
कृतिं लोकबाह्यां प्रचक्रे प्रभूतां जगन्नाथदेवः स भव्यं प्रसूताम् ॥६॥
यदीयाङ्घ्रिसन्धित्सयेवोर्द्ध्वहस्तः समुद्रः समुद्रावमन्त्रः प्रशस्तः ।
जड़त्वात्तटे मूर्च्छितो व्यर्थकामः शिवायास्तु देवः स भक्ताभिरामः ॥६॥

चिरं यत्सपर्य्यापुरोधःप्रधानाः पुरीभूमिपालैर्वितीर्णातिमानाः ।
अधर्मप्रतीपा महीपालवर्गाः श्रिता यस्य दास्यं हृतोत्पातसर्गाः ॥८॥
यदर्च्चाविधाने गृहीतावधानाः पुरीभूभुजो भान्ति चित्रावदानाः ।
जगद्बन्धुरानन्दहेतुः स तुष्टः शिवायास्तु नित्यं कृपाराशिजुष्टः ॥९॥
अदूरे स्थिता यस्य गेहाद् सहर्म्या पवित्रायता कापि वापी सुधर्म्या ।
जगन्नाथदेवस्य चित्रोपचारः शुभाडम्बरस्तत्र नौकाविहारः ॥१०॥
शुभां दारुमूर्त्तिं प्रचक्रे यदीयां कृती विश्वकर्मा पुरा दर्शनीयाम् ।
तमेनं परब्रह्मरूपं सुरेशं जगन्नाथदेवं भजे निर्विशेषम् ॥११॥
पुरानेकवारान् विधर्मप्रवीणाः प्रवीणार्य्यधर्मद्रुहः पापलीनाः ।
सयत्ना न यन्मन्दिरं गन्तुमीशा जगन्नाथदेवं तमीयान्मनीषा ॥१२॥
यदीयार्च्चनार्थं प्रभूतप्रसारा स्थिता पुष्पवाटी विचित्रोपचारा ।
द्विपेन्द्रादिसम्पत्सनाथं तमीशं जगन्नाथदेवं भजे निर्विशेषम् ॥१३॥
रथो राजमार्गे यदा चित्रकायः श्रयन् वासुदेवं विलुप्तव्यपायः ।
प्रयाति स्वकाले तदा भक्तजालं जयं घोषयत्यस्य भक्त्या विशालम् ॥१४॥
तिथिः सागता पूतरूपा द्वितीया यतो वैधयात्रा प्रवृत्ता तदीया ।
रथस्थं तमुद्वीक्ष्य तस्यां परेशं भवस्था भजन्तां स्वमानन्दवेशम् ॥१५॥
नमः पार्श्वयोः सम्मुखे पृष्ठतस्ते नमो भूमिभागे रथाङ्गप्रशस्ते ।
सुभद्राबलाभ्यां रथं संश्रयन्तं जगन्नाथ याचे सुभव्यं भवन्तम् ॥१६॥

---

## मतिमञ्जरी

बहोः कालात् प्रभृत्येव धनिकादिसमाजेषु नियम एष प्रचरद्रूपो दृश्यते यथा यदैव कारणान्तरेण सांसारिकव्ययसङ्कोचः कर्त्तव्यस्तदैवादौ देवपूजा-पितृपूजादिव्यापारेषु यो व्ययः सम्पद्यते तस्य नातिप्रचुरस्यापि सङ्कोचं प्रति दत्तावधाना भवन्ति गृहपतयः। स्वीयपरिजनादीनां विलासवासना-

परितृप्तये यानि धनानि समपेक्षितानि तानि धनानि स्वल्पतां नीयन्ते चेत् महान् विक्षोभः परिजनानाम्। स्वीयकामनापरिपूर्त्तये समपेक्षितानामल्पीकरणे च स्वस्यैव सुखोपघातः। पितृपूजादेवपूजादिनिर्वर्त्तनाय समपेक्षितानामल्पतासम्पादने न देवाः पितरो वा साक्षात् प्रकाशयन्ति मानसं विक्षोभम्। लोकायतपथानुवर्त्तितया परलोकेष्वविश्वसताञ्च न ततः स्वानिष्टसम्भावनापि। एवमेव यदा यदा विद्याशिक्षणव्यापारे पाठ्यविषयाणां सङ्कोचं प्रति विश्वविद्यालयादीनां दृष्टिर्निपतति, तदा प्रथमत एव संस्कृतविषये सङ्कोचो बुद्धिमारोहति, तत एव साम्प्रतं 'म्याट्रिकुलेशन्' इत्याख्यया प्रचलद्रूपा या उच्चाग्लविद्यालयविद्यार्थिनां परीक्षा राष्ट्रीयमाध्यमिकशिक्षासमित्या नियन्त्रिता सती 'स्कुलफाइनाल्परीक्षे'ति संज्ञया प्रथिष्यते, तत्र पाठ्यसङ्कोचमधिकृत्य संस्कृतस्य गणितस्य च अवश्यं शिक्षणीयता न वेति विचारे कयाचित् विशेषविदां समित्या विचार्य्य प्रस्तुतं, संस्कृतं गणितञ्च अष्टमश्रेणीं यावत् विद्यार्थिनो नियमेन पठेयुः, नवमश्रेण्यां दशमश्रेण्यांञ्च न तथा। तत्परीक्षोत्तरं ये संस्कृतविद्यायां तथा गणितविद्यायां विशेषविदो भवितुमिच्छन्तस्तत्र तत्र प्रविशेयुस्त एव निरुक्तश्रेणीद्वये निरुक्तविषयमाश्रयेयुः। किन्तु सम्प्रति राष्ट्रीयमाध्यमिकशिक्षासमितिपरिचालकसमित्या निर्धारितं यत् संस्कृतं गणितञ्च तत्र श्रेणीद्वयेऽपि अवश्यं पाठ्यमिति। सुविवेकप्रसूतेनानेन सिद्धान्तेन वयं राष्ट्रीयमाध्यमिकशिक्षापरिचालकसमितेः सुतरां साधुवादं विघोषयामः। प्रतीक्षामहे चात्र साधारणमाध्यमिकशिक्षासमितेः सम्मतिमप्रतिबन्धाम्। जानीमः संस्कृतस्य साम्प्रतिकं दौर्गत्यम्, किन्तु न जानीमो गणितमपि कथमेवं दशामुपगतमिति ?

---

# नवसूक्तिमालिका

स्वकीयकष्टं विनियन्तुकामः
कष्टं परेभ्यो न कदापि दद्याः ।
नारयणः सर्वशरीरनिष्ठः
कष्टेन तेनाति वृणोति कष्टम् ॥
स्वल्पेन यत्नेन यदा समर्थः
सोढुं तदेतन्निजकष्टमिद्धम् ।
तदा कथं पापमयं परस्य
प्रपीडनं मित्र ! करिष्यसि त्वम् ॥
प्राचीनवृत्तान्तशतान्यधीष्व
द्रष्टासि यत्रान्यजनोपकारम् ।
स्वप्राणदानैरपि सज्जनानां
ते ते न मूढा विदिताः प्रवीणाः ॥
लब्धुं क्षमश्चेत्तदुदारभावं हितं ध्रुवन्ते भगवान् विधाता ।
आपाततः स्वल्पहितस्य हेतोर्महद्धितं नैव जहीहि मोहात् ॥

---

# "आषाढ़स्य प्रथम दिवसे"

[ निबन्धकः—श्रीनित्यगोपालविद्याविनोदः ]

को ब्रूयादद्यप्रभृति कतिशताब्दीतः प्राक् तत्रभवान् कविशिरोरत्नभूतः कालिदासः कदा कुत्रासीनः "आषाढ़स्य प्रथमदिवसे" आश्लिष्टसानुं मेघं वीक्ष्य "मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः" इति सर्वलोक-प्रसिद्धं सत्यं स्वयमनुभूय स्वानुभूतिमयस्य चित्रस्य बहिर्जीवदेकं मेघदूतं नाम खण्डोत्तरमाधुर्यं खण्डकाव्यमघटनघटनपटीयस्या कल्पनातूलिकया

विचित्रभावरसरागेण सुचारु चित्रयामासेति। अस्यापूर्वगीतिकाव्यस्य गुम्फने महाकवेर्नैसर्गिकी प्रतिभा, बहुनिर्मलं श्रुतम्, अमन्दोऽभियोगश्चैव निदानमिति वयं सुदृढ़मुत्प्रेक्षामहे। उत्प्रेक्षायामस्यां काव्यपरीक्षानिकषोत्तमस्य प्रख्यातनाम्नो राजशेखरस्य प्रमाणभूतं वचनमिदं जरीजागर्यते।

"नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।
अमन्दश्चाभियोगश्च कारणं काव्यसम्पदः॥" इति।

तथापि काव्यस्यैतस्य महामहोपाध्यायैः कैश्चिद् व्याख्यातृभिः मूलमेवमनुमितम्। प्राक् तावद् विश्रुतनाम्ना भरतमल्लिकेन स्वटीकावतरणिकायामेवमुट्टङ्कितम्—"पुरा किल कैलासेशस्य महेश्वरस्याराधनार्थं मानसजसरोजरक्षणाय कुबेरेण नियुक्तः कश्चिद् यक्षः कदाचित् पुष्पबाणबाणाहतः स्वाधिकारप्रमत्तः प्रेयसीसङ्गमसुखमन्वभूत्। तदा देवेन्द्रस्य करीन्द्रैः कमलान्युत्पाट्य इन्दीवराणि चोन्मूल्य सरस्तत् सरोजहीनतां नीतमिति यक्षराजः कोपपरीतलोचनस्तमनुचरं वर्षभोग्यशापदण्डेन दण्डितवान् इति पौराणिकीं कथामुपजीव्य कविः काव्यमिदं प्रणिनायेति।" टीकाकृतामग्रणीस्तत्रभवान् मल्लिनाथः पूर्वमेघस्य त्र्युत्तरशततमश्लोके 'इत्याख्याते पवनतनयं मैथिलीवोन्मुखी से'ति सुस्पष्टोक्तिं निरीक्ष्य आभ्यन्तरीणप्रमाणत्वेन (As an interval evidence) तट्टीकामुखबन्धे समुल्लिलेख।" "सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवानित्याहुः।" प्रथमश्लोकटीकायाम्। अत्राहुरिति बहुवचननिर्देशेन न केवलं सूरिमल्लिनाथस्य एवमनुमितिरपितु तत्पूर्वगामिनामनेकेषां व्याख्यातॄणामेतन्मतमिति स्पष्टं सूच्यते।

आलोच्यखण्डकाव्यस्येदृक् जनप्रियत्वमासीत् यत् मल्लिनाथ-भरत-सनातन-मकरन्द-कल्याणमालाप्रमुखानां चतुर्दशानां टीकाकृतां नामानि पाठकानां नेत्रपथमवतरन्ति। हनूमन्तं प्रति सीतासन्देश एव एतत्काव्यनिर्माणस्य बीजमिति निर्धारणं नामूलकमित्यस्माकमपि दृढ़ा प्रतीतिः।

यतः प्रथमश्लोके कवेः "रामगिर्याश्रमेषु" इत्यभिशप्तस्य यक्षस्य शाप-कालीनवार्षिकवासस्थाननिर्देशे तथा तत्रैव श्लोके "जनकतनयास्नान-पुण्योदकेषु" इति विशेषणे जनकतनयेति सुस्पष्टनामोल्लेखतः सीता-वृत्तान्तस्य मेघदूतरचनां प्रति अविसंवादिवीजभावनिर्धारणे न कोऽपि संशय उत्तिष्ठते।

रामगिरिशब्देन प्राग् रामाध्युषितचित्रकूटगिरिरेव बोध्यते। लीलापुरुषोत्तमस्य श्रीरामचन्द्रस्य दीर्घकालनिवासेन चित्रकूटस्य रामगिरिरिति नवीनं नामधेयं जातम्। तत्तथ्यं रामायणगतेन "चित्रकूट इति ख्यातो गन्धमादनसन्निभः" इत्यादिविस्तृतविवरणेन विशदी-भवति। न केवलं नामसादृश्यमेवैतदनुमानस्य बीजं, परन्तु तत्रत्यस्य सीताविरहिणो रामस्यार्तस्य पाषाणभेदिविलापवेदनादिकमपि मेघदूतस्य प्रियाविच्छेदविधुरनायकस्य यक्षस्य सम्यक् पश्चात्तापसमम्। अक्षयात् जलाशयात् सहस्रशः कुल्या इव यतो रामायणात् काव्यसहस्रमुत्पन्नं ततो मेघदूतं प्राभूदिति सिद्धान्तः सर्वथैव समीचीनः। काव्यकृता चात्मना कण्ठोक्त्या अभ्युपगतमेतत्तथ्यं तस्य प्राथमिककृतित्वेन विश्रुते रघुवंशे "अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभि"रिति श्लोके। तत्रस्थपूर्वसूरिपदेन सूर्यवंशनायकस्य रघुनाथस्य लोकोत्तरचरितशंसि-रामायणप्रणेतादिकविवाल्मीकिरेवाभिधीयते। अतो दीर्घप्रवासविप्र-लम्भशृङ्गाररससिक्त-रामायणात वर्षमात्रप्रवासविप्रलम्भविधुरं यक्षमाश्रित्य मेघदूतस्य सृष्टिर्न कथमप्यसम्भाव्या। अथ रामगिरेः स्थानसंस्थानेऽत्र मतं विवक्ष्यते। अत्र तु "नासौ मुनिर्यस्य मतं न भिन्नं।" तथापीह

बहवो भक्तजनाः समागम्य भक्त्या सीतारामावर्च्चयन्ति। तयोः पुण्य-स्मृत्यै तैस्तत्र बहूनि सुरम्यहर्म्याणि निर्मितानि। पर्वतोऽयं तत्स्थानीय-जगगणैः महाराष्ट्रभाषायां "रामतेनक" ( Ramtege or Ramtincy ) इति कथ्यते। अत्र कश्चिदिति अभिशप्तनायकस्य नामानुल्लेखे सम्प्रदाय-प्रचरितं विविधं प्रामणं दृश्यते। प्रथमं तावत् ;—

> न नामग्रहणं कुर्य्यात् कृपणस्य गुरोस्तथा।
> अभिशप्तस्य पत्न्याश्च मातापित्रोर्विशेषतः॥
> खण्डकाव्यमुखं कुर्य्यात् कश्चिदित्यादिभिः पदैः।
> सर्गबन्धे महाकाव्ये नाम कुर्य्यात् सुशोभनम्॥"

यत् काव्यं सर्गेण अबद्धं काव्यस्यैकदेशानुगञ्च तत् खण्डकाव्यमिति आलङ्कारिकनिर्द्देशः। यत्र कश्चिद् वृत्तविशेषं विषयविशेषं वा अवलम्ब्य कविः स्वल्पायतनं रससम्पुटं विरचयति तत्र कविप्रतिभाया निरतिशयः प्रकाशो जायते। ये कोविदरसिकाः "राधारससुधानिधिप्रेमसम्पुटप्रेमपत्त-नाश्चर्य्यरासप्रबन्ध" प्रमुखं खण्डकाव्यरसकदम्बमास्वादयितुं कृतप्रयत्नास्त एव मेघदूतस्य सम्यक् मर्य्यादावधारणेऽधिकारिणः। अद्य यावत् स्वनामप्रसिद्धस्य मेघदूतस्य बहुभिः प्राच्यपाश्चात्त्यविपश्चिद्भिर्बहुलः सुमधुरोऽनुवादस्तथ्यबहुलाः प्रभूताः समालोचनाश्च प्रकाशिताः। निबन्धेषु केऽपि नामभेदेन विभिन्न-पत्रिकादिसु विविधसन्दर्भान प्रकटितवन्तः। अतोऽवद्यां पिष्टपेषणनीतिं परिहृत्य संक्षेपतः जनोऽयं किञ्चिदुक्त्वा विरमति। क्षुद्रतमे खण्डाख्ये मिष्टान्ने रससार इव स्वल्पायतनेऽस्मिन् खण्डकाव्ये कविचूड़ामणिना कालिदासेन सम्भोगशृङ्गाररसादुत्तमोत्तमस्य विप्रलम्भशृङ्गारस्य प्रियाविरहितस्याजन्म-भोगविलासासक्तस्य नायकयक्षस्याचेतनं मेघं दूतीकृत्य स्वचित्ताग्नेयगिरेर्यो-मर्म्मस्पर्शी प्रियासन्देशोच्छ्वासीविवृतस्तदालोचनया मन्येऽहं "न विना विप्र-लम्भेन सम्भोगः पुष्टिमश्नुते" इत्यालङ्कारिकसत्यगर्भानुशासनस्य चतुरस्त्रं सार्थक्यं सुप्रमाणितमिति। अतोऽहं सानुनयं सनिर्बन्धञ्च निवेदयामि स्वाधीनभारतपौरजनान्, यत्ते साम्प्रतं तत् "आषाढ़स्य प्रथमदिवसं"

प्रत्यासन्नं विविच्य यस्य दिव्या लेखनी जगज्जीवनशस्योत्पादकत्वेन वर्षाणां वन्दनगीतिव्यपदेशेन मृत्युविजयिमेघदूतरचनया विशाले संस्कृत साहित्यजगत्यमृताभूत् स्वजातिगौरवपरिपोषणार्थं कृतज्ञतावर्जितहृदयाः पाश्चात्त्यविषयेषु तत्तद्देशीयानां महाकवीनां यशःकायममरीकर्त्तुं यथा विविधानि स्मृतिप्रतिष्ठानानि प्रतिष्ठापितानि तथा तैरपि तस्य महाकवेः कालिदासस्य महावदानस्य मेघदूतस्य सृष्टेः प्रथमदिवसे तस्य पुण्यस्मृति-सम्माननार्थं प्रतिनगरं प्रतिजनपदं प्रतिपल्लि प्रतिपरिवारं प्रतिगृहमपि मेघ-दूतमुपलक्ष्य अमृतादपि माधुर्य्यमय्याः कालिदासस्य कवितायाः रसः सतृष्ण-मास्वादनीयः सोत्साहं परिवेषणीयश्चेत्यलम् ।

---

## कालिदासीय-कुमारसम्भवम्

पञ्चमाध्याये कुमारसम्भवं पुराणानि च ।

[ निबन्धकः—श्रीकरुणाकुमारशास्त्री ]

कुमारसम्भवे यो वृत्तान्तो वर्णितः स एव रामायणे, महाभारते, ब्रह्म-पुराणे, ब्रह्मवैवर्त्तपुराणे, कालिकापुराणे, तथा शिवपुराणे च विद्यते । परन्तु रामायण-वर्णिताख्याने कुमारसम्भव-वर्णिताख्याने चैतत् पार्थक्यं यद् रामायणे मदनभस्मीकरण-व्यापारः पार्व्वतीपरिणयमनु वर्णितः ; कुमार-सम्भवे च पार्व्वतीपरिणयात् प्रागेव स व्यापारः सम्पादितः ।*

---

* रामायणे बालकाण्डे ( आदि २३तमसर्गे ) श्लोकाः (१०-१३) "कन्दर्पो मूर्त्तिमानासीत् काम इत्युच्यते बुधैः । तपस्यन्तमिह स्थाणुं नियमेन समाहितम् ॥ कृतोद्वाहं तु देवेशं गच्छन्तं स-मरुद्गणम् । धर्षयामास दुर्मेधा हुंकृतश्च महात्मना ॥ अवध्यातश्च रुद्रेण चक्षुषा रघुनन्दन । व्यशीर्यन्त शरीरात् स्वात् सर्व्वगात्राणि दुर्म्मतेः । तत्र गात्रं हतं तस्य निर्दग्धस्य महात्मना । अशरीरः कृतः कामः क्रोधाद्देवेश्वरेण ह ॥"

एतदतिरिक्तं नाधिकं पार्थक्यं विद्यते। परमन्येषु पुराणेषु सर्वथा कुमारसम्भवसौसादृश्यं परिलक्ष्यते। तत्र न केवलं वृत्तसादृश्यं परन्तु श्लोकसादृश्यमपि कुत्रचित्कुत्रचिद् दृश्यते ॥** ॥

इदमत्राधुना विवेच्यम्—यत् किं कालिदासः पुराणवृत्तान्तमविकलमुद्धृत्य वा स्थलविशेषेषु श्लोकानविकलानुद्धृत्य वा कुमारसम्भवं प्रणीतवान् इति। एतत्तु कथमपि नानुमीयतेऽस्माभिः। यदि कालिदासः कस्यापि समीप ऋणी भवति, स हि भाग्यवान् वाल्मीकिर्वेदव्यासो वा। परन्तु

---

** कुमारस्य प्रथमसर्गे २६-तम श्लोकस्तथा ब्रह्मपुराणे ३४-तमाध्याये ८५-तम श्लोकः—

"तां पार्व्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव।
उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥"

कुमारस्य द्वितीयसर्गे ६३-तम श्लोकस्तथा ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे ३९-तमाध्याये ४०-तमश्लोकः—

"तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः।
मनसा कार्य्यसंसिद्धित्वराद्विगुणरंहसा ॥"

** कुमार—५म सर्गे २०-तम श्लोकस्तथा ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे ४०-तमाध्याये १५-श श्लोकः—

"शुचौ चतुर्णां ज्वलतां शुचिस्मिता हविर्भुजां मध्यगता सुमध्यमा।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥"

कुमार ५म सर्गे २६-तम श्लोकस्तथा ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे ४०-तमाध्याये १७-श श्लोकः—

"निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवास तत्परा।
परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥"

कुमार—५म सर्गे ७०-तम श्लोकस्तथा ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे ४१-तमाध्याये २३-तम श्लोकः—

कविस्तयोः श्लोकानेवात्मसात् कृतवान्—इति कथमपि न विश्वास्यम्। पण्डितकेशरीश्वरचन्द्रविद्यासागरमहाशयो वङ्गभाषया यदुक्तवांस्तस्यानुवादः प्रदीयते :— ( क्रमशः )

---

"इयञ्च तेऽन्या पुरतो विडम्बना यदूढ़या वारणराजहार्य्यया।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥"

(ब्रह्मवै) "महाजनः स्मेरमुखः श्रुतिमात्राद् भविष्यति"।

कुमार—२य सर्गे तथा शिवपुराण उत्तरखण्डे चतुर्द्दशाध्याये :—

"तदिच्छामि विभो स्रष्टुं सेनान्यं तस्य शान्तये।
कर्मबन्धच्छिदं धर्म्मं भवस्येव मुमुक्षवः ॥"

"यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ॥"

"विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥"

कुमार—४र्थ सर्गे तथा योगवाशिष्ठे ( भू-कैलास, पृः १२३ )

"आकाशभवा सरस्वती"। "शफरीं ह्रदशोषविक्लवां—प्रथमा वृष्टिरिवान्वकम्पयत् ॥"

---

# वृत्तवर्त्तिका

अखिलभारतीयसंस्कृतपरिषत्—१९४७ खृष्टाब्दीयनभेम्बरमासस्य द्वादशदिवसे भारतराष्ट्राधिकारस्य भूतपूर्वसहमन्त्रिणा सर्द्दारप्याटेल-महोदयेन सोमनाथमन्दिरस्य पुनर्घटनं श्रीकृष्णवृत्तस्मृतिप्रयोजकस्य प्राचीन-शिक्षाभक्तिवीर्य्यादीनां प्रधानस्थानतया विश्रुतस्य प्रभासस्यान्तर्वर्त्तिनि देहोत्सर्गे तदीयातीतगौरवयोग्यस्मृतिस्तम्भनिर्माणञ्च संकल्पितम्। तदनुसारेण सौराष्ट्रराज्याधिकारेण सोमनाथकोषः संघटितः। तस्य कोषस्य एकं लक्ष्यं कस्यचित् संस्कृतविश्वविद्यालयस्य तथा संस्कृत-महाविद्यालयानामपरेषां स्थापनं यत्र धर्मदर्शनशास्त्रादीनां विशेषतः पर्य्यालोचनया संस्कृतविद्योन्नतिः शक्यसाधना स्यात्।

प्रथमकर्त्तव्यतया सोमनाथकोषाधिकर्त्तारः सोमनाथस्य नूतनमन्दिर-भित्तिस्थापनार्थं मे-मासस्य एकादशे दिवसे एकां सभामाहूतवन्तः। तत्र एकोनविंशतिसंख्यका भारतीयविश्वविद्यालयास्तथा अन्यानि प्राच्य-शिक्षायतनानि स्वीयप्रतिनिधीन् प्रेरितवन्तः।

मे-मासस्य एकादशदिवसे दिवा सार्द्धद्वितीयहोरायां नूतनमन्दिराभिमुखे निर्मिते मण्डपे वैदिकमन्त्रवचनानन्तरं सभा प्रारब्धा। त्रिवाङ्कुर-कोचिनराजप्रमुखा श्रीपद्मनाभदासवालरामवर्माणः तत्र आध्यक्ष्यमकुर्वन्।

सौराष्ट्रप्रदेशस्य प्रधानमन्त्रिणस्तथा अभ्यर्थनासमितेरध्यक्षाः माननीय श्री इउ एन् धेरवमहोदयाः विशिष्टानामतिथीनां प्रतिनिधीनाञ्च अभ्यर्थनाञ्चक्रुः।

अखिलभारतीयसंस्कृतपरिषदः साधारणसम्पादका जे. एइच्. डामे महोदया नानास्थानेभ्यः परिप्राप्तानि पत्राणि वाचितवन्तः।

परिषदं संघटय्य जातीयमहासभाध्यक्षाः श्रीपुरुषोत्तमदासट्याण्डन-महोदया जनसमाजं प्रति विशेषतः शिक्षितसमाजं प्रति संस्कृतभाषाया महैश्वर्य्योपलब्धये तथा तस्या योग्यप्रतिष्ठाप्रतिपादनाय प्रार्थनां कृतवन्तः। अन्यदपि तैरुक्तं यद् भाषान्तरनिबद्धग्रन्थेष्वपि संस्कृतसाहित्यस्य सम्पद-मधिकृत्य यानि विवरणानि लिखितानि तत्काले संस्कृतसाहित्यं ततोऽप्य-धिकतरैश्वर्य्ययुक्तमासीत्। संस्कृताध्ययनाय प्रस्तुतं विश्वविद्यायतनमाशिषा संवर्द्ध्य ते इमामाशां विज्ञापितवन्तो यत् न केवलमिदं विश्वविद्यायतनं भारतीयानामेव संस्कृतसाहित्यबोधमुपकरिष्यति किन्तु सर्वेषामेव विश्व-वास्तव्यानाम्।

अभिभाषणावसरे सभापतिभिरुक्तं यत् आपाततो भारतवर्षे यो विभेदो विशृङ्खलता च संलक्ष्येते तत्रापि संस्कृतभाषा ऐक्यं शृङ्खलाञ्च अनुकूल-यिष्यति। भारतस्य पुरातनमैतिह्यं यत् परवर्त्तिभारतेनापरिहार्य्यं तस्य सु-प्रतिष्ठाव्यापारे एकमिदं संस्कृतविश्वविद्यायतनमेव साहाय्यकमाचरिष्यति। संस्कृतभाषायाः पुनरभ्युदयाय वर्त्तमानशिक्षाव्यवस्थया समं प्राचीनशिक्षा-

व्यवस्थायाः समन्वयसाधनस्याप्यस्ति महत् प्रयोजनमित्येतदपि तैः सविशेषं प्रतिपादितम् ।

भारतस्य देशान्तराणाञ्च शिक्षणीयविषयानधिकृत्य सुनियन्त्रिता तुलनामूलकालोचना ईदृशे शिक्षायतने भवितुमर्हति ।

भारतीयसाधारणप्रजातन्त्रशासनपरिषदः प्रधानाध्यक्षाः माननीय-राजेन्द्रप्रसादमहोदयाः, संस्कृतविश्वविद्यालयप्रतिष्ठायाः संकल्पं प्रति अभि-नन्दनं विज्ञाप्य तदीयोन्नतिं कामयामासुः । अन्येऽपि कतिपये तथैव वक्तृतां चक्रुः ।

माननीयश्रीमुन्सीमहोदयाः साधुवादं विज्ञाप्य समग्रस्य भारतवर्षस्य पण्डितवर्य्याणां साहाय्येन प्रयत्नस्यास्य साफल्यं भविष्यतीति आशां प्रकाशयाञ्चक्रुः ।

अथ मे-मासस्य द्वादशदिवसे अपराह्णतृतीयहोरायां त्रिवाङ्कुरकोचिन-राजप्रमुखानामाध्यक्ष्येण सभा प्रावर्त्तत यत्र विषयनिर्वाचनसमितिगृहीतानां विषयाणामालोचनादिकमभूत्, तथा बहवः सिद्धान्ताश्च परिगृहीताः, ये कालेन सुतरां म्लानिमुपगतायाः संस्कृतविद्यायाः सुमहते महिम्ने सम्पद्येरन् । वयमस्याः परिषदः सर्वथा साफल्यं कामयामहे । तत्रत्यसिद्धान्त-संक्षेपो यथा—संस्कृतमेव भारतीयसंस्कृतिविज्ञानस्य प्रधानमुपकरणम् ।

संस्कृतानुशीलनस्य समुन्नतिसाधनमेव भारतवर्षे सम्प्रति प्रथमं कर्त्तव्यम् । तदुद्देश्यसाधनार्थम् एका संस्कृतविश्वपरिषदपेक्षिता । या विश्वेषां संस्कृतसमुन्नतिसाधकप्रतिष्ठानानां साहचर्य्येण कार्य्यं करिष्यति ।

अखिलभारतीयसंस्कृतपरिषदा सोमनाथसंस्कृतविश्वपरिषत् प्रति-ष्ठाप्यते । तदर्थं काचित् मन्त्रणासभापि क्रियते, संस्कृतविश्वपरिषदः कार्य्या-लयश्च 'भारतीयविद्याभवनम्, चौपट्टी, बोम्बे' इति सङ्केतिते स्थाने वर्त्तते ।

नानादेशीयप्रसिद्धजनसमवायेन संघटिताया अस्या ईश्वरप्रसादात् साफल्यमास्ताम् ।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna ( out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM.Kali-.pada Tarkacharya. (Out of stock.) . Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV.

No. 4.

३४श-वर्षस्य

४र्थ-संख्या

August 1951

१८७३-शकीये




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1

## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामवाजार

कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIV. No. 4. — १८७३-शकीये श्रावणे ३४श-वर्षस्य ४र्थ-संख्या — August 1951.


## हिन्दोलमङ्गलम्

सैवेयं यमुना सुनीलसलिला तीरद्रुमैः शोभिता
गावः कामगृहीतशष्पकवला भ्राम्यन्ति वृन्दावने ।
भृङ्गो गुञ्जति कुञ्जपादपशिरःशोभां विधत्ते शिखी
वर्षापुष्पसमृद्धिसम्भृतरुचा रम्यं महीमण्डलम् ॥

कीरः क्रीड़ति सारिकां परिगतः कुञ्जद्रुमालम्बनः
क्षौणी श्यामलतां गता नवरुचा शष्पेण सन्दीप्यता ।
जीमूतप्रतिगर्जिताम्बरतले सौदामनी द्योतते
धारायन्त्रमयीव सर्वधरणी लीलामपूर्वां श्रिता ॥

हिन्दोलोत्सवपूर्णिमातिथिरसौ सैवागता पूर्ववद्
भक्ता नन्दसुतानुकीर्तनपरा भावेन मुग्धाः स्थिताः ।
वामे राधिकयाञ्चितं मुरहरं वंशीनिषक्ताधरं
दोलारूढ़मृते वृथैव सकलं पृथ्वी हता कल्मषैः ॥

एह्येहि प्रियया हरे ! परमया श्रीराधया मुग्धया
हिन्दोलोत्सवसाधनाय तरसा दोलां प्रसन्नः श्रय ।
दोलान्दोलनवर्तनेन भवतो भक्ता गुणोद्गायनाः
लोके यन्तु कृतार्थतां फलयुतो मासोऽस्त्वयं श्रावणः ॥

## नवसूक्तिमालिका

दोषं गुणं वा निजवस्तुनो जनो
न जातु निर्धारयतु स्वया धिया ।
जानाति सर्वं नहि सर्व इत्यदः
प्रवादवाक्यं परिचिन्तयेत् सदा ॥
या बुद्धिरादौ सृजति स्म दूषणं
सैवाधुना तस्य विनिर्णये गतिः ।
विश्वासघातं यदि सा पुराकरोत्
कथं न भूयोऽपि तमेव साधयेत् ॥
यथा कथञ्चिन्निजवस्तुसाधुता
सम्पादनीया किल कीर्तिकाम्यया ।
यदानुकूल्येन विमुक्तदोषता
न तस्य कीर्तिः सदसा प्रगीयते ॥

---

## कालिदासीय-कुमारसम्भवम्

पञ्चमाध्याये कुमारसम्भवं पुराणानि च ।

[ निबन्धकः—श्रीकरुणाकुमारशास्त्री ]

( पूर्वानुवृत्तम् )

"कालिदासोऽलौकिककवित्वशक्त्या सम्पन्नः स्वकीयकाव्येष्वन्यदीय-श्लोकानविकलमुद्धृतवानिति तु कथमपि न सम्भवति। येषु कतिपयेषु पुराणश्लोकेषु तथा कालिदासीयश्लोकेषु चैक्यं दृश्यते, न हि तदति-रिक्तरचनारीतौ कुमारसम्भवस्य कालिदासीयानामन्येषां ग्रन्थानां

# मतिमञ्जरी

विचित्रा गतिर्गृहपतीनाम्। पुत्रकन्ययोः पुत्रे समधिकामिमे प्रीतिं पुष्णन्ति। बहुसंचारोऽयं व्यवहारः। तदिदं कथम्? अत्र वयं ब्रूमः,—पुत्रः कन्या च यद्यपि सममेव परिपाल्येते, सममेव स्नेहेन समवेक्ष्येते, तथापि पुत्रः परिपोषितो गृहमेवाधितिष्ठेत। परिणामे च शक्तो यथाशक्ति पितरावुपकुर्यात्। कन्या पुनः पुत्रसाम्येन परिपोषितापि परस्मै प्रतिपादिता दूरं गच्छति नोपकर्त्तुमर्हति च स्वेच्छया पितरौ। स्वामिकुलमुपेतायां तस्यां न तिष्ठत्यणुमात्रोऽपि प्रभावः पित्रोः। सुयोग्यवरान्वेषणार्थमपि तस्याः समपेक्षितः पित्रोः परिश्रमो भूयान्। दत्ताया अपि तस्याः सुखदुःखयोः कुतः पित्रोः प्रभुता। तदुक्तं प्राक्तनैरेतत् सर्वमभिसन्दधानैः,—

कन्येति जाता महतीह चिन्ता<br>
कस्मै प्रदेयेति महान् वितर्कः।<br>
दत्ता सुखं प्राप्स्यति वा नवेति<br>
कन्यापितृत्वं खलु कष्टहेतुः॥ इति।

ये तु कन्याया विवाहविधिनिरपेक्षाश्चिरकौमार्यमनुमोदन्ते तेषान्तावदन्यादृश्येव गतिः। स्वार्थाभिसन्धानपरिशून्यानां मुग्धानामपि गृहपतीनां यदित्थम्भावसम्भृतं चेतस्तदनादिकालप्रवृत्तसंस्कारानुबन्धादेवेति।

साम्प्रतं स्त्रीपुरुषयोः समानाधिकारप्रवृत्तिकाले गृहपतीनामवेक्ष्यते बहुत्रैव सोपपत्तिका तुल्या प्रतिपत्तिः। तयोः समानाधिकारे रतिमपुष्णतामपि प्राक्तनपद्योक्तदोषानभिजानतामपि वर्तमाने काले बहुत्र पुत्राणां बहुलं दोषराशिं कन्यानाञ्च गुणबाहुल्यमभिवीक्षमाणानां समैव सम्भावना पुत्रकन्ययोरिति।

---

# नवसूक्तिमालिका

दोषं गुणं वा निजवस्तुनो जनो
न जातु निर्धारयतु स्वया धिया ।
जानाति सर्वं नहि सर्व इत्यदः
प्रवादवाक्यं परिचिन्तयेत् सदा ॥
या बुद्धिरादौ सृजति स्म दूषणं
सैवाधुना तस्य विनिर्णये गतिः ।
विश्वासघातं यदि सा पुराकरोत
कथं न भूयोऽपि तमेव साधयेत् ॥
यथा कथञ्चिन्निजवस्तुसाधुता
सम्पादनीया किल कीर्तिकाम्यया ।
यदानुकूल्येन विमुक्तदोषता
न तस्य कीर्तिः सदसा प्रगीयते ॥

---

# कालिदासीय-कुमारसम्भवम्

पञ्चमाध्याये कुमारसम्भवं पुराणानि च ।

[ निबन्धकः—श्रीकरुणाकुमारशास्त्री ]

( पूर्वानुवृत्तम् )

"कालिदासोऽलौकिककवित्वशक्त्या सम्पन्नः स्वकीयकाव्येष्वन्यदीय-श्लोकानविकलमुद्धृतवानिति तु कथमपि न सम्भवति। येषु कतिपयेषु पुराणश्लोकेषु तथा कालिदासीयश्लोकेषु चैक्यं दृश्यते, न हि तदति-रिक्तरचनारीतौ कुमारसम्भवस्य कालिदासीयानामन्येषां ग्रन्थानां

वा पुराणरचनारीत्या सह सौसादृश्यं परिलक्ष्यते। विशेषतस्तानि पुराणानि तेषां तयेवांशा वा कुमारसम्भवात् पुर्व्ववर्त्तिनो न वात्र महान् संशयो विद्यते। सर्व्वाणि पुराणानि नाम वेदव्यासरचितानीति प्रसिद्धिः। परन्तु पुराणानां रचनाप्रणाली परस्परमतीव विभिन्ना—एक एव विषयो विभिन्नपुराणेष्वेवंविधैर्विभिन्नप्रकारैः संकलितो यत् तयेव ग्रन्था एकेनैव जनेन रचिता इति कथमपि प्रतीतिर्न जायते। संस्कृतभाषामयीं रचनां पठित्वा य एवेतर-विशेषं बोद्धुं समर्था यदि ते निरपेक्षा विष्णुपुराणं ब्रह्मवैवर्त्तपुराणं भागवतमपराणि च पुराणानि पठन्ति, ते विनायासेनैवाधिगन्तुं शक्नुवन्ति यदिमानि पुराणानि नह्येकलेखनीमुखविनिर्गतानीति। वस्तुतस्तानि नह्येकजनरचितानि समकालीनानि वा। मन्ये पुराणनामधेयानां प्रसिद्धग्रन्थानां बहवो न हि प्राचीना इति। तेषां कति वेदव्यासेन रचिताः। अपरे च परवर्त्तिभिर्यशोलिप्सुभिर्ग्रन्थकारैः स्वयमेव प्रणीय स्वकीयरचनाममत्वेन व्यासरचिता इति प्रकाशिताः। 'व्यास-रचितम्' इति प्रसिद्धमेतादृशं पुराणमपि दृश्यते यत्र सम्राज "आकवरस्य" नामोल्लेखोऽस्ति ; "लण्डन" शब्दस्य निर्देशोऽस्ति ; तस्य "लण्डनस्याधीश्वरी "विंकटावती"—भिक्टोरिया वा—कीर्त्तिता ; "आदमो", "हव्यवती (हावा—Eve) इत्युल्लेखा दृश्यन्ते (भविष्यपुराणम्)। अत एव वेदव्यासनामसंयोगादेव तावन्ति पुराणानि विक्रमादित्यात् प्रागेव रचितान, तानि तु दृष्ट्वा कालिदासः कुमारसम्भवं रचितवान्—अविकलांश्च श्लोकानुद्धृत्य स्वग्रन्थे निवेशितवान्—एवंविधो विश्वासो दुरभिगम्यो यदि कस्यापि पुराणनामसु नैष्ठिकी भक्तिर्न विद्यते। परं विपरीतमेव हृदयं गच्छति। योगवाशिष्ठे कुमारसम्भवे च श्लोकानां कतिपयानामैक्यमस्ति। परन्तु योगवाशिष्ठमाधुनिकमनार्षं च, अत्र कश्चिदंशतोऽपि सन्देहो न विद्यते।'

अतो मन्यते, कुमारसम्भवस्येतिवृत्तं कालिदासेन रामायणाद् गृहीतम्। रामायणे तु वर्णितं हरपार्व्वती-परिणयात् परं सुदीर्घकाले व्यतीते तपस्या-

रतेन विरूपाक्षेण मदनो भस्मीकृत इति। कालिदासोऽपश्यत्—अनेन लोक-शिक्षानुकूल्यं सम्भवति, परन्तु नास्त्यत्र चमत्कारिताविकाश इति। अतः कालिदासेन हर-पार्व्वती-विवाहात् प्रागेव मदनभस्मीकरणव्यापारं सम्पाद्य पार्व्वत्याः सौन्दर्य्याभिमानस्य मूलोच्छेदपूर्व्वकं पुनः पार्व्वत्यनुरोधाद् विवाहितेनाशुतोषेण मदनाय पुनर्जीवनस्य दानं विहितम्। इतिवृत्तस्य चानेन कियत्परिवर्त्तनेन रामायणस्य तदंशात् कालिदासीयचित्रं सुन्दरतरं जातम्। व्यास-वाल्मीकि-वर्णितानामितिवृत्तानां प्रयोजनबोधादीषत्परिवर्त्तनं परि-वर्द्धनं परिवर्ज्जनं वा साधयितुं सौन्दर्य्यजीविना कालिदासेन संशयो न विहितः। स हि ज्ञातवान् लोकशिक्षार्थं समाजशिक्षार्थं तथा सर्व्वजन-मनोरञ्जनार्थं रामायणादयो रचिता इति। तथा कलाशिक्षार्थं सौन्दर्य्य-प्रदर्शनार्थं शिक्षितसामाजिकानां कवितारसलिप्सूनाञ्च काव्यमावश्यकम्। अतः स परवर्त्तिरूपेण काव्यं प्रणीतवान्। अनेनैव कारणेन रामायण-वर्णितांशेन सह कुमारसम्भवस्य तथा महाभारतवर्णितांशेन सहाभिज्ञान-शकुन्तलस्येषत् पार्थक्यं परिलक्ष्यते। येषु पुराणादिषु हरपार्व्वती-परिणयात् प्रागेव मदनभस्मीकरणव्यापारो वर्णितः,—मन्यते तेषां रचयितारः कालिदासप्रदर्शितं पन्थानमनुसृतवन्तः। यतस्तेषु ग्रन्थेषु हरगौरीविवाहविषयिणी वर्णना बहुशः कुमारसम्भवानुयायिनी।

कालिदासः कुमारसम्भववर्णने प्रवृत्तोऽतीव दुःसाहसं कृतवान्। तस्मिंस्तु वाग्देव्या असीमकृपासीत्। अतः स सिद्धमनस्कामः। अन्ये कवयः पुनः कुमारसम्भवरचनामारभ्य तादृशं साफल्यं लब्धुमयतिष्यन्त चेत् ते तल्लाभेऽशक्ता एव अभविष्यन्।

तस्मिंस्तु महाकाव्ये प्रधानव्यक्तित्रयं पार्वती, महादेवो मदनश्च। या हि काव्यस्य नायिका, सा तु देवीनामेव देवी त्रिजगत्परमाराध्याद्या-शक्तिर्मातृस्थानीया च। अतस्तस्यां वाक्यारोपणे कविना सर्वथा सावधानेन भवितव्यम्। यथैव रीत्या सन्तानेन मातरि वाक्यं प्रयुज्यते, तेनैव भावेन कविनानुगन्तव्यम्। यो हि काव्यस्य नायकः, स एव

वा पुराणरचनारीत्या सह सौसादृश्यं परिलक्ष्यते। विशेषतस्तानि पुराणानि तेषां तयेवांशा वा कुमारसम्भवात् पूर्व्ववर्त्तिनो न वात्र महान् संशयो विद्यते। सर्व्वाणि पुराणानि नाम वेदव्यासरचितानीति प्रसिद्धिः। परन्तु पुराणानां रचनाप्रणाली परस्परमतीव विभिन्ना—एक एव विषयो विभिन्नपुराणेष्वेवंविधैर्विभिन्नप्रकारैः संकलितो यत् तयेव ग्रन्था एकेनैव जनेन रचिता इति कथमपि प्रतीतिर्न जायते। संस्कृतभाषामयीं रचनां पठित्वा य एवेतर-विशेषं बोद्धुं समर्था यदि ते निरपेक्षा विष्णुपुराणं ब्रह्मवैवर्त्तपुराणं भागवतमपराणि च पुराणानि पठन्ति, ते विनायासेनैवाधिगन्तुं शक्नुवन्ति यदिमानि पुराणानि नह्येकलेखनीमुखविनिर्गतानीति। वस्तुतस्तानि नह्येकजनरचितानि समकालीनानि वा। मन्ये पुराणनामधेयानां प्रसिद्धग्रन्थानां बहवो न हि प्राचीना इति। तेषां कति वेदव्यासेन रचिताः। अपरे च परवर्त्तिभिर्यशोलिप्सुभिर्ग्रन्थकारैः स्वयमेव प्रणीय स्वकीयरचनाममत्वेन व्यासरचिता इति प्रकाशिताः। 'व्यास-रचितम्' इति प्रसिद्धमेतादृशं पुराणमपि दृश्यते यत्र सम्राज "आकवरस्य" नामोल्लेखोऽस्ति ; "लण्डन" शब्दस्य निर्द्देशोऽस्ति ; तस्य "लण्डनस्याधीश्वरी "विंकटावती"—भिक्टोरिया वा—कीर्त्तिता ; "आदमो", "हव्यवती (हावा—Eve) इत्युल्लेखा दृश्यन्ते (भविष्यपुराणम्)। अत एव वेदव्यासनामसंयोगादेव तावन्ति पुराणानि विक्रमादित्यात् प्रागेव रचितानि, तानि तु दृष्ट्वा कालिदासः कुमारसम्भवं रचितवान्—अविकलांश्च श्लोकानुद्धृत्य स्वग्रन्थे निवेशितवान्—एवंविधो विश्वासो दुरभिगम्यो यदि कस्यापि पुराणनामसु नैष्ठिकी भक्तिर्न विद्यते। परं विपरीतमेव हृदयं गच्छति। योगवाशिष्ठे कुमारसम्भवे च श्लोकानां कतिपयानामैक्यमस्ति। परन्तु योगवाशिष्ठमाधुनिकमनार्षं च, अत्र कश्चिदंशतोऽपि सन्देहो न विद्यते।"

अतो मन्यते, कुमारसम्भवस्येतिवृत्तं कालिदासेन रामायणाद् गृहीतम्। रामायणे तु वर्णितं हरपार्व्वती-परिणयात् परं सुदीर्घकाले व्यतीते तपस्या-

रतेन विरूपाक्षेण मदनो भस्मीकृत इति। कालिदासोऽपश्यत्—अनेन लोक-शिक्षानुकूल्यं सम्भवति, परन्तु नास्त्यत्र चमत्कारिताविकाश इति। अतः कालिदासेन हर-पार्व्वती-विवाहात् प्रागेव मदनभस्मीकरणव्यापारं सम्पाद्य पार्व्वत्याः सौन्दर्य्याभिमानस्य मूलोच्छेदपूर्व्वकं पुनः पार्व्वत्यनुरोधाद् विवाहितेनाशुतोषेण मदनाय पुनर्जीवनस्य दानं विहितम्। इतिवृत्तस्य चानेन किथत्परिवर्त्तनेन रामायणस्य तदंशात् कालिदासीयचित्रं सुन्दरतरं जातम्। व्यास-वाल्मीकि-वर्णितानामितिवृत्तानां प्रयोजनबोधादीषत्परिवर्त्तनं परि-वर्द्धनं परिवर्ज्जनं वा साधयितुं सौन्दर्य्यजीविना कालिदासेन संशयो न विहितः। स हि ज्ञातवान लोकशिक्षार्थं समाजशिक्षार्थं तथा सर्व्वजन-मनोरञ्जनार्थं रामायणादयो रचिता इति। तथा कलाशिक्षार्थं सौन्दर्य्य-प्रदर्शनार्थं शिक्षितसामाजिकानां कवितारसलिप्सूनाञ्च काव्यमावश्यकम्। अतः स परवर्त्तिरूपेण काव्यं प्रणीतवान। अनेनैव कारणेन रामायण-वर्णितांशेन सह कुमारसम्भवस्य तथा महाभारतवर्णितांशेन सहाभिज्ञान-शाकुन्तलस्येषत् पार्थक्यं परिलक्ष्यते। येषु पुराणादिषु हरपार्व्वती-परिणयात् प्रागेव मदनभस्मीकरणव्यापारो वर्णितः,—मन्यते तेषां रचयितारः कालिदासप्रदर्शितं पन्थानमनुसृतवन्तः। यतस्तेषु ग्रन्थेषु हरगौरीविवाहविषयिणी वर्णना बहुशः कुमारसम्भवानुयायिनी।

कालिदासः कुमारसम्भववर्णने प्रवृत्तोऽतीव दुःसाहसं कृतवान। तस्मिंस्तु वाग्देव्या असीमकृपासीत। अतः स सिद्धमनस्कामः। अन्ये कवयः पुनः कुमारसम्भवरचनामारभ्य तादृशं साफल्यं लब्धुमयतिष्यन्त चेत् ते तल्लाभेऽशक्ता एव अभविष्यन।

तस्मिंस्तु महाकाव्ये प्रधानव्यक्तित्रयं पार्वती, महादेवो मदनश्च। या हि काव्यस्य नायिका, सा तु देवीनामेव देवी त्रिजगत्परमाराध्याद्या-शक्तिर्मातृस्थानीया च। अतस्तस्यां वाक्यारोपणे कविना सर्वथा सावधानेन भवितव्यम्। ययैव रीत्या सन्तानेन मातरि वाक्यं प्रयुज्यते, तेनैव भावेन कविनानुगन्तव्यम्। यो हि काव्यस्य नायकः, स एव

सर्वेषां देवानां वन्दनीयस्त्रिजगत्पूजनीयो जितेन्द्रियो निष्कामो निर्लिप्तश्च श्मशानचारी स्वर्ग-मर्त्त-रसातलानां पितृस्थानीयः। अपरं तु यो हि काव्यस्य प्रतिनायकः स एवानन्तशक्तिशाली विश्वसम्मोहनश्च। आब्रह्मस्तम्बपर्यन्तं हि तस्य साधनाधीनम्। एतादृशचरित्राणां त्रयाणामसाधारणानां चित्रणे कालिदासतूलिका व्यापृता। जगदाराध्याया आद्यायाश्चरित्रमक्षुण्णमेव सर्वथा रक्षितव्यम्, जगदाराध्यस्य जितेन्द्रियस्य शम्भोर्जितेन्द्रियत्वं सर्वथोज्ज्वलमेव विधातव्यम्; अन्यत्र च जगदुन्मादकस्य मदनस्य—

"कुर्यां हरस्यापि पिनाकपाणे-
र्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥"

इति सुकठिना प्रतिज्ञापि पालयितव्या। अस्मिन् भीषणे प्रतिज्ञापूरणेऽस्माकं कविः कीदृशं साफल्यं लब्धवानित्यधुना विचार्यम्।

## षष्ठाध्याये पार्वती

पार्वतीचरित्रमेव प्रधानमुपजीव्यं कुमारसम्भवस्य महाकाव्यस्य। तत्र तु यान्यन्यचरित्राणि वर्णितानि तेष्वीषद् गौणत्वमेवानुमीयते। अतः पार्वतीचरित्रमेव प्रागालोचनीयम्। तेनैव चरित्रेणान्येषां चरित्राणामाभासः प्रायशो लभ्यत एव। पार्वतीचरित्रे तु विरूपाक्षं प्रति तस्या अनुराग एव प्रधानो व्यापारः। स हि राग इत्थमद्भुतो गम्भीरोऽसाधारणोऽपरिमेयश्च यन्मानव्यां तस्य स्फोरणमसम्भवमेव। मनुष्याणां सर्वं ससीमम्। तेषामनुरागो गम्भीरत्वमसाधारणत्वं चार्हति। परन्तु स परिमेय एव। कथं मनुष्याणां— यक्षादीनामपि देवयोनीनामनुराग इयत्ता विद्यते परन्तु श्मशानचारिणि भूतनाथे पर्वतराजपुत्र्या यादृशोऽनुरागः स ह्यनन्तोऽ-

परिमेयश्च। मानवे न हि स सम्भवपर इति बुद्ध्वा कालिदासो ह्यनुराग-प्रस्रविणीमाद्यां शक्तिं महामायां तत्रादर्शीकृतवान्। स्वकीयकल्पनायां कालिदासस्येदृशो विश्वास आसीत यत्तेन तस्यादिकाव्ये महत्तमाया देव्याश्चरित्रं चित्रितम्। तस्यान्येषु काव्येषु प्रणयचित्राणि यथाङ्कितानि कुमारसम्भवे च सम्यगेव तद्विपरीतम्।

तस्य हि मेघदूते विलासी यक्षो विरहिणीं प्रियामुद्दिश्य पूर्णतया उन्मत्त एव। यक्षस्य व्यापाराः सर्वे चेन्द्रियविलासस्यैव फलम्। तस्य हि वाक्यानि बलवतीं भोगलालसां सूचयन्ति।

"निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु" ( उत्तरमेघे ) इत्यु-च्चार्य तेन हि लालसावह्निदीपशिखाया आवरणमुन्मोचितम्। तस्य हि चाभिज्ञानशकुन्तलं यद्यप्यपार्थिवप्रणयरत्नाकरस्तत्र चेन्द्रियलालसाच्छाया-पातो विद्यते। शकुन्तलायाः प्रथमदर्शनेन राज्ञो दुष्यन्तस्य भाषणं हि तस्येन्द्रियविकारस्य पूर्व्वाभास एव"—यदार्य्यमस्यामभिलाषि मे मनः।"इति

पुनश्च—"वैखानसं किमनया व्रतमा प्रदानाद्
　　　व्यापार-रोधि मदनस्य निषेवितव्यम्॥"

इति प्रश्नो राजहृदयस्य प्रबलेन्द्रियतरङ्गाभिघातानां प्रतिध्वनिरेव। परमभिज्ञानशकुन्तले स हीन्द्रियविकारोऽतिशयेन प्रच्छन्नः। तस्य विक्रमोर्व्वशीयमेव हि रूपकमिन्द्रियविकारप्रस्तानां प्रतिकृतिसमवायः। तत्रा-प्सरोजातीया हि नायिका—सा तु स्वर्गराजसभायाः श्रेष्ठा नर्त्तकी। अतएव तत्रेन्द्रियप्राधान्यपरिहारेण चित्रणमपि स्वाभाविकत्ववर्ज्जितं भवति। एतेष्वपि काव्येषु प्रणय इन्द्रियविकारमिश्र एव। परन्तु कालिदासः कुमारसम्भवे पार्व्वत्या यत् प्रणयचित्रमङ्कितवान् तत्र चेन्द्रियविकारस्य लेशोऽपि नास्ति, कामगन्धश्च न विद्यते। स एव प्रणयो जगदानन्ददायिन्या आर्य्याया अनुरूपत्वं सम्भाव्यत्वं चार्हति।

कवीनां द्वे एव वस्तुनी वर्णनीये—अन्तःसौन्दर्य्यं वहिःसौन्दर्य्यं च। कविजनः कदापि वहिःसौन्दर्य्यस्य साहाय्येनान्तर्जगतो वैचित्र्यं कदाचिद्-

वान्तःसौन्दर्य्यस्य साहाय्येन बहिर्जगतो वैचित्र्यं सृजति। परन्तु लोक-शिक्षासु बहिःसौन्दर्य्यादन्तःसौन्दर्य्यमेव समधिकं कार्य्यकारि। सृष्टिनैपुण्यं हि कवेः प्रथमः प्रधानश्च गुणः। सृष्टिनैपुण्यस्य विकलतायां सत्यां काव्य-स्याङ्गहानिर्जायते, लोकशिक्षासु समाजशिक्षासु च महाव्याघातो भवति। येनैव काव्येन समाजस्य न कोऽप्युपकारः साध्यते, तत्काव्यं कथमपि उत्तमं न भवति। समुद्रवेलायां दण्डायमानस्य जनस्य नयनयोरस्तगामी सूर्य्यः सुन्दरमेव समुद्रलीनतां गच्छति, दर्शकमनसि उत्थानपतनयोः क्षणिक-चिन्तां च सृजति। पर्व्वतशिखरे दण्डायमानजनस्य स्तिमितपृथिव्याः शोभा लोचनलोभनीया भवितुमर्हति। अपि तादृशाकृतिदर्शनेन जनानां कापि शिक्षा भवति? येनैव चित्रेण प्राणेषु क्षणस्थायिनमामोदं विना नान्यो महानादर्शो जनैर्लभ्यते, तादृशं काव्यं न कदापि उत्तममिति कथ्यते। काव्यस्य सौन्दर्य्यं न कस्मिन्नपि निर्दिष्टविषये नियतमस्ति। देश-काल-पात्र-रूप-गुणावस्थाकार्य्यादिभिश्चेत् कोऽपि सुन्दरपदार्थः सृज्यते तदेव यथार्थं सौन्दर्य्यम्। स एव कविसृष्टेश्चरमोत्कर्षः। यदि तस्मिन् सृष्टिनैपुण्ये कुत्रापि विकलता संघटते तदा काव्यादर्शभ्रंशो जायते। लोकशिक्षा समाजशिक्षा च व्याहता भवति। ये हि कवयः कतिपय-श्लोकैः कस्यापि पदार्थस्य बहिःसौन्दर्य्यं प्रदर्शयन्ति, ते हि प्रायशो निरापदः। ये वा बहिःसौन्दर्य्याभ्यन्तरे वर्णनीयं पदार्थं स्थापयित्वा बहिःसौन्दर्य्यालोकेन तमुद्भासयन्ति, तेषामपि कार्य्यं नातिदुष्करम्। परन्तु ये बहिःसौन्दर्य्यमुपेक्ष्य वर्णनीयपदार्थस्याभ्यन्तरप्रदेशे दृष्टिपातं कुर्व्वन्ति—बहिः सज्जायामुदासीनाः केवलं वर्णनीयस्यान्तःशोभामेवाव-लोकयन्ति तीक्ष्णमेव च तद्विचारयन्ति तयेव मनोहरं महान्तमादर्शं सृष्ट्वा समाजशिक्षामभिलषन्तः सफला भवन्ति, परन्तु तेषामेव कवीनामासनमनीव कण्टकितम्। तेषामेव प्रतिवर्णं प्रतिपदं च समाजकल्याणं चिन्तनीयं, लोक-हितैषणा च समनुवर्त्तनीया। यदेव समाजे नित्यममङ्गलकरं लोकहिताय वानुपयुक्तं तादृशा विषया अवश्यमेव वर्ज्जनीयाः। तस्मात् संस्कृत-

साहित्ये पाश्चात्यसाहित्यवर्त्ति "लेडि म्याकवेथ्"—"ओथेलो"—स्थानीयानि चरित्राणि न हि वर्ण्यन्ते। तादृशानि चित्राणि जनविशेषेषु मनोज्ञानि भवितुमर्हन्ति, परन्तु समाजशिक्षासु तेषामुपयोगिता नास्ति, अपि च घोरतरानिष्टाशङ्का विद्यते। अतः संस्कृतसाहित्यादर्शः—"रामादिवत् प्रवर्त्तितव्यं न तु रावणादिवत्" । इति

अत्र च पार्व्वतीचरित्रप्रवर्त्तने तत्र चान्तःसौन्दर्य्यस्य प्राधान्यप्रतिष्ठार्थं कालिदासो महान्तौ मेना-हिमालयौ पार्व्वतीपितरौ भृशमन्तःसौन्दर्य्यशालिनौ विधाय शैलाधिराजस्य नयनानन्ददायिनीमुमामुपस्थापयामास।

पार्व्वतीमाता मेना पितॄणां मानसी कन्या। पार्व्वतीपिता च हिमालयः पर्व्वतकुलाधिपतिः। स्थिरतया धीरतया प्रकाण्डतया च हिमालयोऽतुलनीयः। मेना च योगब्रह्मवादिनी मुनीनामपि माननीया। एवंभूतयोः स्वर्ग-मर्त्त-पूजितयोः पित्रोः सुताया हृदयं यथायोग्यमभवत्; तद्धृदयस्थप्रणयोऽप्यतुलनीय एव जातः। अथवा स्थैर्य्येण, धैर्य्येण, गाम्भीर्य्येण च पार्व्वतीहृदयं मेना-हिमालय-हृदये चातिचक्राम। तस्याः प्रणयश्चातिशायी चाभूतपूर्व्वश्च। दृढ़संकल्पा पार्व्वती मदनभस्मीकरणव्यापारमनु यदा तपोबलेन चन्द्रशेखरकरुणालाभार्थं प्रतस्थे तदा देवानां मानसी कन्या मेनापि पार्व्वत्या अलौकिकप्रणयगतिदर्शनेन निर्व्वाक् जाता। कथमेतदसाध्यसाधनमिति माता पार्व्वतीं भृशं प्रबोधितवती। कन्यायास्तादृशीमसाधारणहृदयगतिं जननी मेना स्वयमप्यनुभवितुं न शशाक। अतो यदा सा श्रुतवती तस्या अनवद्याङ्गी कन्या प्राणपातिसेवया चन्द्रशेखरकृपां लब्धुमशक्ता चासीत् पुनस्तस्मिन्नपि वृषध्वज आसक्तिमती जाता—सौन्दर्य्येण यं मोहयितुं नाशकत् पुनस्तपसा तत्प्रसादं लब्धुं दृढ़संकल्पा—तदा हि

( क्रमशः )

वान्तःसौन्दर्य्यस्य साहाय्येन बहिर्जगतो वैचित्र्यं सृजति। परन्तु लोक-शिक्षासु बहिःसौन्दर्य्यादन्तःसौन्दर्य्यमेव समधिकं कार्य्यकारि। सृष्टिनैपुण्यं हि कवेः प्रथमः प्रधानश्च गुणः। सृष्टिनैपुण्यस्य विकलतायां सत्यां काव्य-स्याङ्गहानिर्जायते, लोकशिक्षासु समाजशिक्षासु च महाव्याघातो भवति। येनैव काव्येन समाजस्य न कोऽप्युपकारः साध्यते, तत्काव्यं कथमपि उत्तमं न भवति। समुद्रवेलायां दण्डायमानस्य जनस्य नयनयोरस्तगामी सूर्य्यः सुन्दरमेव समुद्रलीनतां गच्छति, दर्शकमनसि उत्थानपतनयोः क्षणिक-चिन्तां च सृजति। पर्व्वतशिखरे दण्डायमानजनस्य स्तिमितपृथिव्याः शोभा लोचनलोभनीया भवितुमर्हति। अपि तादृशाकृतिदर्शनेन जनानां कापि शिक्षा भवति? येनैव चित्रेण प्राणेषु क्षणस्थायिनमामोदं विना नान्यो महानादर्शो जनैर्लभ्यते, तादृशं काव्यं न कदापि उत्तममिति कथ्यते। काव्यस्य सौन्दर्य्यं न कस्मिन्नपि निर्द्दिष्टविषये नियतमस्ति। देश-काल-पात्र-रूप-गुणावस्थाकार्य्यादिभिश्चेत् कोऽपि सुन्दरपदार्थः सृज्यते तदेव यथार्थं सौन्दर्य्यम्। स एव कविसृष्टेश्चरमोत्कर्षः। यदि तस्मिन् सृष्टिनैपुण्ये कुत्रापि विकलता संघटते तदा काव्यादर्शभ्रंशो जायते। लोकशिक्षा समाजशिक्षा च व्याहता भवति। ये हि कवयः कतिपय-श्लोकैः कस्यापि पदार्थस्य बहिःसौन्दर्य्यं प्रदर्शयन्ति, ते हि प्रायशो निरापदः। ये वा बहिःसौन्दर्य्याभ्यन्तरे वर्णनीयं पदार्थं स्थापयित्वा बहिःसौन्दर्य्यालोकेन तमुद्भासयन्ति, तेषामपि कार्य्यं नातिदुष्करम्। परन्तु ये बहिःसौन्दर्य्यमुपेक्ष्य वर्णनीयपदार्थस्याभ्यन्तरप्रदेशे दृष्टिपातं कुर्व्वन्ति—बहिः सज्जायामुदासीनाः केवलं वर्णनीयस्यान्तःशोभामेवाव-लोकयन्ति तीक्ष्णमेव च तद्विचारयन्ति तयेव मनोहरं महान्तमादर्शं सृष्ट्वा समाजशिक्षामभिलषन्तः सफला भवन्ति, परन्तु तेषामेव कवीनामासनमनीव कण्टकितम्। तेषामेव प्रतिवर्णं प्रतिपदं च समाजकल्याणं चिन्तनीयं, लोक-हितैषणा च समनुवर्त्तनीया। यदेव समाजे नित्यममङ्गलकरं लोकहिताय वानुपयुक्तं तादृशा विषया अवश्यमेव वर्ज्जनीयाः। तस्मात् संस्कृत-

साहित्ये पाश्चात्यसाहित्यवर्त्ति "लेडि म्याकवेथ्"—"ओथेलो"—स्थानीयानि चरित्राणि न हि वर्ण्यन्ते। तादृशानि चित्राणि जनविशेषेषु मनोज्ञानि भवितुमर्हन्ति, परन्तु समाजशिक्षासु तेषामुपयोगिता नास्ति, अपि च घोरतरानिष्टाशङ्का विद्यते। अतः संस्कृतसाहित्यादर्शः—"रामादिवत् प्रवर्त्तितव्यं न तु रावणादिवत्" । इति

अत्र च पार्व्वतीचरित्रप्रवर्त्तने तत्र चान्तःसौन्दर्य्यस्य प्राधान्यप्रतिष्ठार्थं कालिदासो महान्तौ मेना-हिमालयौ पार्व्वतीपितरौ भृशमन्तःसौन्दर्य्यशालिनौ विधाय शैलाधिराजस्य नयनानन्ददायिनीमुमामुपस्थापयामास।

पार्व्वतीमाता मेना पितृणां मानसी कन्या। पार्व्वतीपिता च हिमालयः पर्व्वतकुलाधिपतिः। स्थिरतया धीरतया प्रकाण्डतया च हिमालयोऽतुलनीयः। मेना च योगब्रह्मवादिनी मुनीनामपि माननीया। एवंभूतयोः स्वर्ग-मर्त्त-पूजितयोः पित्रोः सुताया हृदयं यथायोग्यमभवत्; तद्हृदयस्थप्रणयोऽप्यतुलनीय एव जातः। अथवा स्थैर्य्येण, धैर्य्येण, गाम्भीर्य्येण च पार्व्वतीहृदयं मेना-हिमालय-हृदये चातिचक्राम। तस्याः प्रणयश्चातिशायी चाभूतपूर्व्वश्च। दृढ़संकल्पा पार्व्वती मदनभस्मीकरणव्यापारमनु यदा तपोबलेन चन्द्रशेखरकरुणालाभार्थं प्रतस्थे तदा देवानां मानसी कन्या मेनापि पार्व्वत्या अलौकिकप्रणयगतिदर्शनेन निर्व्वाक् जाता। कथमेतदसाध्यसाधनमिति माता पार्व्वतीं भृशं प्रबोधितवती। कन्यायास्तादृशीमसाधारणहृदयगतिं जननी मेना स्वयमप्यनुभवितुं न शशाक। अतो यदा सा श्रुतवती तस्या अनवद्याङ्गी कन्या प्राणपातिसेवया चन्द्रशेखरकृपां लब्धुमशक्ता चासीत् पुनस्तस्मिन्नपि वृषध्वज आसक्तिमती जाता—सौन्दर्य्येण यं मोहयितुं नाशकत् पुनस्तपसा तत्प्रसादं लब्धुं दृढ़संकल्पा—तदा हि

( क्रमशः )

---

# वृत्तवर्त्तिका

परिषदो वार्षिकमहोत्सवः—समपद्यत साड़म्बरं संस्कृतसाहित्य-परिषदः पञ्चत्रिंशवार्षिकमहोत्सवो व्यतीतसौरश्रावणस्यैकादशदिवसे 'कलिकाता इउनिभार्सिटि' इनष्टिटिउट् इत्याख्यभवने। तत्र महामहोपाध्याय-श्रीयुक्तकालीपदतर्काचार्यमहोदयानां प्रस्तावेन पण्डितवर्याणां श्रीयुक्त-जानकीनाथशास्त्रिपादानां समर्थनेन च पश्चिमवङ्गप्रदेशपाला महामान्याः श्रीमन्तः कैलासनाथकाट्जुमहाभागाः समलङ्कृतवन्तः सभापतिपदम्। अथोत्सवादौ मङ्गलाचरणप्रसङ्गेनागीयत काचिदपूर्वा वेदगीतिः श्रीमद्भिः श्रीनाथसामाध्यायिभिः, यया चित्रार्पितमिवावतस्थे सर्वतः प्रेक्षागृहम्। गीतावसाने च परिषदन्यतमसम्पादकैः श्रीयुक्तचपलाकान्तभट्टाचार्य-महोदयैर्वाचितानि सोद्देश्यं परिषदो व्यतीतवर्षीयं कार्यविवरणमागामि-वर्षीयाणां परिषत् परिचालकानां च नामानि। अथ सभापतिमहोदयै-रुन्मोचिते नैयायिकप्रवराणां विद्वद्वरिष्ठानां तत्रभवतां स्वर्गतानां निशि-कान्ततर्कतीर्थपादानां चित्रे तच्चित्रस्य परिचयं प्रदातुं मनोरमया गीर्वाण-वाण्या नातिचिरं भाषितं श्रीमद्भिर्जानकीनाथशास्त्रिमहाभागैः। अनन्तरं संस्कृतभाषाया 'मृतभाषे'ति परिवादस्य खण्डनं संस्कृत-भाषायां काट्जुमहोदयानां महतीं प्रीतिश्चाधिकृत्य गीर्वाणवाणीरसिकाः श्रीयुक्तगाङ्गेयनरोत्तमशास्त्रिमहाभागाः कियन्तं कालमतिसुललितया सुरभारत्या समालोच्य परिषद्गृहनिर्माणनिष्पत्तये जनगणं साहायक-मायाच्य च स्वयं प्रतिश्रुतवन्तः परिषदे गृहनिर्माणार्थं रूप्यकाणामेकाधिकं शतम्। ततः परिषत्प्रियैः पण्डितवर्यैः श्रीमद्भिः श्रीजीवन्यायतीर्थ-पादैरपि संस्कृतभाषामयभाषणमुखेन परिषदः कृते जनगणानां करणीयं साहाय्यमुद्घोष्य व्यक्तीकृतं संस्कृतभाषायास्तथा संस्कृतसाहित्यपरिषदो

रक्षायाः प्रयोजनं सुधीसमक्षम्। तदनन्तरं सभापतिपादैरात्मनः संस्कृतप्रियतां संस्कृतसाहित्यपरिषदं प्रति सुमहतीं श्रद्धां च ज्ञापयद्भिः सुदीर्घः समयो नीतः सारगर्भेण हिन्दीभाषामयेण सभापतेरभिभाषणेन। अथ सभापतिमहोदयेभ्यः साधुवादज्ञापनानन्तरं गीतिकुशलैः श्रीयुक्त-सनतकुमारचट्टोपाध्यायमहोदयैरतिमधुरं गीते सभावसानसूचके सङ्गीते सभाकार्यं समवसितम्।

सभान्ते च जर्जरोत्सवावसाने परिषत्सदस्यैरभिनीतं विशाख-दत्तीयं मुद्राराक्षसं नाम नाटकम्। गुणग्राहिणां सामाजिकवर्याणां समक्षं नाट्यदक्षैः परिषत्सदस्यैरभिनीयमानमिदं नाटकं यत् सर्वेषां चित्ताकर्षकमभूत्तत्रास्ति किं वा बहु वक्तव्यम्। तथापि प्रेम्णा वा करणीय-बुद्ध्या वा गुणदोषनिर्वचनकाम्यया वा स्वत एव कामयन्ते तत्तद्भूमिका-मधिगताः प्रकर्षमप्रकर्षञ्चात्मनोऽवबोद्धुमभिनयमधिकृत्येति यत्किञ्चि-दत्र विविच्यते। तत्र हि प्रधानभूमिकासु अपूर्वमस्य चाणक्यभूमिका-मधिगतस्याभिनेतुरभिनयनैपुण्यम्। येन विमुग्धाः सभास्तारा एक-वाक्येनोचुः—"अहो शिक्षा, अहो साधना, अहो कलाकुशलता चाणक्य-भूमिकाभिनेतुः, तत् किमसावहर्निशमुन्निद्रोऽस्त्यभिनयव्यापारेषु? नहि बहुसाधनामन्तरेण कदाचिदेतावानभिनयमहिमा जनस्य कथमपि सम्भ-वेदिति। किं बहुना, चाणक्यस्याभिनयमभिवीक्ष्य नाट्यरसिकैर्गुण-लुब्धैः प्रेक्षकवर्यैः श्रीयुक्तगाङ्गेयनरोत्तमशास्त्रिपादैश्चाणक्यभूमिका-मध्यारूढाय श्रीयुक्तकार्त्तिकचन्द्रचक्रवर्त्तिने प्रतिशुश्राव स्वर्णपदकस्यै-कस्य प्रदानमपि। राक्षसभूमिकामारूढोऽपि सर्वत्रैवात्मभूमिकोचितं गाम्भीर्यं नीतिवैशारद्यञ्चाक्षुण्णतया प्रेक्षकेभ्यः प्रदर्शयन्नभिनयांशे सुमहन्नै-पुण्यमाविश्चकार। येन सोऽपि प्रेक्षकसाधारणेभ्यो महतीं श्रद्धामधिगतः पण्डितवर्यश्रीयुक्तश्रीजीवन्यायतीर्थमहोदयेभ्यः समलभत प्रतिश्रुतिमेकस्य रौप्यपदकस्य प्रतिपादने। यौ हि सिद्धार्थकक्षपणकौ, तावपि यथार्थत एवाभिनयदक्षावित नाधिकोक्तिः। तथाहि अभिनयवेलायामेतौ रङ्ग-

भूमाववतीर्य स्वस्वकीयेनाभिनयपाटवेन तथा तथा जनगणानमोहयताम् येन प्रेक्षकास्तदानीममन्यन्त 'स एवायं कालः स चैवासौ व्यापारं वर्त्तत' इति। तत् किमितोऽप्यभिनेतृणामस्ति प्रशस्यमन्यत्। ये खलु भागुरायणमलयकेतुप्रमुखास्तेऽप्यात्मनः कलाकौशलेनास्याभिनयस्य परमामेव शोभामवर्द्धयन। किं वा बहु ब्रूमहे, गौरीभूमिकायां निर्वाचमभिनयमभिनीयापि श्रीयुक्तराजेन्द्रनाथचतुर्धुरीणेनाम्ना गाङ्गेयनरोत्तमशास्त्रिमहोदयेभ्यो रौप्यपदकस्यैकस्य प्रतिश्रुतिरिति अभिनयसाफल्ये जितमतिजितं परिषन्नाट्यविभागाधिकर्तृभिः। तद् आशास्महे भाविन्यपि काले परिषदेवमेव यशोभागिनां पुरो भूयात परमेशितुः प्रसादादिति शम्।

विभिन्नवार्त्ताः—वर्तमाने मासि हिन्दोलयात्रा बहुत्रैव महता समारम्भेण सुसम्पादिता। स्वाधीनतादिवसमहोत्सवोऽपि अस्मिन्नेव मासि नियमेन सम्पादितः सर्वभारतीयैः। अत्रैव श्री १०८ निगमानन्दसरस्वतीपरमहंसानां जन्मदिवसं समुपलक्ष्य हालिसहरनगरे सुप्रतिष्ठिते सारस्वतमठे महानुत्सवः समजनि, तदनुषङ्गतश्च कलिकातास्थराममोहनलाइब्रेरीत्याख्यभवने संस्कृतसाहित्यपरिषतसदस्यैः कविवरश्रीश्रीजीवन्यायतीर्थविरचितं 'निगमानन्दचरित' नाम संस्कृतनाट्यं सम्यगभिनीतम्। 'ऋषिविद्यालया'ख्यसंस्कृतमहाविद्यालयप्रतिष्ठया तथा निरुक्तसंस्कृतनाट्याभिनयादिसंस्कृताभ्युदयानुकूलकृत्यसमूहप्रबन्धेन सारस्वतमठस्य सर्वथा समुत्कर्षमुद्घोषयामः।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As. 14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV.
No. 5.
३४श-वर्षस्य
५म-संख्या




September 1951
१८७३-शकीये
भाद्रे
मासे

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६).
Foreign price—1

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, य
सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा क
समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्
जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्
प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मन
वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भू
दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो
गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कार
संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मा
यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, त
सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्या
प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामवाजार

—कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्म' प्रकाशयतु धीमताम् ॥

| Vol. XXXIV. | १८७३-शकीये भाद्रे | September |
| --- | --- | --- |
| No. 5. | ३४श-वर्षस्य ५म-संख्या | 1951. |

## श्रीश्रीवासुदेवमङ्गलम्

नमो वासुदेवाय नन्दप्रियाय
प्रपञ्चार्त्तिसम्भारविध्वंसनाय ।
सुरारातिवित्रासिलीलाश्रयाय
प्रसन्नाय कृष्णाय चित्रक्रियाय ॥१॥

अजाय स्वमायागृहीतोदयाय
प्रकाशोत्तरं गोकुलं प्रापिताय ।
कलिन्दात्मजादत्तलीलापथाय
नमो नन्दजायासुतायासिताय ॥२॥

नमो रम्यवृन्दावने प्रस्थिताय
गवां चारणे लीलया व्यापृताय ।
समं गोपबालैः कृतक्रीड़नाय
महत्या विभूत्या परिभ्राजिताय ॥३॥

श्रिया राधयानेकलीलां गताय
प्रियालापवंशीनिषक्ताधराय ।
त्रिभङ्गाय तस्मै सुपीताम्बराय
नमो वर्हचूड़ाय नन्दात्मजाय ॥४॥

शिष्टा विवेकिनस्तु परिजना नेत्थं लोकतन्त्रविरुद्धमाचरन्ति। कृतवेदिनस्ते स्मरन्ति प्राक्तनमुपकारम्। वृद्धसेवाया महत् फलमभिजानन्तस्तस्य यथोचितं सेवां कुर्वन्ति। क्वापि संवृत्ते सन्देहे तमेव तत्त्वनिश्चयाय पृच्छन्ति तदुपदिष्टञ्च पन्थानमेकान्तेन मनसा समनुवर्त्तन्ते। कायेन मनसा वाचा च तमभिपूजयन्ति ध्यायन्ति प्रशंसन्ति। तदीयमुत्कर्षमन्तरेण दृढमभ्युपगच्छन्ति। शीलेन वा वचनेन वा न कदाप्येनमुद्वेजयन्ति। स्वार्थमभिन्नन्तोऽपि तदीयमिष्टं साधयन्ति। लभन्ते च फलीभूतं सर्वत्र विविधभव्यसङ्घातम्। सम्प्रति शिष्टा नैतादृशा बहवो दृश्यन्ते। कालप्रभावः खल्वयम्। सति तादृशानां बहुलप्रचारसम्भवे जगदिदं पूर्वकल्पमनल्पमुत्कर्षमभिविन्देत।

---

## नवसूक्तिमालिका

क्षुद्रोऽपि पक्षेण युतो यदा स्यात्
　　तदा निरालम्बपदेऽपि गन्ता।
विहङ्गमाः क्षुद्रतमाः सपक्षा
　　निदर्शनं तत्र नभः प्रपन्नाः ॥१॥

अरित्रयुक्ता सलिले चलन्ती
　　तरी प्रयाति त्वरयेष्टदेशम्।
विमानमालापि पतत्रतन्त्रा
　　नभः समाक्रम्य विहर्त्तुमीष्टे ॥२॥

पक्षं यथायोग्यमुपेत्य धीमान्
　　स्वकृत्यसिद्धौ कुरुतां प्रयत्नम्।
सपक्षता साध्यवती सदैव
　　विपक्षता साध्यविरोधहेतुः ॥३॥

---

# भारतमङ्गलम्

[ निबन्धकः—श्रीयादवेन्द्रनाथरायन्यायतर्कतीर्थः ]

याऽत्रवर्णाप्येकवर्णाक्षरनिकरमयी क्षान्तिरूपा क्षयेषु
सत्कान्त्या कान्तरूपा कलयति सकलं वीणया निक्कणन्ती ।
सायाता मर्त्यलोके सुमतिसुतगणैर्याच्यमाना प्रसन्ना
हिंसाद्वेषाद्यरातीन क्षपयतु हृदये शान्तिकामा निषण्णा ॥

नान्द्यन्ते

सूत्रधारः । अलमतिप्रसङ्गेन । आज्ञप्तोऽस्मि नवीनया परिषदा यदस्मिन रमणीये वसन्ते पाश्चात्यशिक्षामहौषधिसञ्जीवितानपि पाश्चात्य-सभ्यताहालाहलजर्जरितान् तत्रभवत आर्यमिश्रान अभिनवेन कालोचितेन रूपकेण विनोदयेति । तदेहि मारिष! प्राकृतवर्जितेन तथाऽख्यात-काव्यनिर्मातृनामाख्यानरहितेन रूपकेण विनोद्यतां सुसम्बद्धा एषा परिषत् ।

प्रविश्य

पारिपार्श्विकः । भाव! किमुच्यते? प्राकृतवर्जितेनेति? तदिदानीं न युक्तम् । यतः—

जनगणमनसां यद् रञ्जनं राजतन्त्रे
कथमिह तव युक्तं वर्जनं प्राकृतस्य ।
सुघटघटनकार्य्ये मृत्तिकाऽपेक्षणीया
न च करणविमुक्तं दृश्यते जन्यजातम् ॥

इतश्च—

सर्वेऽख्याता जन्मकाले मनुष्याः
कार्य्यात् काले ख्यातिमन्तो भवन्ति ।
विद्या वित्तं ख्यातिरायुश्च भोगो
भाग्यं पुंसां सर्वदैवानुयाति ॥

अपि च—न ह्ययं विनोदकालः। यतः—

विषमनिगड़बद्धा मातृभूमिः स्वकीया
यदपि निशितधारैरायुधैश्छिन्नबन्धा।
तदपि विविधबन्धान् दीव्यतो नाशयित्वा
तदनुगतसुपुत्रैर्लभ्यतां संविनोदः॥

सूत्रधारः। मारिष! न सम्यगवगतार्थोऽसि। मया प्राकृतभाषावर्जन-मुच्यते, न प्राकृतजनवर्जनम्। समाजशरीरे प्राकृतजनवर्जनचिन्ता प्राचीनैरपि न कृता। यच्च कवेर्नामाख्यानं तस्यरूपके विशेषतः कर्तव्यत्वेऽपि यदि निर्माता नामादिसंगोपनाय यतते, तदास्माकं का क्षतिः? यतः—

माधुर्यं पयसो विचारविषयः कस्येति चर्चा कुतो
भूदेवस्य तपस्विता न च वयः कौलीन्ययोगस्तथा।
चिन्त्यः काव्यगुणः कवेरनुपदं जन्मादिचिन्ता वृथा
पूजा धर्मसमाश्रिता जगति चेत् कान्वेषणं धर्म्मिणः॥

अन्यच्च मारिष! अस्माकं मातृभूमिरिदानीं कथञ्चित् स्वाधीना सञ्जाता, तदेतत् सुपरिज्ञातमपि कथं विस्मरसि?

पारि। भाव! न खलु विस्मरामि; किन्तु कथञ्चिदिति विचारो दुनोति मे चेतः, श्लथयति हृदयग्रन्थिं, घूर्णयति शिरः; तदत्र पृच्छामि "कथञ्चिदिति" पदपरिहारः कदा नः श्रवणोत्सवं विधास्यति।

(विमनास्तिष्ठति)

सूत्र। समाश्वसिहि मारिष! समाश्वसिहि। भविता सर्वं नचिरेणैव। आधेहि धैर्य्यं,—संचिनु शक्तिम्,—अपयास्यति सर्वा वो मानसी व्यथा। पश्य—

यथात्मा बलहीनेन नैव लभ्यः कदाचन।
तथोत्साहविहीनेन न कृत्यं साध्यते क्वचित्॥
उत्साहबलसम्पन्नैर्जेया कृत्स्ना वसुन्धरा।
येन नेतृमहात्मभ्यां मातृभूमिः समुद्धृता॥

नैपथ्यात्—

गणशक्तिः। अां कैरस्माकं जनन्या भारतधरण्या भारोऽपनीतः? (आकाशे) किं ब्रूथ?—नेतृमहात्मभ्यामिति? अहो अकृतज्ञता जनानाम्।

पारि। भाव! महदाश्चर्य्यम्। केयं स्वशरीरलावण्येन उद्भासयन्तीव दश दिशः, पूरयन्तीव दिक्चक्रवालं, निर्भर्त्सयन्तीव दम्भप्रागल्भ्यं गम्भीरया वाचा इत एवागच्छति। मन्ये कापि अलोकसामान्या दिव्य-मूर्तिरेषा। यस्या मांसलेन स्वरनिर्घोषेणैव अशनिनिपातशब्दत्रस्ता इव चकिता वयम्। न जानीमहे तस्याः सान्निध्येन कीदृशी स्मरणीयावस्था सम्भविष्यतीति? तत् क्वाधुना गन्तव्यम्?

सूत्र। मारिष! एषा—गणशक्तिः—सर्वशक्तिधारिणी। यदि भीतोऽसि, तदेहि, यावदेषा न परापतति, तावद् द्रुततरमेव पलायावहे।

( निष्क्रान्तौ )

इति प्रस्तावना।

( ततो रङ्गगृहं प्रविशन्ती )

गणशक्तिः। किं ब्रूथ?—नेतृमहात्मभ्यामिति? अयि भोः! विद्वद्वृन्दपरिमण्डितेयं परिषत्। अत्राप्येवमुद्घोष्यते! चित्रं नु चित्रम्! तदिदं सभ्यैरप्यनुज्ञायते। शृणुत भोः!

गणशक्तिः प्रभुस्तत्र नेतॄणान्तु निमित्तता।
शक्तिरूपाञ्च मां विद्धि सर्वभूतेषु निष्ठिताम्॥
चण्डी गीता च मन्मित्रे जना युद्धेऽत्र सैनिकाः।
सैन्याध्यक्षाश्च नेतारो मातृमुक्तिः फलं शुभम्॥

( नागरिकाः प्रविश्य गायन्ति )

कूजति किल कोकिलकुलमाम्रे मुकुलशोभिते।
गुञ्जत्यलिरुत्पलचये मञ्जुलरजोरञ्जिते॥
दिशि दिशि नवदृश्यनिचये पात्यते यदि दृष्टिः।
नन्दनवनसम्मितप्रभा लोक्यते नवसृष्टिः॥

स्वान्ते स्मर इच्छति मुदा कर्तुं निजावासम् ।
काननमभिविन्दति सदा सुविमलमृदुहासम् ।।
सुमधुरमधुमण्डितमासि माधवरसनन्दिते ।
एहि दुर्गे दुर्गतिहरे हरिहरविधिवन्दिते ।। (प्रस्थिताः)

ततः प्रविशति महात्मा—

महात्मा ( नतजानुः )

आबाल्यं स्तन्यदानान्निविडपरिचयाद् वर्द्धनात् प्राणनाद्य
याऽस्माकं पालयित्री विविधतनुमयी शक्तिरूपा जगत्सु ।
विश्वे या स्वांशबुद्ध्या श्रयति च निखिला मातृमूर्त्तीः समन्तात्
सा देवी रम्यमूर्त्तिः सुतनिवहकृते मङ्गलं संतनोतु ॥

नेपथ्यात् नेता :—

या नित्या नित्यमास्ते त्रिभुवनशरणे कामरूपा भवन्ती
याविर्भूता कदाचित् शरदि सुसमये देवनार्थं वसन्ते ।
इत्थं या लोकशिक्षां जगति घटयितुं सर्वदा व्यग्रचित्ता
सा देवी काम्यमूर्तिः सुतनिवहकृते मङ्गलं संतनोतु ।।

गणशक्तिः । शुभा वां सन्तु पन्थानः । मङ्गलं चिरन्तनं भूयात् । मम च समौ प्रियौ श्रीमन्तौ । सर्वोत्तमा वां गतिरस्तु । यद्यपि—

कृत्यं त्वशेषं न कृतं तथापि
गन्तव्यमेव प्रधनाद् भवद्भ्याम् ।
बुद्धिर्यदा स्थैर्य्यगुणं दधीत
तदैव सौख्यं वसुधातले स्यात् ।।

अपिच

विश्रृङ्खला नाम च श्रृङ्खलैका
मातुः पदं साम्प्रतमाश्रिता या ।
तां छेत्तुकामा यदि नेतृसङ्घाः
स्वार्थं परार्थं परिचिन्तयन्तु ।।

क्षीणे धर्मपथे विचारपदवी क्रान्ताधुना कण्टकैः
कार्याकार्यविचारणा यदि गता किंवा विचारालयैः ।
दुष्टाः शान्तिविधायकाः कलियुगे सभ्याश्च ते पापिनः
ये प्रायः सततं परार्थकरणे यच्छन्त्यसूनात्मनः ॥

महात्मा । एवमिदं । का गतिः ? पाश्चात्त्यराजशक्तेस्तनुमयी मूर्ति-र्भारतभूखण्डाद् गता,— आत्ममयी मूर्त्तिस्तु तद्भावापन्नानां मानसमधिष्ठाय विराजितात्र वर्तते । जगत्यां शान्तिप्रवर्तनाय विशिष्टा विद्वांसो नागरिका अनुष्ठानतो यतन्ते, किन्तु सर्वथैतत् मन्तव्यं भारतीयभावधारामुन्मूलीकृत्य शान्तिप्रतिष्ठाप्रयासो गगनभित्तिगोचरचित्रपरिकर्मवत् निष्फल एव ।

अपि च—

तपोवनं नाम च शान्तिधाम जातं महाहर्म्यमथापि तत्र ।
मनांसि शुद्धानि न सन्ति लोके शान्त्या निवासो वत कुत्र कल्प्यः ॥

गणशक्तिः । ( अपवार्य ) एवं नाम भारतवर्षे तपोवनं विधातुं, विधातुञ्च भारतीयान् शमप्रधानान् जनशिक्षकान् दुर्जनशासकांश्चाविरासीद् महात्मा । विसंष्ठुलैकपादतया प्रक्षीणे पुण्यप्रचये कालेऽस्मिन् स्थातुमशक्तः प्रयाता शरविद्ध इव मधुसूदनः । नेता च ततः पूर्वमेव समाकृष्टो गन्ता । ( दीर्घं निःश्वस्य ) तथा च न्यासो रक्षणीयः ।

( प्रकाशं )

यत्रानन्दाः कृतवसतयो लोकबाह्या विशुद्धाः
सदनन्यब्जे बुधगणमतेऽनाहते संलसन्ति ।
तत्रात्मानं विगतवृजिनं मेलयित्वा भवद्भि-
र्माध्वीकं तद् भवभयहरं शान्तिरूपं निपेयम् ॥

महात्मा । यथा तथास्तु । तथापि असुभूनां भारतभुवमवेक्षस्व श्लाघ्यां देवीम् । देवि ! नमस्ते ।

गणशक्तिः । एवमस्तु ।

प्रथमोऽङ्कः समाप्तः ॥१॥ ( क्रमशः )

# छन्दोग-क्रियासारः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्रीरमणीकान्त-सिद्धान्त-शास्त्री ]

अथ पित्र्ये मधुवातेति त्र्यृचं मधुशब्दत्रयञ्च जप्त्वा। "ॐ तृप्ताः स्थ" इति ब्राह्मणान पृच्छेत् । ॐ तृप्ताः स्म इति प्रत्युत्तरम्। प्रेतपक्षेऽपि मधुवातेति त्र्यृचं मधुशब्दत्रयञ्च जप्त्वा ॐ स्वदितमिति पृच्छेत् । ॐ सुस्वदितमिति प्रत्युत्तरम्। ततः पितृपक्षे प्रेतपक्षे च यथाक्रमम् ॐ अन्न-शेषैः किं क्रियताम् इति पृच्छेत् । उभयत्र इष्टैः सहोपभुज्यताम् इत्युत्तरम्। ततः पितृपक्षे प्रेतपक्षे च यथाक्रमम् ॐ पिण्डदानमहं करिष्ये इति पृच्छेत्। उभयत्र यथाक्रमं कुरुष्वेति प्रतिवचनम्। ततो ब्राह्मणसम्मुखे उच्छिष्ट-समीपे वामान्वारब्धदक्षिणहस्ते गृहीतपवित्रेण ॐ अपहता असुरा रक्षांसि वेदिषद" इत्यनेन दक्षिणाग्रां रेखां कृत्वा प्रेतपक्षेऽपि तथैव रेखां कुर्य्यात् । तत्र तत्र दक्षिणाग्रान् कुशानास्तीर्य्य पितॄनावाहयेत्। यथा तिलमादाय "ॐ एत पितरः सौम्यासो गम्भीरेभिः पथिभिः पूर्व्विणेभिर्दत्तास्मभ्यं द्रविणेह भद्र॰रयिञ्च नः सर्व्ववीरं नियच्छत" इत्यावाह्य तिलांस्त्यजेत्। ( एकोद्दिष्टे आवाहननिषेधात् प्रेतपक्षे त्वावाहनं न कुर्य्यात् ॥ )

ततो वामान्वारब्धदक्षिणहस्तेन सतिलजलं गृहीत्वा विष्णुरोम् अमुक-गोत्र पितामहामुकदेवशर्म्मन्नसाववनेनिक्ष्व ये चात्र त्वामनु यां॰श्च त्वमनु तस्मै ते स्वधा' इत्यनेन पितृतीर्थेन आस्तृतकुशमूले निक्षिपेत्। एवं जलस्पर्शपूर्वकं प्रपितामह—वृद्धप्रपितामहयोरपि आस्तृत-कुशमूलाग्रयोरवने-जयेत्। ततः प्रेतपक्षे तथैव सतिलजलमादाय विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन्नसाववनेनिक्ष्व इत्यनेन कुशोपरि अवनेजयेत्। ततः पितृपक्षे सर्वस्मात् हविषोऽल्पमल्पमुद्धृत्य अन्नेन मिश्रयित्वा विल्वप्रमाणान् त्रीन् पिण्डान् निर्म्माय एकं वामहस्तान्वारब्धदक्षिणहस्तेन दर्व्या गृहीत्वा विष्णुरोम् अमुकगोत्र पितामहामुकदेवशर्म्मन्नसावेष ते पिण्डो ये चात्र त्वामनु यां॰श्च त्वमनु तस्मै ते स्वधा' इत्यनेन आस्तृतकुशमूले अवनेजन-स्थाने दद्यात्। एवं जलस्पर्शपूर्व्वकं प्रपितामहवृद्धप्रपितामहयोः प्रत्येकम्

आस्तृतकुशमध्यामग्रयोर्दद्यात्। प्रेतपक्षेऽपि एकं विल्वप्रमाणं पिण्डं निर्म्माय सतिलमोटकं गृहीत्वा विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन्न-सावेष ते पिण्डः स्वधा' इत्यनेन अवनेजनस्थाने कुशोपरि दद्यात्।

ततः पितृपक्षे कुशमूले ॐलेपभाजः पितरः प्रीयन्ता'मित्यनेन हस्तलेपं दद्यात्। ततः पिण्डपात्रप्रक्षालनजलेनावनेजयेत्। यथा, विष्णुरोम् अमुकगोत्र पितामहामुकदेवशर्म्मन्नसाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा' इत्यनेन प्रथमपिण्डोपरि तज्जलमर्पयेत्। एवं जलस्पर्शपूर्व्वकं प्रपितामहवृद्धप्रपितामहयोः पिण्डोपरि अवनेजयेत्। ततः प्रेतपक्षे पिण्डपात्रप्रक्षालनजलेन विष्णुरोम् अमुकगोत्र प्रेतामुकदेवशर्म्मन्नसाव वनेनिक्ष्व' इत्यनेन अवनेजयेत्—प्रेतपिण्डोपरि तज्जलं क्षिपेत्। ततः पितृपक्षे ॐअत्र पितरो मादयध्वम्, यथाभागमावृषायध्वम्' इति जपेत्। ततो वामावर्त्तेनोदङ्मुखो दक्षिणामुखो वा श्वासं धृत्वा सर्व्वान् पितॄन् भास्वरमूर्त्तिकान् ध्यायन् ॐअमीमदन्त पितरो यथाभागमावृषायिषत' इति जपेत्। ततः श्वासं त्यजेत्। ततः कृताञ्जलिः ॐ "नमो वः पितरः पितरो नमो वः इति जपेत्। ॐगृहान्नः पितरो दत्त' इति गृहिणीं पश्येत्। ॐसदो वः पितरो देष्म' इति पिण्डान् पश्येत्। प्रेतपक्षे ॐअत्र प्रेत मादयस्व, यथाभागमावृषायस्व' इति जपेत्।

ततो वामावर्त्तेनोदङ्मुखो दक्षिणामुखो वा श्वासं धृत्वा प्रेतं भास्वर-मूर्त्तिं ध्यायन् ॐ अमीमदत प्रेत यथाभागमावृषायिष्ट इति जप्त्वा श्वासं त्यजेत्। ततः कृताञ्जलिः ॐ नमस्ते प्रेत प्रेत नमस्ते' इति जपेत्। ततः ॐ गृहान्नः प्रेत देहि' इति गृहिणीं पश्येत्। ॐ सदस्ते प्रेत देष्म इति पिण्डं पश्येत्। ततः पितृपक्षे नवमनवं वा वासःसूत्रमादाय विष्णुरोम् अमुकगोत्र पितामहामुकदेवशर्मन् अमुकगोत्र प्रपितामहामुक-देवशर्मन् अमुकगोत्र वृद्धप्रपितामहामुकदेवशर्मन्नसावेतत्ते वासः स्वधा इत्यनेन पिण्डोपरि निदध्यात्। ततः प्रेतपक्षे वासःसूत्रमादाय अमुकगोत्र प्रेतामुकदेवशर्मन्नसावेतत्ते वासः स्वधा इत्यनेन पिण्डोपरि

निदध्यात्। तत उभयत्रैव गन्धादिना तूष्णीं पिण्डान् पूजयेत्। ततः पिण्डेभ्यः पुष्पादिकमपनीय प्रेतपिण्डं कुशादिना त्रिधा विभज्य ॐ ये समानाः समनसः पितरो यमराज्ये। तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम्। ॐ ये समानाः समनसो जीवा जीवेषु मामकाः। तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः' इति मन्त्राभ्यां प्रथम-खण्डं पितामहपिण्डेन सह मिश्रयेत्। एवं जलं स्पृष्ट्वा उक्तमन्त्राभ्यां द्वितीयखण्डं प्रपितामहपिण्डेन तृतीयखण्डं वृद्धप्रपितामहपिण्डेन सह मिश्रयेत्। (क) ततो दैवपूर्वं तन्त्रेणाचमनं दद्यात्। विष्णुरोम् विश्वे देवा एतत्ते आचमनं स्वाहा। पितृपक्षे विष्णुरोम् अमुकगोत्र पिता-महामुकदेवशर्मन् अमुकगोत्र प्रपितामहामुकदेवशर्मन् अमुकगोत्र वृद्ध प्रपितामहामुकदेवशर्मन्नेतत्ते आचमनं स्वधा इत्यनेन दद्यात्। प्रेतपक्षे विष्णुरोम् अमुकगोत्र प्रेत अमुकदेवशर्मन्नेतत्ते आचमनं स्वधा' इत्यनेन दद्यात्।

ततो दैवपूर्वं ॐ सुप्रोक्षितमस्तु' इति ब्राह्मणाग्रभूमिं ब्राह्मणांश्च आसिञ्चेत्। ॐ अस्तु, इति प्रतिवचनम्। ॐ शिवा आपः सन्तु, इत्यनेन पूर्ववदासिञ्चेत्। ॐ सन्तु, इति प्रतिवचनम्। ॐ सौमन-स्यमस्तु, इति ब्राह्मणाय पुष्पं प्रतिपादयेत्। ॐ अस्तु इति प्रतिवचनम्। ॐ अक्षतञ्चारिष्टञ्चास्तु इति यवान् दद्यात्। ॐ अस्तु इति प्रति-वचनम्। ततः सयवजलं गृहीत्वा विष्णुरोम् विश्वेषां देवानामक्षय्य-मस्तु इति देवब्राह्मणहस्तेषु दद्यात्। ॐ अस्तु इति प्रतिवचनम्।

---

(क) "एतेनैव पिण्डो व्याख्यातो व्याख्यातः"। १७। श्राद्धसूत्रम्।

एतेनार्घ्यमिश्रणप्रकारेणैव पिण्डमिश्रणप्रकारोऽपि व्याख्यातो वेदितव्यः। एतदनेनोक्तं भवति। प्रेतपिण्डं त्रिधा विभज्य 'ये समाना' इति मन्त्राभ्यां पितृपिण्डेषु मिश्रयेत् इति। मन्त्रावृत्तिरुक्ता। द्विर्वचनं प्रकरण-समाप्त्यर्थम्।

पित्र्ये सतिलजलं गृहीत्वा विष्णुरोम् अमुकगोत्रस्य पितामहस्य अमुक-देवशर्मणोऽक्षय्यमस्तु इत्यनेन पितामहब्राह्मणहस्तेषु दद्यात्। ॐ अस्तु इति प्रतिवचनम्। एवं जलस्पर्शपूर्वकं प्रपितामहवृद्धप्रपितामहयोः प्रत्येकं दद्यात्। ततः प्रेतपक्षे विष्णुरोम् अमुकगोत्रस्य प्रेतस्यामुक-देवशर्मण उपतिष्ठताम् इत्यनेन दद्यात्। ॐ उपतिष्ठताम् इति प्रतिवचनम्। ततः ॐ अघोराः पितरः सन्तु इति प्रार्थना। ॐ सन्त्विति प्रतिवचनम्। ॐ गोत्रं नो वर्द्धताम् इति प्रार्थना। ॐ वर्द्ध-तामिति प्रतिवचनम्। प्रेतपक्षे तु ॐ अघोरः प्रेतोऽस्तु इति प्रार्थना। ॐ अस्तु इति प्रतिवचनम्। ॐ गोत्रं नो वर्द्धतामिति प्रार्थना। ॐ वर्द्धतामिति प्रतिवचनम्। ततः पिण्डानामुपरि सपवित्रान् दर्भानास्तीर्य ॐ स्वधां वाचयिष्ये इति पृच्छेत्। वाच्यतामित्युत्तरम्। ततः ॐ पितामहेभ्यः स्वधोच्यतामिति वदेत्। ॐ अस्तु स्वधेति प्रतिवचनम्। एवं प्रपितामहेभ्यः स्वधोच्यतामिति, वृद्धप्रपितामहेभ्यः स्वधोच्यतामिति च वदेत्। सर्वत्र अस्तु स्वधेति प्रतिवचनम्। प्रेतपक्षे तु ॐ स्वधां वाचयिष्ये इति परिपृच्छ्य ॐ प्रेतेभ्यः स्वधोच्यतामिति च पृच्छेत्। उभयत्र ॐ वाच्यताम्। ॐ अस्तु स्वधेति यथाक्रमं प्रतिवचनम्।

(क्रमशः)

---

# वृत्तवर्त्तिका

श्रूयते वङ्गीयसंस्कृतशिक्षापरिषदि द्वितीयः संस्कृतविद्यालयपरि-दर्शको नियुक्तो भविष्यति, यस्य प्रस्तावः शिक्षापरिषदो वार्षिकाधिवेशने सिद्धान्तरूपेण परिगृहीतो वर्त्तते। अस्माभिरिदमत्युचितं मन्यते; यत एकेन परिदर्शकेन समग्रपश्चिमवङ्गीयसंस्कृतविद्यालया न शक्यन्ते वर्षेणै-केन सम्यक्तया परीक्षितुम् अपेक्षिता च प्रतिवर्षमेव तेषां परीक्षा। तदेतद् येषामानुकूल्येन येषाञ्च मुख्येन प्रयत्नेन सम्पद्यते, ते सुतरामस्माभि-रपरैश्च संस्कृतनिष्णातपण्डितसमाजैः समभिनन्दनीयाः।

---

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish cha ndra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14 ; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya, Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV. No. 6.
३४श-वर्षस्य ६ष्ठ-संख्या

October 1951
१८७३-शकीये आश्विने मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।.
Foreign price—1

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्यत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्माय्यैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामबाजार
कलिकाता-४

संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIV. No. 6. | १८७३-शकीये आश्विने ३४श-वर्षस्य ६ष्ठ-संख्या | October 1951.

# श्रीश्रीदुर्गामङ्गलम्

अनन्तरूपधारिणी कृतान्तभीतिभञ्जिनी
दुरन्तदैत्यदारिणी कृपापयस्तरङ्गिणी ।
शुभा महेशभामिनी विशालविश्ववासिनी
समस्तजीवतारिणी प्रसीदतु प्रभाविणी ।
विनायकाग्निभूवृता रमासरस्वतीयुता
मृगेन्द्रवाहनं गता सुरर्षिमानवस्तुता ।
विचित्रशस्त्रसम्भृता तुषारभूभृतः सुता
शिवं तनोतु वन्दिता शरत्क्रमप्रबोधिता ।
अशेषशक्तिशालिनी श्रिया जगत्प्रकाशिनी
त्रिलोकसृष्टिकारिणी समग्रविश्वपालिनी ।
लये च रुद्ररूपिणी महातमोविनाशिनी
शुभं तनोतु तारिणी सदा सतां हितैषिणी ।
यदीयवर्च्चसा रविस्तमोनिवर्त्तकच्छविः
सुधाकरः स्थितो दिवि स्वतेजसा तमःपविः ।
यदीयतृप्तये हविर्हुतं प्रशान्तभैरवी
तनोतु साद्य शाम्भवी शिवं शिवाय वैष्णवी

---

# मतिमञ्जरी

भारतीया प्राचीनायुर्वेदविद्या वैदिकी सम्पत्। सव पुरा सर्वतः समालम्बनमासीत् स्वास्थ्यस्थितौ शरीरवताम्। दिव्यदर्शना ऋषिगणा वेदादुद्धृत्य स्वयं दिव्यदर्शनेनानुभूय च जनरोगप्रतीपभूतानि वस्तूनि तन्त्रद्वारा प्रचार्य्य धर्मसाधनमूर्द्धन्यस्यं शरीरस्य नीरोगताप्रतिपत्तेरुपायप्रचयप्रदर्शनेन भुवनोपकारं साधितवन्तः। विचित्रा खल्वायुर्वेदविद्या, यया स्ववैद्यावश्विनीकुमारौ शरीराद् वियोजितस्य शिरसो यथापूर्वं संयोजनेऽपि समर्थाविभूताम्। आयुर्वेदविद्याया भुवने प्रथमप्रचारादनन्तरं परःपरार्द्धा बुद्धिमन्तस्तामिमामायुर्वेदविद्यां समाराध्य तदीयरहस्यानि परितः प्राचीकशन, यान्यवलम्ब्य सुमहानायुर्वेदसम्प्रदायो जगति प्रववृते। तस्मादेव सम्प्रदायादजनिष्ट देशान्तरीणायुर्विद्यासम्प्रदायप्रचयो यस्यैवाद्य कालस्य कुटिलगत्या स्वयोनिपराभूत्या सुमहानभ्युदयः। तत्कृतं बहोः कालात् प्रभृति प्रचरद्रूपमुपकारप्रकरं दर्शं दर्शं क्रमेण तत्रैव प्राक्तनार्षविद्यानुगृहीतायुर्विद्यासम्प्रदायपरिहारेण दृढः प्रत्ययः प्रवृत्तिश्च विग्रहवतां शारीरसंस्कारमपेक्षितं सम्पिपादयिषताम्। परन्तु देशान्तरीणायुर्विद्यासम्प्रदायः किल विशेषतो नैतद्देशप्रकृत्यनुगुणः परिणामरमणीयश्च। दिव्यदर्शनशालिनो महर्षयो देशप्रकृतिविवेकेन परिणामक्षेमविचारेण दीनैरपि सुलभानां वस्तुशतानां परिग्रहेण प्राचीनायुर्वेदविद्यां प्रचारितवन्त इति सैषा सर्वथा समधिकरोति प्रकर्षसीमाम्। एवं सत्स्वपि प्रशस्तिसाधनेषु तामिमां प्राचीनार्षविद्यां पराभूय किमित्यभ्युदयमपरिमेयमभ्यागता नवीना पाश्चात्त्यवैद्यविद्येति पर्य्यनुयोगे नवीनाया राष्ट्राधिकारेण स्वीकारमन्यस्याश्च तद्विरहमेव निदानं वदामः। तदद्य सौभाग्यतः समुदिते भारतवर्षस्वातन्त्र्ये तं तथाविधं राष्ट्राधिकारस्वीकारमार्षविज्ञानप्रचितायां प्राचीनवैद्यविद्यायां वयमाशास्महे, येन पुनरप्येषा प्राचीनाभ्युदयाभ्यागमेन परिणामरमणीयभुवनोपकारकारिणी

स्वीयामनन्यसामान्यां सम्पदं सफलीकुर्य्यात्। तत्तदर्थं ये प्रयतन्ते तेभ्यः सुतरामान्तःकरणिकं प्रशस्तिवादं वितीर्य्य शिष्टानपि शिष्टानेतदर्थं समामन्त्रयामः।

---

## नवसूक्तिमालिका

अल्पं प्रजानन्नपि यो मनुष्यो
　　बहुज्ञभावं परितस्तनोति।
तस्य स्वरूपं नियतं कदाचिन
　　प्रकाशमासाद्य वहेदवज्ञाम् ॥१॥
यावद्धनं यस्य ततोऽधिकं चेद्
　　विज्ञायते प्रार्थिजनैस्तदीयम्।
तदाधिकप्रार्थनया स नूनं
　　न दातुमर्हो भविता विपन्नः ॥२॥
मिथ्यास्वरूपस्य भुवि प्रचारा-
　　न्निवृत्तिरेवात्महितं विधत्ते।
न लुप्यते कीर्त्तिरितः कदाचित्
　　यशःक्षतिः स्याद् विपरीतमार्गे ॥३॥

---

## वन्दे मातरम्

[ निबन्धकः—श्रीकरुणाकुमारशास्त्री ]

या देवी सर्व्वभूतेषु मातृरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

**उपोद्घातः** ॥ "उमा उमे"ति ध्यायन् जननीजठराद् विनिर्गच्छति नवजातकः। दशमासस्थायिनीं नितरां गर्भयन्त्रणां स्मृत्वाऽसहनीय-कष्टान्मुक्तोऽस्मीति मुक्तिदायिनीं जगन्मातरम् "उमा, उमे"त्याकारयन पुन-

यथा न तादृशज्वालया दह्यमानो भविष्यामीति प्रार्थयते। परन्तु जननात् कियद्दिवसान्तरे च पुनर्मायावशीभूतो जनः कर्त्ताहमिति मन्यमानो जगज्जननीं विस्मृत्य शिशुसारल्यं च विसृज्य जगज्जननीक्रोड़ाद् दूरवर्ती भवति। मायाविमूढ़ो जनः संसारचक्रस्य परिधिपथेन भृशं धावति मन्यते च भ्रमणयन्त्रगा मे समाप्तप्रायेति। परन्तु जगन्माता कथमपि न हि तेनासाद्यते। व्यासरेखां परिहाय कः कदा कुत्र रेखाचक्रस्य आन्तरस्थलं स्प्रष्टुं समर्थो भवति? अपरे च कति सरला मातृगतप्राणा जीवाः शिशुसारल्येन दिवसारम्भे मातृनाम स्मृत्वा स्वकीयकर्त्तव्यमारभन्ते, माता मे सर्व्वं पश्यतीति ज्ञानेन कार्याणि सम्पादयन्ति निशायां च पुनर्मातृनाम स्मृत्वा शय्यामाश्रयन्ति। अन्ये च मोहाविद्धा जना तैलिकवलीवर्द्दवद् रुद्धदृष्टयः केवलमेव विषयचक्रपरिधौ भ्रमन्ति। न हि ते मुक्तिकल्पनामपि कुर्वन्ति। पुरा किल समाधि-सुरथादयो निर्व्विण्णचेतसः केवलमेव जगज्जननीमाश्रित्य परमां गतिं लेभिरे। तथा च साधकवर्या "रामप्रसाद"—"वामाक्षेपा"—"वाड़व्यराधाकान्त"—श्रीरामकृष्णादयः शिशुसारल्येन विश्वमातरं प्रत्यक्षीकृत्य स्वजन्म सार्थकं चक्रुः। मातरि चैकान्तिकनिर्भरतया विद्यमानास्ते हि साधकवर्या "मा, मा" इति साश्रुधारां प्रथमां साधनामारब्धवन्तः। पाषाण-नन्दिनीं "पाषाणी" ति मातृमन्त्रेणोद्बोध्य वशीकृत्य च द्रवमयीं गङ्गामिव स्नेहप्रवाहिनीं विहितवन्तः। तेषां तु सहजो भावः—सन्तानभावः। नाधिकं किञ्चित् ते कदाप्युक्तवन्तः, केवलमेवाहर्निशं—"नाहं किञ्चिदन्यद् वेद्मि। माता विद्यते, अहमपि भवामो"ति ते हि कातरप्रार्थनां भक्तेषु सञ्चारयितुमचेष्टन्त—" मातस्ते भुवनमोहिन्या मायया मा माच्छादय। ज्ञानमज्ञानञ्च, पापं पुण्यञ्च—सर्व्वाणि ते समर्पयामि, केवलामेव शुद्धां भक्तिं मे प्रयच्छेति। मातस्ते क्रोड़मवलम्ब्याहमात्मानं निर्भयं मन्ये" उपास्या तु साधकानां मातेति भवेत; अयं हि विशुद्धतमो भावः। नास्त्यत्र पतनाशङ्का। एते हि जगदम्बासुताः—निर्भया निश्चिन्ता निरभि-

माना निरहंकारा मातृचरणलग्नाश्च। जागतिके सुखे तथा दुःखे वा माता हि तेषां केवलमाश्रयस्थानम्। ते हि सुनिश्चितं जानन्ति—"नान्यः पन्था विद्यतेऽयनाय" इति।

आख्यानम्॥ भारतीयान् सर्वान् शक्तिपीठानवलम्ब्य किञ्चदात-पौराणिकमाख्यानं प्रचरदस्ति। प्रजापतेर्दक्षस्य कनिष्ठा कन्या सती शिवेन परिणीता। अन्ये च दक्षस्य जामातरः सर्व्वे विषयाधिपा विषयासक्ताश्च। परन्तु महायोगी शम्भुः सर्वत्यागी विभूतिभूषणः कारणविशेषाद् दक्षस्य विरागभाजनमभूत्। ततो दक्षः शिववर्ज्जं यज्ञमेकमारब्धवान्। एवाहूता सती शिवस्य स्वच्छन्दानुमतिं विना नन्दिसहाया पितृगृहं यज्ञदर्शनार्थं ययौ। तत्र च दक्षमुखात् शिवनिन्दां श्रुत्वा सती महादुःखेन यज्ञशालायां योगबलेन प्राणांस्तत्याज। नन्दिमुखात् कैलाशपतिः सतीमरणवार्त्तां श्रुत्वा क्रोधा-ज्जटामेकां छित्त्वा भूमौ चिक्षेप। तस्माद् वीरभद्रो जातः। प्रमथगणै-श्चासौ दक्षयज्ञं विध्वस्तं कृत्वा दक्षस्य च मुण्डं छित्त्वा तस्य स्कन्धे छागमुण्डं नियोज्य तस्य जीवनदानं विहितवान् सतीवियोगविधुरो विह्वलः शिवः सतीदेहं स्कन्धे वहन् यथेच्छं परिबभ्राम। नारायण-स्तु सुदर्शनचक्रेण सतीदेहं खण्डशः कृत्वा शिवस्कन्धच्युतं कृतवान्। सुदर्शनच्छिन्नः सतीदेहो द्विपञ्चाशत्खण्डैर्भारतवर्षस्य विभिन्नस्थानेषु विक्षिप्त आसीत्। भारतवर्षेषु द्विपञ्चाशत्पीठोत्पत्तिकारणमेतत् सर्वं सनातनधर्मावलम्बिनो जानन्ति। देव्यास्तु बहुविधा अर्चनापद्ध-तयोऽस्मिन् देशे विद्यन्ते। प्रतिपद्धति किञ्चित् पौराणिकाख्यानं वर्त्तते। महामाया देवलोके मनुष्यलोके च विभिन्नकालेष्वाविर्भूय यान् लीलाविलासादीन् कृतवती, पुराणेषु तद्वर्णनं दृश्यते। एभ्यः पुरा-णेभ्यः सुस्पष्टमेव प्रतीयते यद् भक्ता विविधमन्त्रैर्विविधोपचारैर्विविध-विधिभिरेकामेवाद्यां शक्तिमुपासते। आर्यधर्मावलम्बिनां चरमविषयो हि सर्वेभ्यो ब्रह्मविद्याविषयकज्ञानदानम्। प्राचीनानां सनातनधर्माव-लम्बिनां किञ्चिदपूर्वमवदानमेतत्।

**ध्यान-धारणा-पूजाविधिः**—"देश-काल-निमित्तातीतं सर्वभूतान्तरात्मैकान्तनिर्विशेषं गुणातीतं परब्रह्मैव केवलं सद्वस्तु"—इत्यद्वैतवादिनः। परब्रह्मज्ञानलाभ एव मुक्तिकामिनामेकं लक्ष्यं वस्तु यतः परब्रह्मज्ञानं विना मुक्तिर्न भवति। श्रीभगवानुवाच—'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति गीतायाम्। पुनश्चास्मिन् ब्रह्मज्ञानविषये उपनिषद् वदति "विज्ञातारमरे केन विजानीयात्" इति। "आश्चर्यो वक्ता कुशलोऽस्य लब्धा॥" किं बहुना—देवा अपि अस्मिन् ब्रह्मवस्तुविषये न सम्यक् सन्दधातीताः। "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।" तस्याप्यहंकारस्य साक्षी बुद्ध्यतीतः। आत्मतत्त्वमवर्णनीयं वस्तु धारणातीतमेव॥

एतस्य हि परमगुह्यतत्त्वस्य सर्वत्र प्रचारार्थमेव बाह्यपूजाव्यवहारः। अस्माकं तु मनः स्थूलमेव वस्तु ग्रहीतुं शक्नोति। ध्यानातीतं केवलमेव चित्स्वरूपं कमपि विषयमुपलब्धुमस्माकं प्राकृतं मनोऽशक्तमेव। अतो विश्वप्रेमणा प्राचीना महर्षयो विशेषतो निम्नाधिकारिणां कल्याणार्थमेव बाह्यपूजां प्रचारितवन्तः। बहिरङ्गस्य स्थूलावरणस्य पूजनस्यान्तः सुकौशलेन वाक्यमनोऽतीतमात्मतत्त्वं न्यस्तमस्ति। अतो ज्ञानलाभपथरूपः साधनमार्गः सुगमः सरसश्च। पूजापद्धतौ च दृश्यते आदौ पूजकस्यान्तःशुद्धिविधानमावश्यकमेव। अतः परं बाह्यपूजारम्भ इति। ननु भूतशुद्धिरन्तःशुद्धेः सारांश एव। यो हि भाग्यवान् साधको भूतशुद्धिकार्यं यथार्थमेव कर्त्तुं शक्नोति, तस्य हि बाह्यपूजया प्रयोजनं नास्ति। केवलं हि लोकोपकारार्थमेव भक्तो बहिः पूजां करोति।

भूतशुद्धिक्रमे तु दृश्यते साधको दीपकलिकावद् जीवात्मानं सुषुम्णावर्त्मना षट्चक्राणां निम्नतमे मूलाधारचक्रे प्रसुप्तया भुजगाकारया कुण्डलिन्या योजयतीति। तत्र मुहुर्मुहुः सञ्चालनेनाह्वानेन च कुण्डलिनीं जागरितां कृत्वा तया सह ब्रह्मनाड़ीमवलम्ब्य मूलाधारात् क्रमशः स्वाधि-

ष्ठानं मणिपुरमनाहतं विशुद्धमाज्ञाचक्रं विभिद्य सहस्रारे परमब्रह्मण्यात्मानं विलीनं विभाव्य पञ्चीकृतं पञ्चभूतात्मकमिदं स्थूलशरीरं महाकारणे विलीनमिति चिन्तयति। अतःपरं पापपुरुषरूपिणमवशिष्टमशुभसंस्कारसमूहं वायुबीजेन परिशोष्याग्निबीजेन च दहति। अतः सुस्पष्टमेव प्रमाणितं यत् साधकस्य ससीमाहंसत्तां सर्वावयवञ्च सर्वसम्पदश्च निःशेषं दूरीकर्त्तुमीदृशी ध्यान-धारणा प्रवर्त्तिता। कस्यचिद् भक्तसाधकस्य "मयि पञ्चत्वं गते सर्वापदो यास्यन्ति" इति कर्त्तृत्वाभिमानस्याहंभावस्य मृत्युः भूतशुद्धौ वर्णितप्रक्रियायाः चरमार्थः।

इत्थं ससीमाहंसत्ताया अवसाने सहस्रारावस्थितामृतमयपरब्रह्मसमुद्राद् बीजरूपेण क्षरितेनामृतेन स्थूलदेहस्तथेन्द्रियाणि च पुनर्घटयन्त इति धारणा कार्या। तस्माच्चिन्मयपरब्रह्मण आराध्या देवतोद्बुद्धास्य ब्रह्ममयनवनिर्मितकलेवरस्य हृतपद्मे चावतिष्ठते जीवात्मा च तस्माद् ब्रह्मसमुद्रात् समुत्पन्नः पूर्वनिर्दिष्टास्थानं पुनरधितिष्ठति। अनेनैव प्रकारेण साधकस्य सर्वावयवश्चिन्मयः पुनर्जातश्च। अस्मिन काले साधकः स्वीयवक्षोदेशं स्पृष्ट्वा जीवन्यासमन्त्रमुच्चारयन्नाराध्यां देवीं स्वकीयचिन्मयदेहस्य हृत्पद्मासने समासीनां चिन्तयति। अतःपरं मानसपूजनम्। तदा तु चिन्मयः साधकश्चिन्मयीमुपास्यां चिन्मयोपकरणैरर्चयति। अस्यां तु पूजायां ध्यानातिरिक्तं नास्ति किञ्चिदपि। तदुक्तं—"देवो भूत्वा देवं यजेत्।" इति

अतःपरं पुरतः स्थापितं घटपटादिप्रतीकमवलम्ब्य बाह्यपूजा कार्या। परन्तु पूजनात् प्रागेव पूजनीयप्रतीकस्य प्राणप्रतिष्ठां कुर्यात्। प्राणप्रतिष्ठाविधाने तु दृश्यते पूर्ववर्णितः साधको हृदयावस्थितामिष्टदेवतां स्वहृदयाद् बहिराहूय पुरतः स्थापितप्रतीके स्थापयति। अतःपरं प्रतीकस्य हृदयस्पर्शपूर्वकं जीवन्यासमन्त्रमुच्चारयति। इत्येवं प्राणप्रतिष्ठा। ततो यथाविधि पूजां समाप्य स्वेष्टदेवतां प्रतीकात् स्वहृदयमानयति। "यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति" तत्र हृदय इष्टदेवतानयनं हि विस-

र्जनम्! अत्र समासेन हि पूजाविधिः कथितः। साधकस्य मनः क्रमेण यथा सूक्ष्मातिसूक्ष्मं परमं गुह्यं ब्रह्मतत्त्वमवगन्तुं शक्नोति, पूजापद्धतिस्तस्यैव कश्चिदपूर्व उपायः। अनेनैवोपायेन साधकस्य ध्यान धारणादयः क्रमशः सूक्ष्मत्वमाप्नुवन्ति क्रमशस्तस्य चित्तशुद्धिर्जायते; क्रमेण हि तस्य कर्त्तृत्वाभिमानावसानं भवति। क्रमेण हि तस्य हृदयं स्वच्छदर्पणवन्निर्मलं चिन्मयं भवति। इत्थं हि लब्धात्मतत्त्व-श्चिन्मय उपनिषद् ऋषिर्दृढप्रतीत्योदात्तमघोषयत—"शृण्वन्तु विश्वे अमृतस्य पुत्राः—वेदाहमेतं पुरुषं महान्तम्।" तथैव सुस्पष्टं सरलं वाक्यमाश्रित्योनविंशशताब्दीयः श्रीरामकृष्णोऽप्यघोषयत्, यस्यायमनु-वादः—अरे अहमीश्वरं पश्यामि—यथा त्वां पश्यामि; ततः स्पष्टतरमेव तं पश्यामि। ईश्वरो दृश्यते, स्पृश्यते, साक्षान्निवेद्यते च।

बाङ्ग्यो राधाकान्तोऽवदत्" साधके कृपां कर्त्तुं ब्रह्मणो रूपधारणम्।" साधको रामप्रसादो जगज्जननीं बहुशः सुस्पष्टमुपलब्धवान्। भक्तेषु माता साकारा, ज्ञानिषु च निराकारा।

अयि भो हरसुन्दरि! पुण्यवन्तो जनाः स्वकीयसाधनबलेन सर्वबाधाविनिर्मुक्ताश्चरणं ते लभन्ते। तत्र का ते दया?

अयि मातः शिवप्रिये! सर्वथा वञ्चिता हतभाग्या वास्तुच्युता राजपथाश्रिता अन्नहीना वस्त्रहीनाः प्राणमात्रसारा यदि ते कृपां न लभन्ते, तदा कीदृशी ते दया?

अस्ति श्रीमद्भगवद्गीतायां—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥"

तथा श्रीश्रीदुर्गासप्तशतीमाहात्म्ये :—

"इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥"

अप्यधुना न हि तत्समय उपस्थितः? अथवा "विसृज्य सर्वान् चरणौ ते लभ्यौ ॥"

उमे! योगेश्वरि! जगदीश्वरि! योगमाये! जगदम्बे!!

"असतो मा सद् गमय ॥ तमसो मा ज्योतिर्गमय ॥ मृत्योर्माऽमृतं गमय ॥ आविराविर्म एधि ॥"

---

## छन्दोग-क्रियासारः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्रीरमणोकान्त-सिद्धान्त-शास्त्री ]

ततो न्युब्जीकृतपात्रमुत्तानीकृत्य सपवित्रकुशाच्छादितपिण्डोपरि ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन । इत्यनेन वामान्वारब्धदक्षिणहस्तेन वारिधारां दद्यात ।

ततो दैवे ॐ विश्वे देवाः प्रीयन्तामिति ब्रूहि इति वदेत । ॐ विश्वे देवाः प्रीयन्तामिति प्रतिवचनम् । ततः पिण्डान भोजनपात्राणि च चालयित्वा यथाशक्ति दक्षिणां दद्यात । यथा प्रथमं देवपक्षे । अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मणः सपिण्डीकरणार्थं विश्वेषां देवानां कृतैनत्पार्वणविधिकसपिण्डीकरणश्राद्धकर्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनं तन्मूल्यं वा यथानामगोत्रं ब्राह्मणायाहं ददे । ततः पितृपक्षे अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मणः सपिण्डीकरणार्थं अमुकगोत्रस्य पितामहस्यामुकदेवशर्मणः अमुकगोत्रस्य प्रपितामहस्यामुकदेवशर्मणः अमुकगोत्रस्य वृद्धप्रपितामहस्यामुकदेवशर्मणः पार्वणविधिकसपिण्डीकरणश्राद्धकर्मणः प्रतिष्ठार्थं दक्षिणामिदं रजतं तन्मूल्यं वा यथानामगोत्रं ब्राह्मणायाहं ददे । ततः प्रेतपक्षे अमुकगोत्रस्य प्रेतस्यामुक-

र्जनम्! अत्र समासेन हि पूजाविधिः कथितः। साधकस्य मनः क्रमेण यथा सूक्ष्मातिसूक्ष्मं परमं गुह्यं ब्रह्मतत्त्वमवगन्तुं शक्नोति, पूजापद्धतिस्तस्यैव कश्चिदपूर्व उपायः। अनेनैवोपायेन साधकस्य ध्यान धारणादयः क्रमशः सूक्ष्मत्वमाप्नुवन्ति क्रमशस्तस्य चित्तशुद्धिर्जायते; क्रमेण हि तस्य कर्तृत्वाभिमानावसानं भवति। क्रमेण हि तस्य हृदयं स्वच्छदर्पणवन्निर्मलं चिन्मयं भवति। इत्थं हि लब्धात्मतत्त्वश्चिन्मय उपनिषद् ऋषिर्दृढप्रतीत्योदात्तमघोषयत—"शृण्वन्तु विश्वे अमृतस्य पुत्राः—वेदाहमेतं पुरुषं महान्तम्।" तथैव सुस्पष्टं सरलं वाक्यमाश्रित्योनविंशशताब्दीयः श्रीरामकृष्णोऽप्यघोषयत, यस्यायमनुवादः—अरे अहमीश्वरं पश्यामि—यथा त्वां पश्यामि; ततः स्पष्टतरमेव तं पश्यामि। ईश्वरो दृश्यते, स्पृश्यते, साक्षान्निवेद्यते च।

बाङ्ग्यो राधाकान्तोऽवदत्" साधके कृपां कर्त्तुं ब्रह्मणो रूपधारणम्।" साधको रामप्रसादो जगज्जननीं बहुशः सुस्पष्टमुपलब्धवान। भक्तेषु माता साकारा, ज्ञानिषु च निराकारा।

अयि भो हरसुन्दरि! पुण्यवन्तो जनाः स्वकीयसाधनबलेन सर्वबाधाविनिर्मुक्ताश्चरणं ते लभन्ते। तत्र का ते दया?

अयि मातः शिवप्रिये! सर्वथा वञ्चिता हतभाग्या वास्तुच्युता राजपथाश्रिता अन्नहीना वस्त्रहीनाः प्राणमात्रसारा यदि ते कृपां न लभन्ते, तदा कीदृशी ते दया?

अस्ति श्रीमद्भगवद्गीतायां—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥"

तथा श्रीश्रीदुर्गासप्तशतीमाहात्म्ये :—

"इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥"

अप्यधुना न हि तत्समय उपस्थितः ? अथवा "विसृज्य सर्वान चरणौ ते लभ्यौ ॥"

उमे ! योगेश्वरि ! जगदीश्वरि ! योगमाये ! जगदम्बे !!

"असतो मा सद् गमय ॥ तमसो मा ज्योतिर्गमय ॥ मृत्योर्माऽमृतं गमय ॥ आविराविर्म एधि ॥"

---

## छन्दोग-क्रियासारः

( पूर्वतोऽनुवृत्तः )

[ निबन्धकः—श्रीरमणीकान्त-सिद्धान्त-शास्त्री ]

ततो न्युब्जीकृतपात्रमुत्तानीकृत्य सपवित्रकुशाच्छादितपिण्डोपरि ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् । इत्यनेन वामान्वारब्धदक्षिणहस्तेन वारिधारां दद्यात् ।

ततो दैवे ॐ विश्वे देवाः प्रीयन्तामिति ब्रूहि इति वदेत् । ॐ विश्वे देवाः प्रीयन्तामिति प्रतिवचनम् । ततः पिण्डान भोजनपात्राणि च चालयित्वा यथाशक्ति दक्षिणां दद्यात् । यथा प्रथमं देवपक्षे । अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मणः सपिण्डीकरणार्थं विश्वेषां देवानां कृतैतत्पार्वणविधिकसपिण्डीकरणश्राद्धकर्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनं तन्मूल्यं वा यथानामगोत्रं ब्राह्मणायाहं ददे । ततः पितृपक्षे अद्येत्यादि अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मणः सपिण्डीकरणार्थं अमुक-गोत्रस्य पितामहस्यामुकदेवशर्मणः अमुकगोत्रस्य प्रपितामहस्यामुकदेव-शर्मणः अमुकगोत्रस्य वृद्धप्रपितामहस्यामुकदेवशर्मणः पार्वणविधिक-सपिण्डीकरणश्राद्धकर्मणः प्रतिष्ठार्थं दक्षिणामिदं रजतं तन्मूल्यं वा यथानामगोत्रं ब्राह्मणायाहं ददे । ततः प्रेतपक्षे अमुकगोत्रस्य प्रेतस्यामुक-

देवशर्मणः सपिण्डीकरणार्थं अमुकगोत्रस्य प्रेतस्यामुकदेवशर्मण एको-दिष्टविधिकसपिण्डीकरणश्राद्धकर्मणः प्रतिष्ठार्थं दक्षिणामिदं रजतं तन्मूल्यं वा यथानामगोत्रं ब्राह्मणायाहं ददे । ततः कृताञ्जलिः ॐ दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा विगमत् बहु देयञ्च नो अस्तु अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि याचितारश्च नः सन्तु माच याचिष्म कञ्चन" इति पठित्वा 'एता एवाशिषः सन्तु इति प्रार्थयेत । ततो ब्राह्मणैः ॐ सन्तु इत्युक्ते सर्वानेव ब्राह्मणान् ॐ स्वस्ति ब्रूहि इति पृच्छेत् । ब्राह्मणैः ॐ स्वस्ति इत्युक्ते पूर्वोक्ता आशिषः प्रतिगृह्य "ॐ वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञा अस्य मध्व पिवत मादयध्वं तृप्ता यात पथिभिर्देवयानैः इत्यनेन ब्राह्मणान विसर्जयेत । प्रथमं पितृब्राह्मणविसर्जनं ततः प्रेतब्राह्मणविसर्जनं ततो दैवब्राह्मण-विसर्जनम् । प्रेतब्राह्मणन्तु ॐ अभिरम्यतामिति विसर्जयेत् । ॐ अभिरतोऽस्मि इति प्रतिवचनम् । दैवब्राह्मणविसर्जनकाले पुनर्मन्त्रावृत्ति-र्नास्ति । एतेन श्राद्धस्य दैवाद्यन्तत्वं भवेत । ततः ॐ आमावाजस्य-प्रसवो जगम्यादेमेद्यावापृथिवी विश्वरूपे आमागन्तां पितरामातरा चामा-सोमो अमृतत्वेन गम्यात् इत्यनेन ब्राह्मणान् प्रदक्षिणीकृत्य अभिवाद्य वाम-देव्यं गीत्वा गृहं प्रविशति । ततोऽच्छिद्रावधारणं विष्णुस्मरणञ्च कुर्यात ।

इति सपिण्डीकरणश्राद्धं समाप्तम्

अयुग्मान् उदङ्मुखान् ब्राह्मणान् संस्थाप्य तानर्च्चयित्वा तेभ्य आचमनोदकं दत्त्वा ( दैवे )ॐ अद्येत्यादि अमुकगोत्रस्य पितुरमुकदेवशर्म्मणोऽमावस्या-क्षयनिमित्तकपार्व्वणविधिकसांवत्सरिकश्राद्धार्थं अमुकगोत्रस्य पितुरमुक-देवशर्म्मणः अमुकगोत्रस्य पितामहस्यामुकदेवशर्म्मणः अमुकगोत्रस्य प्रपितामहस्यामुकदेवशर्म्मणः पार्व्वणविधिकसांवत्सरिकश्राद्धे कर्त्तव्ये पुरुरवोमाद्रवसोर्विश्वेषां देवानां पार्व्वणविधिकसांवत्सरिकश्राद्धं दर्भमयब्राह्मणयोरहं करिष्ये' इति पृच्छेत्। ॐ कुरुष्वेति प्रतिवचनम्। ततः पितृपक्षे ॐ अद्येत्यादि अमुकगोत्रस्य पितुरमुकदेवशर्म्मणोऽमावस्या-क्षयनिमित्तकपार्व्वणविधिकसांवत्सरिकश्राद्धार्थम् अमुकगोत्रस्य पितुर-मुकदेवशर्म्मणः अमुकगोत्रस्य पितामहस्यामुकदेवशर्म्मणः अमुकगोत्रस्य प्रपितामहस्यामुकदेवशर्म्मणः पार्व्वणविधिकसांवत्सरिकश्राद्धं दर्भमय-ब्राह्मणेषु, ब्राह्मणे वा अहं करिष्ये' इति पृच्छेत्। ॐ कुरुष्वेति प्रतिवचनम्। एवं मातुरपि पार्व्वणविधिकश्राद्धं कर्त्तव्यम्। तत्र मातृ-पितामहीप्रपितामहीनां श्राद्धमिति विशेषः। सपिण्डीकरणपर्य्यन्तन्तु पित्रोरपि एकोद्दिष्टं न तत्र पार्व्वणविधिकम्। ततो दैवे प्राङ्मुखत्वादिना विष्णुरोम् एतद्दर्भासनं पुरुरवोमाद्रवःसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वाहा' इत्यनेन देवब्राह्मणदक्षिणपार्श्वे ऋजुदर्भान् दद्यात्। ततो दक्षिणामुखः प्राचीनावीती पातितवामजानुः विष्णुरोम् एतद्दर्भासनं पितृभ्यः स्वधा इत्यनेन पितृपक्षीयब्राह्मणवामपार्श्वे द्विगुणभुग्नदर्भान् दद्यात्। ततो दैवे प्राङ्मुखत्वादिना यवानादाय ॐ विश्वान् देवानावाहयिष्ये इति पृच्छेत् ॐ आवाहय इत्यनुज्ञातः ॐ विश्वे देवास आगत...इत्यादि ॐ विश्वे देवाः शृणुतेम'मित्यादि, ॐ ओषधयः स्वदन्ते...इत्यादि मन्त्रत्रयेणावाह्य यवान् विकिरेत्। ततः पितृपक्षे दक्षिणामुखत्वादिना तिलान् ॐपितॄनावाहयिष्ये' इति पृच्छेत्। ॐ आवाहय इत्यनुज्ञातः ॐ उशन्तस्त्वा...इत्यादि, ॐ एत पितरः...इत्यादि, ॐ आयान्तु नः...इत्यादि मन्त्रत्रयेण आवाह्य ॐ अपहता असुरा रक्षां॰सि वेदिषदः' इति तिलान् विकीर्य्य जलं स्पृशेत्।

ततो दैवे ब्राह्मणसम्मुखे प्रागग्रदर्भोपरि द्वे पात्रे, पितृब्राह्मणसम्मुखे दक्षिणाग्रदर्भोपरि त्रीणि पात्राणि संस्थाप्य ॐ पवित्रे स्थो वैष्णव्यौ' इत्यनेनानखमुच्छिन्नं प्रादेशमात्रम् एकैकस्मिन् पात्रे एकैकं विन्यस्य तेषु प्रत्येकं मन्त्रावृत्त्या ॐ शन्नोदेवी...इत्यादिमन्त्रेण जलमासिञ्चेत्। ततो दैवे ॐ यवोऽसि यवयास्मद्द्वेषः...इत्यादिमन्त्रेण एकैकस्मिन् यवाना-वपेत्। ततः पित्रादिपात्रेषु ॐ तिलोऽसि सोमदेवत्यः···इत्यादिमन्त्रेण एकैकस्मिन् तिलानावपेत्। ततः जलं स्पृशेत्। ततो दैवादिक्रमेण तूष्णीं पात्रेषु गन्धपुष्पादिकं दत्त्वा ॐ या दिव्या आपः...इत्यादि मन्त्रमुच्चार्य्य विष्णुरोम् विश्वे देवा एतत्तेऽर्घ्यं स्वाहा' इत्युत्सृज्य देवब्राह्मणहस्ते तूष्णीं प्रागग्रं पवित्रं प्रतिपाद्य जलादिकं प्रतिपादयेत्। (क्रमशः)

---

## वृत्तवर्त्तिका

भारते वर्षे लोकसभाया विधानसभायाश्च सदस्यपदलाभाय भूयसां भूयानेव प्रबन्धः समवलोक्यते। महानयमर्थः। य एव समधिकजनसम्मत्या सदस्य-पदं लभेरन् नूनं त एवास्माभिरधिकर्त्तारः स्वीकरणीयाः। परं तैरिदम-वश्यं स्मर्त्तव्यं यत् संवृत्तेऽपि भारतवर्षे स्वातन्त्र्ये नाद्यापि समुपजातमशन-वसनप्रतिश्रयादीनां दीनधनिकनिर्विशेषं सौलभ्यम्। तदेतद् यदि शक्यं सदस्यपदमधिकृत्य तैः साधयितुं तदैव तेषां सार्थः सदस्यपदलाभो नान्यथा। सार्वजनीना खलु जगति प्रभावाधिचिकीर्षा। प्रभावो यावन्नासन्नस्तावत् प्रभावमधिचिकीर्षवो बहु प्रतिशृण्वन्ति, परं लब्धप्रभावास्त एव सर्वां प्राक्तन-प्रतिश्रुतिं विस्मरन्तः परिखेदयन्ति सम्मतिकारिणो मुग्धान्। तदस्मिन्नति-मात्रगौरवे वस्तुनि तद्विपर्य्ययेण जगतो विलक्षणं हितं कामयामहे।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10 (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A, Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudaśa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

....The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin.... *Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950 p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd. 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV. November 1951

No. 7. १८७३-शकीये

३४श-वर्षस्य कार्त्तिके

७म संख्या मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६).
Foreign price 1

## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामवाजार

कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXIV. | १८७३-शकीये कार्त्तिके | November |
| --- | --- | --- |
| No. 7. | ३४श-वर्षस्य ७म-संख्या | 1951. |

## श्रीश्रीशक्तिमङ्गलम्

कदाचित् कृष्णाङ्गी शवशिवहृदि न्यस्तचरणा
करालास्या दैत्यार्दनविधिपरा स्मेरनयना ।
करे वामे खड्गं रुधिरधरमुण्डञ्च दधती
वराभीती दक्षे वितरतु महाशक्तिरभयम् ॥

शिवाभिर्घोराभिः पितृवनधरण्यां परिवृता
जपाद्यैः सन्तुष्टा सकलपुरुषार्थप्रसविनी ।
महामोहध्वान्तक्षपणनिपुणा दीप्तकरुणा
महाशक्तिः काचिद्वितरतु महाशक्तिमनिशम् ॥

पदप्रान्तालम्बिप्रचितचिकुरा घोरदशना
स्वनैर्भीमैर्भीमा दितिजरुधिरास्वादनरता ।
चतुर्बाहुः श्यामा कलिकलुषहन्त्री स्तुतिमतां
महाशक्तिः काचिज्जयति सदया भक्तिवशगा ॥

कदाचित् सिंहस्था नवतपनरक्तोज्ज्वलतनुः
करे वामे शङ्खं धनुरपि दधाना स्मितमुखी ।
तथा दक्षे चक्रं शरमितशरान् रक्तवसना
जगद्धात्री धात्री निखिलजगतामस्तु शुभदा ॥

कदाचित् सैवाद्या दितिजगणविद्रावणकृते
वहन्ती कौमारं वपुरभयदं सर्वजगताम् ।
सुतप्तस्वर्णाभा शिखिपरिगता कार्मुकधरा
धराक्षेमं शक्तिर्जयति विदधाना करुणया ॥

यदीयं माहात्म्यं हरिहरविरिञ्चिप्रभृतयो
न वेदास्तन्त्रं वा किमपि किल जानन्ति विशदम् ।
समग्रं विश्वं या विशति कलया शक्तिवपुषा
महाशक्तिः सेयं वितरतु महाशक्तिमनिशम् ॥

तदीयार्चाचर्चा सफलपदवीमेतु नियतं
जपस्तन्मन्त्राणां वहतु शिवराशिं तनुभृताम् ।
सदा पादे तस्या विलसतु नृणां भक्तिरनघा
निराकाराप्येषा जयति दधती मूर्त्तिमतुलाम् ॥

कृपादीपेनास्या दुरिततिमिरं यातु विलयं
महादुःखं सख्यं परिहरतु सर्वत्र तरसा
नृणामन्नं भूयाद् वसतिरपि भावश्च सुकृते
लसद्बाष्पं नेत्रं व्रजतु मरुसादृश्यमभितः ॥

# मतिमञ्जरी

उपनिषन्नाम वेदान्तः। वेदस्यान्तइत्यर्थो हि वेदान्तशब्दः। वेदेनाम्नायेते कर्म च ब्रह्मविद्या च। वेदविहितकर्मानुष्ठानमादितः समुच्छिनत्ति चित्तमलम्। तत एव तदुदीरितब्रह्मविद्याधिकारः। सा चैषा ब्रह्मविद्या साक्षादेव विधत्ते परमपुरुषार्थम्। कर्म पुनः प्रथममनुष्ठितं परम्परया। मुख्यतया ब्रह्मविद्यैवोपनिषदर्थः। ततः सेयमभ्युक्त-क्रमविचारेण चरमासाद्यब्रह्मविद्योपदेशकतया वेदान्तः। परमेषा न

केवलमुपदिशति ब्रह्मविद्यां सन्न्याससाध्यां, दिशति सा गृहस्थोचितानपि लौकिकानर्थान्, यतः कल्याणकलापसम्पत्तिर्गृहस्थानाम्। यथोक्तं तैत्तिरीयोपनिषदि—'वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति,—सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि। यान्यस्माकं सुचरितानि, तानि त्वयोपास्यानि, नो इतराणि। ये के चास्मच्छ्रेयांसो ब्राह्मणाः, तेषां त्वयासनेन प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धया अदेयम्। श्रिया देयम्। ह्रिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः सम्मर्शिनः, युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्त्तेरन् तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन, तथा तेषु वर्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्। इति। एवमन्यत्रान्यत्रापि वस्तूनि प्रोक्तरूपाणि नासुलभानि। परत्रेह च शर्मसन्तानमभिविन्दन्ति, ये गार्हस्थ्ये तमुपदेशमनुवर्त्तन्ते, न जातु प्रमादतो विस्मरन्ति। तदुपनिषत् सोपयोगा गृहपतीनामपि क्षेमैषिणां, न केवलं सन्न्यासमुपगतानाम्।

## नवसूक्तिमालिका

विपत्तिमासाद्य न जातु धीरा
विषण्णभावं समुपाश्रयन्ते ।
विभाकरः प्रत्यहमस्तमाप्तो
न किं पुनः स्वं विभवं वृणीते ।
आलस्यदोषं परिहाय दैन्यं
विपत्तिनाशाय कुरुष्व यत्नम् ।
निश्चित्य दैवस्य विरोधिभावं
यत्ने न वैमुख्यमुपैहि धीमन् !
चक्रानुकारेण सदैव दैवं
विवर्त्तमानं कुरुते विपाकम् ।
अतीन्द्रियं तत् फलमात्रगम्यं
फलोदयात् प्राक् प्रमितं कथं स्यात्
दैवानुकूलं पुरुषप्रयत्नं
विना न दैवस्य फलोपलम्भः ।
निर्मन्थनाभ्यासमृते हुताशो
नैवारणेर्विन्दति सम्प्रकाशम् ।

---

## लिङ्गार्चनतत्त्वम्

[ निबन्धकः—श्रीदुर्गाप्रसन्नविद्याभूषणः

वामाङ्के गिरिजा गले च गरलं भाले शिशुश्च
गङ्गा मूर्द्धनि शोभते कटितटे शार्दूलचर्माम्बर
सर्वाङ्गे धवला विभूतिरमलो यस्योरसि व्या
सोऽयं चित्रविभूषणो विजयते श्रीशङ्करः शङ्क

एतत्तु सर्वेषामेव सुविदितं यद् वेदानन्तरमेव प्राचीनता महर्षि-वाल्मीकिविरचितस्य रामायणस्येति। तत्र रामायणेऽपि उत्तराकाण्डे षट्त्रिंशतमाध्याये दृश्यते रावणकृतशिवलिङ्गार्चनम्। यथा—

यत्र यत्र च याति स्म रावणो राक्षसाधिपः।
जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥४२॥
वालुकावेदिकामध्ये तल्लिङ्गं स्थाप्य रावणः।
अर्चयामास गन्धैश्च पुष्पैश्चामृतगन्धिभिः ॥४३॥
ततः स तं मूर्त्तिधरं वरं हरं वरप्रदं चन्द्रकिरीटभूषणम्।
समर्चयित्वा च निशाचरो जगौ प्रसार्य हस्तान
प्रननर्त्त चाग्रतः ॥४४॥

श्रूयते च प्राचीनं 'महेञ्जो दारो' इत्यभिधानेऽपि स्थाने विद्यते प्रतिष्ठितं शिवलिङ्गम्। अतो न जाने कियतः कालादारभ्य प्रचलति लिङ्गार्चनं भारतस्य। दृश्यते च प्रायेण प्रतिगृहं प्रतिष्ठितं लिङ्गं तदर्चनञ्च। दृश्यते च यत्र नास्ते प्रतिष्ठितं लिङ्गं तत्रापि पार्थिवलिङ्गं वा बाण-लिङ्गं वा यजमानैः पूज्यमानम्।

भारतीयाः खल्वपास्य शिवमूर्त्तिप्रतिष्ठामपहाय च मूर्त्तिपूजनं कथं प्रतिष्ठापयन्ति लिङ्गमर्चयन्ति वा तदिति नाकिञ्चित्करा जिज्ञासा-विषयः। विरला एव जिज्ञासवोऽनुसन्धित्सवा वेति परं दुःखाकरम-स्माकम्। प्रायश एव चिराचरितप्रथामनुवर्तमाना उदासीना इव समुपासते देवदेवम्।

केचन वा कदाचिदस्मिन् लिङ्गार्चनविधौ कारणमनुसन्दधाना अस्मादृशस्यापर्यालोचितशास्त्रतात्पर्यस्यापि भट्टाचार्यस्य सविधे समुत्था-पयन्ति प्रश्नम्।

तेषामेवावबोधार्थं शास्त्रज्ञानविरहितस्यापि मे लिङ्गार्चनविषयिणी लिपिर्नतु वैदुष्यप्रकटनायेति विदाङ्कुर्वन्तु मान्याः पण्डितमूर्द्धन्याः। क्षन्त-व्याश्च मे लिपिदोषा विद्वद्भिरिति मे मूर्ध्नि कृतो विनयाञ्जलिः।

नवास्मिन् प्रबन्धे स्वकपोलकल्पितं किमपि मया लिख्यते यथामति दृश्यते च शास्त्रप्रमाणादिकम् इत्यपि विदांकुर्वन्तु पाठकमहोदयाः।

यच्च पूर्वमभिहितं शिवमूर्त्तिपूजनमपहाय कथं लिङ्गार्चनमाचरन्ति भारतीया इत्यत्र केचिद् विचक्षणाः—

लिङ्गशब्देन शिवमूर्त्तिरेवाभिधीयते। तथाच मेदिनी—

"लिङ्गं चिह्नेऽनुमाने च सांख्योक्तप्रकृतावपि।

शिवमूर्त्तिविशेषे च मेहनेऽपि नपुंसक"मिति।

अतो लिङ्गार्चनेन शिवमूर्त्तिसमर्चनमेव भवतीति नास्ति कश्चिदाक्षेपविषयः। इत्याचक्षते। केचिद् वा—

"शिवशक्त्योश्च चिह्नस्य मेलनं लिङ्गमुच्यते।"

"तल्लिङ्गसंज्ञितं साक्षात्तेजो माहेश्वरं परम्।

तदेव मूलप्रकृतिर्माया च गगनात्मिका॥"

इत्यादिशास्त्रमुद्घाटयन्तो लिङ्गार्चनेन महेश्वरपूजनमेव भवतीति समर्थयन्ति लिङ्गार्चनम्।

अपरे च विद्वांसः—

"आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका।

आलयः सर्वदेवानां लयनाल्लिङ्गमुच्यते॥"

इत्येतत् पाद्मवचनमुररीकृत्य लिङ्गार्चनप्रश्नस्य समाधानं विदधते।

तेषामयमभिप्रायः—एतत्तु सर्वेषामेव सुविदितं यत् सन्ति खलु शिवस्य मूर्त्तिभेदा अष्टौ, तदष्टमूर्त्तिमध्ये आकाशमेका मूर्त्तिः, तदाकाशमेव लिङ्गम्। अपरा च मूर्त्तिः पृथिवी, सा तस्य लिङ्गस्य पीठिका वेदिकेत्यर्थान्तरं भवति, इत्यर्थः। तच्चाकाशाभिधानं लिङ्गं सर्वदेवानामालयो भवति। अस्मिंश्चाकाशाभिधाने लिङ्गे सर्वेषामेव लयनाल्लिङ्गमित्युच्यते इत्यर्थः।

श्रुतिसम्मतञ्चैतत् पाद्मवचनम्—तथाच "अक्षरे परमे व्योमन्यस्मिन् देवा अधिविश्वे निषेदुः" इति श्रुत्या यद् देवानां विश्वेषाञ्च

आलयस्थानमभिहितं तदेव व्याहरति पाद्मवचनम् आलयः सर्वदेवाना-मित्युक्त्या ।

"लयनाल्लिङ्गमुच्यते" इति पाद्मवचनांशेन यल्लयस्थानमभिहितं तदपि छान्दोग्यश्रुतिसमर्थितम् ।

तथाच छान्दोग्यश्रुति :—

सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यान्ति, आकाशो ह्येवैतेभ्यो ज्यायान् आकाशः परायणम् । इति । कं ब्रह्म खं ब्रह्मेत्यादि श्रुतिभिश्च तदेव समर्थितम् । अतो लिङ्गार्चनेन परमात्मनः परमेश्वरस्यैव समर्चनं भवतीति प्राप्तम् ।

शिवस्य स्पष्टपरमेश्वरत्वप्रतिपादिकाश्च श्रुतयः ।

यत् परं ब्रह्म स एको य एकः स रुद्रो

यो रुद्रः स ईशानः, य ईशानः स भगवान परमेश्वरः इति ।

(अथर्वशिरः ।३। )

एको हि रुद्रो न द्वितीयाय तस्थे य इमान लोकान ईशते ईशनीभिः ।

(श्वेताश्वतर —३ अः २म

(अथर्वशिर—५म मन्त्रश्च)

एतस्मिन्नाकाशे स्त्रियमाजगाम बहु शोभमानामुमां हैमवतीमिति केन-श्रुत्या च आकाशवाच्यत्वं शिवस्यैव भवतीति प्रतिपादितम् ।

भवतु वा परमेश्वरत्वं शिवस्यान्यस्य वा नास्ति तत्रास्माकं कोऽपि विसंवादविषयः, सर्वमतस्यैव श्रुतिसम्मतत्वात् ।

परमेश्वरस्तु एकोऽद्वितीयः, केवलं गुणभेदेन साधकाभिलाषतारतम्येन वा नानारूपधरः ।

तथा च श्रुतिः—"तं यथा यथोपासते तथैव भवती"ति

"तस्मै स आत्मा वृणुते तनुं स्वामिति च ।

स्मृतिश्च—"निर्गुणस्याप्रमेयस्य नीरूपस्य परात्मनः ।

साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ।।" इति ।

परमपूज्यपादशङ्कराचार्यविरचितशारीरकभाष्येऽपि "स्यात् परमेश्वरस्यापि इच्छावशान्मायामयं रूपं साधकानुग्रहार्थ"मिति ( ब्रह्मसूत्रे १ अ०, १ पा०, २० सू० )

अथ पुनर्योन्याकृतिवेदीयुक्तं शिवलिङ्गं निर्माय यत्प्रतिष्ठीयते पूज्यते च तत् किमर्थमिति चेत् साधु पृष्टं, श्रूयतां शिवशक्त्योरभिन्नता ज्ञापनार्थं तथा शिवशक्तिभ्यामेव यावज् जगज्जीवजातोत्पत्तिज्ञापनार्थं योन्याकृतिवेदिकायुक्तं लिङ्गं निर्माय प्रतिष्ठीयते परिपूज्यते च यजमानैः। शक्तेर्जगद्योनित्वदर्शनार्थञ्च वेदिकायां योन्याकृतिनिर्मितिः।

तथाच ब्रह्मसंहितायां—

शक्तिमान् पुरुषः सोऽयं लिङ्गरूपी महेश्वरः। (ब्रह्मसं १० श्लो०)।

तल्लिङ्गं भगवाञ्छम्भुर्ज्योतीरूपः सनातनः।

या योनिः सा परा शक्तिरिति (ब्रह्मसंहिता ८म श्लोक०)। लिङ्गयोन्यात्मिका जाता माहेश्वर्य्य इमा प्रजाः। (ब्रह्मसं ६ श्लो०)।

एतदुक्तं तन्त्रान्तरेऽपि—

न चक्राङ्का न पद्माङ्का न गदाङ्का वरानने।
लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा" "

निर्वाणतन्त्रीयतृतीयपटलेऽपि—

यो लिङ्गं परमेशानि स रुद्रः परमेश्वरः।
कुण्डली वेष्टनी तस्य सा देवी परमेश्वरी॥

लिङ्गपुराणे सप्तदशाध्यायेऽपि—

लिङ्गवेदी महादेवी लिङ्गं साक्षान्महेश्वरः।
लयनाल्लिङ्गमित्युक्तं तत्रैव निखिलं सुराः॥

अतएव वेदिकायुक्तं लिङ्गं निर्माय प्रतिष्ठीयते परिपूज्यते च साधकैः।

अथ शिवशक्त्योरभिन्नता-ज्ञापनार्थमिति यत् प्रागुदीरितं तत्र किं मानमिति चेत् तत्रेदमुच्यते—

शिवशक्त्योरभिन्नताज्ञापकानि शास्त्राण्यनन्तानि । दिङ्मात्रं दृश्यते यथा—

उमासहायं परमेश्वरं विभुं त्रिलोचनं नीलकण्ठं प्रशान्तमित्याद्याः श्रुतयः शक्तियुक्तत्वज्ञापिका ईश्वरस्य ।

तथाभिनवगुप्तकृतबोधपञ्चाशिकायां शक्तिशक्तिमनोरभिन्नताज्ञापिकोक्तिः स्पष्टैव दृश्यते । यथा—

शक्तिस्तु शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति ।
तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव ॥

पूज्यपादशङ्कराचार्य्यकृतसौन्दर्यलहर्य्यामपि 'शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं, नचेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।

इममेवार्थं निर्द्दिशति निर्वाणतन्त्रमपि—

ईश्वरः सर्वकर्त्ता च निर्गुणस्यालयः शिवः ।
भुवनेशीं विना देवि स्पन्दितुं नैव शक्यते ॥ इति ।

वामकेश्वरतन्त्रे च—

परो हि शक्तिरहितः शक्तः कर्त्तुं न किञ्चन ।
शक्तस्तु परमेशानि शक्त्या युक्तो यदा भवेत् ।
शक्त्या विना शिवे सूक्ष्मे नामधाम न विद्यते ॥ इति ।

ब्रह्मसूत्रस्य शाङ्करभाष्येऽपि—

सा च अवश्यमभ्युपगन्तव्या, अर्थवती हि सा, नहि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः इति (ब्रह्मसू, १ अ०, ४ पा०, ३ सू०) ।

लिङ्गार्च्चनतन्त्रेऽपि—

शक्तिं विना महेशानि प्रेतत्वं तस्य निश्चितम् ।
शक्तिसंयोगमात्रेण कर्मकर्त्ता सदाशिवः ॥ इति ।

तन्त्रान्तरे च—

न शिवेन विना शक्तिर्न शक्त्या रहितः शिवः।
शिवशक्त्योः सदाऽभेदश्चन्द्रचन्द्रिकयोरिव ॥

कौर्मे च—या सा माहेश्वरी शक्तिर्ज्ञानरूपातिलालसा।
व्योमसंज्ञा कलाकाष्ठा सेयं हैमवती मता ॥
शिवा सर्वगतानन्ता गुणातीतातिनिष्कला।
एकानेकविभागस्था ज्ञानगम्यातिनिर्मला ॥
अनन्या निष्कले तत्त्वे संस्थिता तस्य तेजसा।
स्वाभाविकी च तन्मूला प्रभा भानोरिवामला।
एका माहेश्वरी शक्तिरनेकोपाधियोगतः।
परावरेण रूपेण क्रीड़ते तस्य सन्निधौ ॥
सेयं करोति सकलं तस्याः कार्यमिदं जगत्।
न कार्यं नापि करणमीश्वरस्येति सूरयः ॥

श्रुतिरपि कौर्मोक्तिमेतां समर्थयति,

'न तस्य कार्यं करणञ्च विद्यते' इत्यादिना।

न चोद्यं यदि शिवशक्त्योरभेदस्तत कथं शिवः शक्तिश्चेति पृथङ् निर्द्देशः? यतो दहनस्य दाहिकाशक्तेश्चाभेदेऽपि दहनो दाहिकाशक्तिश्चेति यथा भेदनिर्द्देशः, यथा वा राहोस्तत्शिरसश्चाभेदेऽपि राहोः शिर इति भेद-विवक्षा तथा शिवशक्त्योरभेदेऽपि शिवः शक्तिश्चेति भेदविवक्षया पृथङ् निर्द्देशः। वस्तुतस्त्वभेदः, अत एवोक्तं कौर्मे "अनन्या निष्कले तत्त्वे संस्थिते"त्यादि।

अथ कूर्मवचने "न कार्यं नैव करणमीश्वरस्येति सूरयः" तथा श्रुतावपि 'न तस्य कार्यं करणञ्च विद्यते' इत्युक्तं तत् कथमुपपद्यते जगत्-कारणतेश्वरस्य इति चेन्मास्मैवं भ्राम्यः, यतः स्वभावतः परमेश्वरस्य निष्क्रियत्वेऽपि यदि नाम तस्मिन् सृष्ट्यादि कार्यमारोप्येत तह्येव तस्य निष्क्रियत्वादिकं व्याहन्येत।

अथ यदि परमेश्वरे यस्य धर्मस्य स्थित्या सम्पद्यते सृष्ट्यादिकार्यं तमेव धर्मं शक्तित्वेनाभिदध्यास्तर्हि स्यान्निष्क्रियत्वादिकमव्याहतमेव।

ननु शक्तिस्तु शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छतीत्युक्तेः शक्तिशक्तिमतोस्तुल्यरूपतापातस्तत् कथं सेयं करोति सकलं तस्याः कार्यमिदं जगदिति कौर्मोक्तिः सङ्गच्छते, कथं वोपपद्यते सृष्ट्यादिकमिति चेत् तत्रेदं वाच्यम्—

यद्यपि शक्तिशक्तिमतोस्तुल्यरूपता तथापि शक्तिमत्तामात्रेणैव सम्भवन्ति सृष्ट्यादिकार्याणि। यथायस्कान्तमणेर्विद्यते लोहाकर्षणी शक्तिः, सा नास्माकं प्रत्यक्षसिद्धा, किन्तु लोहाकर्षणकाले तत्पूर्वकाले वा अपरिलक्षितायामपि मणेर्मणिशक्तेर्वा कस्याञ्चित् क्रियायां दृश्यते मणिसन्निहितलोहस्य मण्यभिमुखी प्रवृत्तिः।

अत्र मणेराकर्षणशक्तिरनुमातव्या, लोहस्याग्रे सरणक्रिया तु प्रत्यक्षसिद्धा।

इदन्त्ववश्यमेवाङ्गीकार्यं यन्मणावाकर्षणशक्तेः सत्तैव लोहाग्रसरणक्रियायाः कारणमिति।

परन्तु अपरिलक्षितायामपि कस्याञ्चित् क्रियायामयस्कान्ते तत्र लोहाकर्षणशक्तेरवस्थित्यैव यथा दृश्यते लोहस्याग्रे सरणक्रिया, तथा अदृष्टाव्यक्तापूर्वशक्तिसम्पन्नस्य परमेश्वरस्य अदृष्टाव्यक्तपूर्वसत्तामात्रेणैव सन्निहिते जीवानामनादिसञ्चितकर्मणां भोगकाले, सम्पद्यते यथायथं सृष्ट्यादि कार्यम्।

यथायस्कान्तसान्निध्याद् भवति निष्क्रियलोहस्याग्रे सरणक्रिया तथा शक्तिसान्निध्यादेव भवति निष्क्रियपरमेश्वरस्य सृष्ट्यादिकार्यमिति सर्वमविरुद्धम्।

कार्यदर्शनादेव सत्तानुमातव्या शक्तेः, शक्तिसत्तामात्रेणैव परमेश्वरस्य जगत्कर्तृत्वम्। (क्रमशः)

# वृत्तवर्त्तिका

प्रियाः पारिषदाः! संस्कृतविद्याया दुरितोपनतमेकं दुःखवृत्तं निवेद्यते। वङ्गीयसंस्कृतज्ञबुधसमाजे सुविश्रुतः पण्डितप्रवरः श्रीरामचन्द्र-शास्त्री नाम परलोकं प्रति प्रस्थितः। शास्त्रिमहोदयेन प्रतिष्ठापिता संस्कृतविद्यायास्तथा सनातनधर्मस्य समुन्नतिविधायिनी 'सनातनधर्मरक्षिणी' नाम सभा न केषां प्राच्यसंस्कृतिप्रियाणां सुविदिता। सैषा सभा प्रथमे वयसि सनातनधर्मप्रचारमुद्दिशन्ती प्रावर्त्तत। कियतः कालात् परञ्च सा संस्कृतविद्योन्नतिसाधनाय गृहीतव्रता तदुचितानेकविधानुपायानाश्रित-वती। येषु संस्कृतविद्यार्थिनां प्रतिवर्षं परीक्षाग्रहणं, प्राचीनप्रसिद्ध-ग्रन्थनिबद्धपद्यादीनां मिथो विजिगीषया पाठव्यवस्थापनं, विजयिनामर्था-दिना सम्माननादिकञ्च विशेषतः समुल्लेखमर्हन्ति। किञ्च महामाया-मन्दिरसन्निहिते कालीघट्टनगरैकदेशे 'जातीयसंस्कृतमहाविद्यालया'ख्यया कस्यचित् संस्कृतमहाविद्यालयस्य स्थापनाय प्रयत्नपराणां तेषां शास्त्रि-महोदयानां सुमहता प्रयत्नेन कलिकातापौरसभया तेभ्यो नात्यल्पपरिमाणा भूमिः प्रदत्ता। तत्र भवननिर्माणेन महाविद्यालयप्रतिष्ठापनात् प्रागेव शास्त्रिमहोदयाः परलोकं गता इति महद् दुःखं संस्कृतविद्याप्रियाणाम्। अद्य वयं शास्त्रिमहोदयानां सौजन्यं विद्यां धर्मनिष्ठां संस्कृतविद्योन्नति-साधनप्रियतां व्याख्यानदक्षतां महान्तं कर्मोत्साहञ्च संस्मरन्तस्तत्सदृश-मन्यमसुलभं मन्यमानाः सुतरां खिद्यामहे। आशास्महे च

येनास्य पितरो याता येन याताः पितामहाः।

तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति। इति प्राचीनवचन-प्रामाण्येन तदीयाः पुत्रादयस्तदीयमेव कर्मपथमनुसरन्तः संस्कृतविद्यायाः सनातनधर्मस्य च सुमहदुपकुर्युः। अन्ते वयं प्रार्थयामहे परलोकप्रस्थिताः शास्त्रिणः परलोके शाश्वतीं शान्तिमनुभवन्तु, तदीयावशिष्टकृत्यनिष्पादनो-चितशक्तिसम्बलनाय पुत्रादीनाशिषा वर्द्धयन्तु, शमञ्च लभतां तत्परि-जनानां गभीरशोकप्रभवो बाष्पप्रवाहः। इति।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish cha ndra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

... The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV. No. 8.
३४श-वर्षस्य ८म संख्या

December 1951
१८७३-शकीये अग्रहायणे मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)।
Foreign price -1

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्यत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामवाजार
कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIV. No. 8. | १८७३-शकीये अग्रहायणे ३४श-वर्षस्य ८म-संख्या | December 1951.


## श्रीश्रीलक्ष्मीमङ्गलम्

अलिनिलयदिनेशे क्षेमहेमन्तमासे
धरणिरमितशस्या क्षेमपूर्णा यया स्यात् ।
श्रितकमलनिवासा विश्ववन्द्यप्रकाशा
मुरहरदयिता सा स्तूयते शुभ्रहासा ॥

यदनुगमविहीना व्यर्थतामेति विद्या
जनतनुरनवद्या बुद्धिरुत्कर्षसिद्धा ।
जनगणतनुरक्षा यां विना वीतपक्षा
मुरहरदयिता सा वर्द्धतां नः स्वभासा ॥

यदुपचयविवृद्धाः शुद्धकीर्त्या समृद्धा
जगति विपुलमानं यान्ति नानानिदानम् ।
उपचितधनधान्या सर्वदेवादिमान्या
मुरहरदयिता सा वर्द्धतां नः स्वभासा ॥

सुरपतिरपि दीनो यत्कृपास्पर्शहीनो
विपुलशुचिविलीनस्तप्यते सौख्यहीनः ।
अभिमतधनधान्यावाप्तये यैव मान्या
मुरहरदयिता सा वर्द्धतां नः स्वभासा ॥

अलिगतरविमासे क्षेत्रवृन्देऽनुवर्षं
जनयति नवशस्यं दृष्टमत्र प्रहर्षम् ।
तदिदमखिलकाम्यं यां विना याति वाम्यं
मुरहरदयिता सा वर्द्धतां नः स्वभासा ॥
श्रयति सुजनगेहं या शुभाचारतुष्टा
परिहरति पवित्राचारहानेन रुष्टा ।
सकलकुशलहेतुः शस्यसौभाग्यसेतुः
सुरनरमहिता सा वर्द्धतां मा स्वभासा ॥
स्थितिरिह भुवि यस्या धान्यशस्ये निरूढ़ा
समुपदिशति शास्त्रं पूजनं तत्र यस्याः ।
सुविपुलधनधान्याधानहेतुः सुमान्या
तदतिरतिविभूत्या वन्द्यतां सानुगत्या ॥
विलसतु करुणास्या भारते भूरिशस्या
प्रतिहतजनदैन्यं वर्द्धतां पुण्यमन्नम् ।
भवतु बलमनल्पं सर्वसंसिद्धितल्पं
जयति कुशलमासः सर्वकल्याणवासः ॥

---

## मतिमञ्जरी

अन्नं वै प्राणाः। तदिदं धान्यादिमूलं वा गोधूमादिमूलं वा। तस्य वयं गौरवं न जानीमः। आसन्नत्र प्राचीनाः सावधानाः। ते हि प्रतिवर्षं नवीनधान्यागममभ्यपूजयन। धान्यतण्डुलादीनामवमानमपचितिं वा नाकुर्वन्। यथाशक्ति तद्वर्द्धनाय प्रयत्नविशेषमन्वतिष्ठन्। पर्य्युषितमपि विपर्यस्तमपि स्थौल्यादिदोषदूषितमपि निष्पन्नमन्नं नैव हेलया पर्यवर्जयन। किं बहुना तण्डुलादिनिधानस्य पात्रस्य रिक्तताया-

मुपनतायां तदिदं शून्यमित्यव्याहरन्नो वर्द्धमानतामेव तदीयां वाचा प्राचीकशन । अन्नस्य गौरवं प्रतिपिपादयिषता प्रोक्तं मनुना,—

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन ।
दृष्ट्वा हृष्येत प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥
पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति ।
अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥

उक्तमादित्यपुराणेऽपि,—अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्या स्तुवन्नमेत् ॥

उपनिषदप्याह,—

अन्नाद्वै प्रजाः प्रजायन्ते याः काश्च पृथिवीं श्रिताः ।
अथो अन्नेनैव जीवन्ति अथैनदपियन्त्यन्ततः ।
अन्नं हि भूतानां ज्येष्ठं तस्मात् सर्वौषधमुच्यते ।
सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते ।
अन्नं हि भूतानां ज्येष्ठं तस्मात् सर्वौषधमुच्यते ।
अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते ।
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते । इति

( तैत्तिरीय—२ अनुवाके )

अन्यत्र च सैव,—

'अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।

अन्नं न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदे-

तदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या। इति

अन्नस्य वर्द्धनमुपदिशन्ती सैवाह,—

'अन्नं बहु कुर्वीत। तद् व्रतम्। पृथिवी वा अन्नम् आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या। इति।

नैतत् केवलमात्मार्थमेव, किन्तु परार्थमपि। तत एवास्य समपेक्षिता भृशं वृद्धिः।' परस्मै तदन्नप्रतिपादने च महदेव हितं सम्पद्यते कर्तुः। तदेतदभ्युक्तमुपनिषदा,—

'न कञ्चन वसतौ प्रत्याचक्षीत। तद् व्रतम्। तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात्। अराध्यस्मा अन्नमित्याचक्षते। एतद् वै मुखतोऽन्नं राद्धम्। मुखतोऽस्मा अन्नं राध्यते। एतद्वै मध्यतोऽन्नं राद्धम्। मध्यतोऽस्मा अन्नं राध्यते। एतद्वा अन्ततोऽन्नं राद्धम्। अन्ततोऽस्मा अन्नं राध्यते'। इति

दृश्यन्ते तावदन्यत्रान्यत्रापि संख्यातीतानि तद्गौरवपिशुनानि प्रवचनानि; येषु तदीयं गौरवं सम्यक्तया समभिव्यक्तं भवति। अद्यतनास्तु मूढ़ास्तदिदं गौरवमजानन्तः प्रतिपदं खिद्यन्ते। न जाने सैषा प्राचीनां तद्गौरवप्रेक्षा कदा पुनरात्मानं लब्ध्वा सर्वस्यास्य जगतो महद्धितं विदध्यात।

## नवसूक्तिमालिका

ईर्ष्यां जहीहि न तया भवितोन्नतिस्ते
दुःखं हि केवलमवाप्स्यसि ताममुञ्चन ।
सर्वेश्वरो न हि भवानत एव लोके
लोकस्त्वदुन्नततरो न कदाप्यलभ्यः ॥

स्वापेक्षया गुणगणैरधिकं प्रपश्यन्
तत्साम्यलाभविषये कुरु सुप्रयत्नम् ।
एवं कृते कियदनन्तरमेव हि त्वं
तत्साम्यतस्तमधिकं नहि वीक्षितासे ॥

ईर्ष्या ददाति हृदि दुःखतमो जनानां
पापे प्रवर्तयति लाघवमादधाति ।
सैषा शरीरमपि शोषयति प्रकामं
तस्मादिमां परिहरन्नव भूरिभव्यम ॥

---

## लिङ्गार्चनतत्त्वम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीदुर्गाप्रसन्नविद्याभूषणः ]

न च विहाय शक्तिं जातु तिष्ठति विविक्तः परमेश्वरः, नो वा परिहाय परमेश्वरं कदाचिच्छक्तिः, अनयोरविनाभावसम्बन्धात । इति सुस्थितं शक्तिशक्तिमतोरनन्यत्वम् ।

ननु भवतु नाम शक्तिशक्तिमतोरनन्यत्वं, शिवस्य लिङ्गमयत्वं कथमिति चेत्—श्रूयतां,—लिङ्गपुराणे सप्तदशाध्याये परमेश्वरस्य लिङ्गमूर्त्या

प्रादुर्भावकथा वर्त्तते। तामेव कथामन्तरान्तरा पुराणश्लोकान उद्धृत्य संक्षेपेण प्रदर्शयामि निजभाषया। यथा—

पुरा खलु भगवति नारायणे सह प्रकृत्या स्वसृष्टानन्तजलधिजलमधिशयाने तन्नाभिकमलादुत्भूते च कमलासने ब्रह्मणि, स जातमात्र एव ब्रह्मा—कोऽहं ? कस्मादागतः ? किं कार्यम् ? केनोत्पादितः, कस्याहमात्मजः ? इत्येवं संशयानो निजकारणकमलस्य कर्णिकायां दले नाले च दीर्घकालं भ्राम्यन् श्रान्तः क्लान्तो विषण्णश्चाभवत, श्रान्तं क्लान्तं विषीदन्तञ्च तं विज्ञाय भगवान विष्णुस्तमब्रवीत, भोस्त्वं प्रकृत्या समुत्पादितोऽसि।

निशम्यैतद् विष्णुवचनं स ब्रह्मा,—ब्रूहि कस्त्वं ? कस्ते जनकः ? इति व्याहृत्य विष्णुं कराभ्यामुद्धृत्य प्रहर्त्तुमारेभे।

तथा प्रहृतश्च तेन, पुनरप्याह भगवाननन्तजलधिजलमधिशयानो नारायणः, भोस्त्वं खलु जनितोऽसि प्रकृत्या। अहन्तु प्रवर्त्तकः प्रकृत्याः, सर्ववित् सर्वकर्त्ता जगदीश्वरोऽस्मीति तद्वचनमाकर्ण्य ब्रह्माप्याह, किमात्थ ? जगदीश्वरस्त्वम् ? अहो अहमेवास्मि जगदीश्वरः स्वयम्भूः, इत्थमारब्धोऽनयोः परस्परं विवादः, क्रमेण च स रूपान्तरपरिणतो बभूव।

एतस्मिन्नन्तरे तयोर्विवादशमनार्थं प्रबोधार्थञ्च ब्रह्मविष्ण्वोः पुरस्तेजोमयं लिङ्गमेकं प्रादुरभवत्। तथाच पुराणश्लोकाः—

एतस्मिन्नन्तरे लिङ्गं प्रादुर्भूतं तयोः पुरः।
विवादशमनार्थञ्च प्रबोधार्थं हि भास्वरम्॥
ज्वालामालासहस्राढ्यं कालानलशतोपमम्।
क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्ज्जितम्॥
अनौपम्यमनिर्द्देश्यमव्यक्तं विश्वसम्भवम्।
तस्य ज्वालासहस्रेण मोहितो भगवान् हरिः॥
मोहितं वेधसं प्राह किमर्थं स्पर्द्धसे मुधा।
आगतोऽत्र तृतीयोऽपि तिष्ठतां युद्धमावयोः॥

कुत एवात्र सम्भूतं परीक्षा वोऽग्निसम्भवम् ।
अधो गमिष्याम्यनलस्तम्भस्यानुपमस्य च ॥
भवानूर्द्ध्वं प्रयत्नेन गन्तुमर्हति सत्वरम् ।
हंसरूपं त्वया धार्यं वाराहञ्च मया पुनः ॥

इत्युक्त्वा विष्णुर्वराहरूपं ब्रह्मा च हंसरूपमास्थाय यथोक्तं कृतवन्तौ, किन्तु वर्षसहस्रं यतमानोऽपि विष्णुस्तस्य मूलं नासादयत, ब्रह्मापि तावत्-कालमेव तदन्तान्वेषणाय ऊर्द्ध्वमन्विष्यन नालोकयदन्तम् । ततः शम्भु-मायामोहितौ तौ श्रान्तौ परं निर्वेदमापन्नौ तस्मिन लिङ्गे ॐम् ॐम् इति नादमाकर्ण्य किमिति द्रष्टुमुत्सुकौ शब्दस्थले शुद्धस्फटिकसङ्काशं शिवमालोक्य तं तुष्टुवतुः । तयोः स्तवेन प्रीतो भगवान महेश्वरस्तस्मिन् लिङ्गे स्वरूपमास्थाय प्रहसन्नब्रवीत,—हे विष्णो, त्वं मे वामाङ्गात् सम्भूतो-ऽसि मन्मायामोहितस्तद्वृत्तं विस्मृतवानसि। भो ब्रह्मन, त्वमपि मे दक्षिणादङ्गात समुद्भूतः किन्तु तद्वृत्तं विस्मृतवानसि मन्मायया ।

त्यज्यतामुभाभ्यामेव युवाभ्यां मोहजनितोऽयं विरोधः। अन्यच्च—

प्रलयस्थितिसर्गाणां कर्त्ता त्वं धरणीपते ।
वत्स वत्स ! हरे ! विश्वं पालयैतच्चराचरम् ॥
त्रिधा भिन्नोऽह्यहं विष्णो ब्रह्मविष्णुशिवाख्यया ।
सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः ॥
सम्मोहं त्यज भो विष्णो पालयैनं पितामहम् ।
पाद्मे भविष्यति सुतः कल्पे तव पितामहः ॥
तदा द्रक्ष्यसि माञ्चैव सोऽपि द्रक्ष्यति पद्मजः ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥
तदा प्रभृति लोकेषु लिङ्गार्चा सुप्रतिष्ठिता।
लिङ्गवेदी महादेवी लिङ्गं साक्षान्महेश्वरः ।
लयनाल्लिङ्गमित्युक्तं तत्रैव निखिलं सुराः ॥ इति ।

अत एव लिङ्गमयत्वमीश्वरस्येति वेदितव्यं जिज्ञासुभिः ।

शिवपुराणीयद्वितीयाध्यायेऽपि लिङ्गोत्पत्तिकथा लिङ्गपुराणानुरूपैव। केवलं लिङ्गपूजनविषये यस्तावद् विशेषः स एव दर्श्यते। तथाच शिवपुराणे शिववाक्यम्—

"इत्येतद् वचनं श्रुत्वा प्रसन्नो भगवान् हरः।
उवाच हरये तत्र शृणुष्वावहितो हरे।
इदं लिङ्गं सदा पूज्यं ध्यानञ्चैतादृशं मम।
इदानीं दृश्यते यद्वत्तथा कार्यं त्वया सदा।
पूजितो लिङ्गरूपेऽस्मिन् प्रसन्नो विविधं फलम्।
दास्यामि सर्वलोकेभ्यो मनोऽभीष्टान्यनेकशः॥ इति।

यत्तु केनचिदुक्तं शिवमूर्त्तिपूजनमपहाय कथं शिवलिङ्गपूजनमिति, तत्रेदमुच्यते—

'इदं लिङ्गं सदा पूज्यमि'त्यादिशिवपुराणीयशिववचनेन वीरमित्रोदयधृतस्कन्दपुराणीयशिववाक्येन च शिवलिङ्ग एव शिवपूजा कर्त्तव्या न, तु प्रतिमायाम्। तथाच वीरमित्रोदयधृतस्कन्दपुराणीयशिववाक्यम्—

न तुष्याम्यर्च्चितोऽर्च्चायां पुष्पधूपनिवेदनैः।
लिङ्गेऽर्च्चिते तथात्यर्थं परं तुष्यामि पार्वति॥ इति।

अर्च्चायां प्रतिमायामित्यर्थः। प्रतिमायां शिवपूजने न खलु तुष्यति भगवान् सदाशिवः। लिङ्गे पूजने तु तस्य परमपरितोष इति तु वचनार्थः।

शिवपुराणे च—

"पूजितो लिङ्गरूपेऽस्मिन् प्रसन्नो विविधं फलम्।
दास्यामि सर्वलोकेभ्यो मनोऽभीष्टान्यनेकशः॥"

इति शिववाक्यमनुसरन्त एव भारतीया लिङ्गं प्रतिष्ठापयन्ति समर्च्चयन्ति चेति विदितमस्तु जिज्ञासुमहोदयानाम्।

अतएव लिङ्गप्रतिष्ठा लिङ्गपूजनञ्च प्रचलति भारते वर्षे साधकानामद्यापि।

लिङ्गार्चनतन्त्रे लिङ्गपूजाया अकरणे दोषश्रुतिरपि दृश्यते। यथा—

विना लिङ्गार्चनं यस्य कालो गच्छति नित्यशः।
महाहानिर्भवेत्तस्य दुर्गतिश्च दुरात्मनः॥

अस्माच्च दोषश्रवणात् लिङ्गे एव पूज्यते शिवः। प्रशंसा च दृश्यते लिङ्गार्चनस्य तत्रैव—

एकतः सर्वदानानि व्रतानि विविधानि च।
तीर्थानि नियमा यज्ञा लिङ्गाराधनमेकतः॥
न लिङ्गाराधनादन्यत् पुरा वेदे चतुर्ष्वपि।
विद्यते सर्वशास्त्राणामेष एव सुनिश्चितः॥
भुक्तिमुक्तिप्रदं लिङ्गं विविधापन्निवारणम्।
पूजयित्वा नरो नित्यं शिवसायुज्यमाप्नुयात्॥
सर्वमन्यत् परित्यज्य क्रियाजालमशेषतः।
भक्त्या परमया विद्वाँल्लिङ्गमेकं प्रपूजयेत्॥
अनेकजन्मसाहस्रं भ्राम्यमाणश्च योनिषु।
कः समाप्नोति वै मुक्तिं विना लिङ्गार्चनं नरः॥ इति।

नच लिङ्गार्चनेऽस्ति शाक्तवैष्णवादीनां कश्चिद् भेदः, सर्वेषामेवावश्यकर्त्तव्यत्वाल्लिङ्गार्चनस्य। तथा च तत्रैव लिङ्गार्चनतन्त्रे—

शाक्तो वा वैष्णवो वापि शैवो वा परमेश्वरि।
आदौ लिङ्गं समभ्यर्च्य बिल्वपत्रैर्वरानने।
पश्चादन्यं महेशानि शिवं प्रार्थ्य प्रपूजयेत्॥

एतल्लिङ्गार्चनवचनानुगतमेव दृश्यतेऽद्यापि वैष्णवानामपि स्वेष्टदेवपूजनात् पूर्वं लिङ्गार्चनम्।

अथ कस्यां तिथौ श्रीभगवान् सदाशिवो लिङ्गरूपेणाविरासीदित्यत्र किमस्ति किमपि प्रमाणमिति चेदोमिति ब्रूमः।

अस्ति खल्वीशानसंहितायां श्रीशिवलिङ्गप्रादुर्भावकालनिर्देशः। तथाच

माघे कृष्णचतुर्द्दश्यामादिदेवो महानिशि ।
शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ॥

अतएव भगवतः श्रीकृष्णस्य प्रादुर्भावदिवसे जन्माष्टमीव्रतमिव श्रीशिवस्यापि लिङ्गरूपतया प्रादुर्भावदिवसे चान्द्रमाघकृष्णचतुर्द्दश्यां श्रीश्रीशिवरात्रिव्रतम् ।

अनुष्ठीयते च व्रतमेतन्निर्व्विशेषं सर्व्वसम्प्रदायैः । ननु शिवलिङ्गस्य या योन्याकृतिर्वेदिका सा कथमुत्तरस्यां वर्त्तते ? बाणलिङ्गादीनामपि पृथङ्निर्मिता वेदिका कथमुत्तरस्यां स्थाप्यते ? सत्यं

रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि ।
शिवार्च्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ॥

इति गौतमवचनादुदङ्मुखो यजमानः शिवमर्च्चयेत । शिवदक्षिणभागे यजमानः शिवोदग्भागे च वर्त्तते शक्तिः, सा च योन्याकारा वेदिका ।

तथाचाह रुद्रयामले—

'न प्राचीमग्रतः शम्भोर्नोदीचीं शक्तिसंस्थिताम्' । इति ।

'या योनिः सा परा शक्ति'रिति च ब्रह्मसंहितायाम् ।

शिवधर्म्मे च 'लिङ्गवेदी भवेद् देवी'ति ।

लिङ्गपुराणेऽपि 'लिङ्गवेदी महादेवी'ति । अतो 'नोदीचीं शक्तिसंस्थिता'मिति रुद्रयामलोक्तेरुदीच्यामेव स्थाप्यते वेदिका, न तु दक्षिणस्यां यजमानाभिमुखीति । विश्वमातृयोनित्वाद्वेति विदांकुर्वन्तु जिज्ञासुमहोदयाः ।

केचिद् वा लिङ्गार्चनमिदं पाश्चात्यदेशादस्मद्देशे प्रचलितमासीदिति व्याहरन्ति, तन्न समीचीनं पाश्चात्यानामभ्युदयात् प्रागपि रामायणादौ लिङ्गार्चनदर्शनात् । परन्त्वस्मद्देशादेव पाश्चात्ये लिङ्गार्चनप्रथा प्रचलिता समभवदिति वक्तव्यमस्माभिरित्यलं बहुप्रलपितेन प्रबन्धकलेवरवर्द्धनेन वा । इति शम् ।

योऽसावचिन्त्यविभवो भगवान् महेशस्तस्यार्चने कथमहं विवृणोमि तत्त्वम् ।
मूढो विवेकरहितस्तदिहेश्वरो मे वाचालतां बलवतीं कृपया क्षमेत ॥

# वेदान्तानुभूति-कारिका

[निबन्धकः—श्रीकालीकुमारमिश्र-काव्यवेदान्ततीर्थ एन् एः]

अज्ञाना वेदनायावपुरपि सवपुर्जायते मायया यत्
यस्मिंश्चाभासमानौ विषयविषयिणौ चिज्जडौ विश्वरूपौ ।
साकारं यन्न सत्यं भवभयशमनं त्वेकमेवाद्वितीयम्
देवादीनां यदर्च्यं पदमभयमजं चिन्मयं तन्नमामि ॥१॥

सर्वास्थानं भवदपि पदं यत्त्वनाधारमेकं
बह्वप्येकं सगुणमगुणं वा शरीरं शरीरे ।
भावाभावौ गमयति गुणौ यत् सदेकं विरुद्धौ
सत्यत्वेन ध्रुवमिह भवेज्ज्ञानमात्रं तथा तत् ॥२॥

पूर्णं तद्धि स्वयमुदयते नो भवेत् कर्त्तृजन्यम्
यस्माद्भातं निखिलभुवनं तद्धियोन्मेषयेत् कः ।
तद्बोधे वै विमतिजननात् वादिनां दृष्टिभेदात्
साक्षिज्ञानस्फुरितमनु तत् प्रोच्यतेऽतः सुधीभ्यः ॥३॥

चैतन्यं यद्रविरिव समं द्योतते यन्न कर्त्तृ
शुद्धं पूर्णं परमधिकृतश्चोच्यते तद्धि साक्षि ।
तज्ज्ञानं वै बलवदसमं स्यादविरोधेन नोचेद्
युक्त्या तस्मादपरविमतिश्चागमैः खण्डनीया ॥४॥

प्रत्यक्षेण ग्रहणविषयान् केवलं वै प्रमेयान्
ये मन्यन्ते ननु कथमिहाकार एवात्महीनः ।
यः प्रत्यक्षं खलु तदधिकं नेन्द्रियैः संगृहीतम्
सीमाबद्धं सकलकरणं किं स्वरूपं मृषा स्यात् ॥५॥

कार्यद्रव्यं भुवनमखिलं दृश्यरूपेण वेद्यम्
मायासृष्टं किमपि न भवेदिन्द्रियं यत् प्रमाणम् ।
स्थूलज्ञानं ननु मुनिजनाः क्लेशजातं तदाहुः
चित्तारामं कथमपि यतः साधु नाप्नोति जीवः ॥६॥

प्रत्यक्षेण स्फुरति न मतौ कृत्स्नशब्दप्रमाणम्
निर्दिष्टत्वात्तदधिकुरुते नैव विश्वं समग्रम् ।
प्रत्येत्यन्यत्तु तदतिशयं द्रव्यमस्तीति सर्वः
प्रत्यक्षज्ञो विरमतु ततः सत्यतत्त्वानुभूतेः ॥७॥
कार्यं दृष्ट्वानुमितिकुशलाः कर्तृदेवं विदन्ति
विस्मृत्येशं तमपि जटिले ये यतन्ते वितर्के ।
लिङ्गाभावात् परमपुरुषो हेतुभिर्नानुमेयः
तत्त्वं मुक्त्वा वचनरचना निष्फला तार्किकाणाम् ॥८॥

( क्रमशः )

---

# वृत्तवर्त्तिका

श्रीमन्तः पारिषदाः ! वृत्तमिदं महतो दुःखस्य, यदावेद्यते । वङ्गेषु प्रसिद्धायां टाकीनगर्यां कृतवसतयः पण्डितप्रवराः श्रीमदिन्दीवरकृष्ण-विद्याभूषण-भट्टाचार्याः सुदीर्घमायुः समुपभुज्य सुतरां वृद्धे वयसि स्वकर्मार्जितं परलोकं गताः । विद्याभूषणमहोदयाः सुचिरं शास्त्रनिष्ठाः स्वधर्मनिष्ठाश्च पण्डिता आसन् । तेषामसाधारणी कवित्वशक्तिरासीत् । विद्योदयाख्य-सुप्रसिद्ध-प्राचीनसंस्कृतपत्रादिषु तदीयकवित्वशक्तिप्रभवाणि वस्तूनि प्रभूतानि सन्दृश्यन्ते । धर्मशास्त्रेऽपि तेषां परं वैदुष्यमासीत् । तादृशाः शास्त्रनिष्ठा धर्मानुगताः कवित्वशक्तिशालिनश्च प्रशस्ताः पण्डिताः प्रायेण दुर्लभा एव । तेषां रिक्तं पदमन्येनारिक्तं भवितेति न शक्यं सम्भावयितुम् । त एते प्राचीनपथादर्शभूता यावत् यावत् परलोकं गच्छन्ति तावत्तावदेव महती क्षतिः सम्पद्यते संस्कृतविद्यायाः सनातन-धर्मस्य च भारते वर्षे । परमपरिहार्य एष कालनियमानुपाती विपत्पातः । तदस्तु परलोकमुपेतानां तेषां शाश्वती शान्तिः शान्तिश्च शुचस्तद्बान्धवानाम् ।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudāsa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

.....The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV. | January 1952
No. 9. | १८७३-शकीये
३४श-वर्षस्य | पौषे
९म संख्या | मासे



# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।.
Foreign price 1

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे ।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु ? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम् ? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति ।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम् । तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति ।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामवाजार

कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।

भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXIV. No. 9. | १८७३-शकीये पौषे ३४श-वर्षस्य ९म-संख्या | January 1952.


## उत्तरायणमङ्गलम्

प्रभूतदोषनाशनं सुरौघसुप्तिशातनं
दिनेशदीप्तिवर्द्धनं मृतोर्द्ध्वयानकारणम् ।
शरीरवह्निदीपनं जनौघसौख्यसाधनं
करोतु दुःखवारणं पवित्रमुत्तरायणम् ॥१॥

विशिष्टपिष्टकादिभिर्गृहस्थजाततोषणं
निजाङ्गपौषमासतस्तुषारपातभीषणम् ।
प्रवृत्तपौषकालिकासमर्च्चनप्रसाधनं
महोत्सवाय कल्पतां पवित्रमुत्तरायणम् ॥२॥

यदात्मपौषविग्रहे दिनस्वरूपवर्द्धनं
प्रभूतलोकमोदनं श्रमावकाशवर्त्तनम् ।
विशिष्टसृष्टधर्मिणां चिरं महोत्सवायनं
करोतु रञ्जनं भुवः पवित्रमुत्तरायणम् ॥३॥

यदीयपूर्वविग्रहो जड़ीकरोति देहिनः
प्रभूतशीतयोगतो विशेषतो निशागमे ।
यदुत्तरांशतः पुनः प्रतापयत्यहर्निशं
तदस्तु मङ्गलाय नः पवित्रमुत्तरायणम् ॥४॥

यथाक्रमं प्रवर्त्ततामिहोष्मशीतवैभवं
स्थितिर्जनेषु जायतां शरीरशर्मसाधनी।
इहैव वा परत्र वा शरीरिणां प्रमोदनं
विवर्द्धतां हिताय नः पवित्रमुत्तरायणम् ॥५॥

---

# मतिमञ्जरी

आन्तरप्रकृतिरिव विपर्यस्ता बाह्यापि प्रकृतिर्वसुन्धरायाः। तत एवासौ नाधुना प्रागिव प्रसूते प्रभूतानि प्रकृष्टशस्यानि। न प्रवाहयति प्रशान्तं निर्मलं वायुम्। नादधाति चित्तसन्तर्पणं काननसौभाग्यम्। न प्रवर्त्तयति प्रसन्नं स्रोतस्तरङ्गिण्याः। न प्रतनोति धातुसाम्यप्रवर्त्तनीं रुजाविरोधिनीश्च शक्तिमोषधीनाम्। पादपा न तथा प्रवर्द्धन्ते। न प्रसुवते तथा पुष्पफलानि। नापि सौरभसारस्यादिसौभाग्यं तथा तेषाम्। क्षेत्रेषु तथा नोपजायन्ते शस्यस्तम्बाः। प्राणिनां विघटितं स्वास्थ्यम्। वृद्धिमुपगता रोगनिकुरम्बाः। विलीना शान्तिः। प्रादुर्भूतः समन्ततो विषमदुःखाभिघातः। न प्रवर्षति पर्जन्यो यथाकालम्। विपद्यते ततो देवमातृका क्षौणी। किं बहुना, ऋतवोऽपि नानुवर्त्तन्ते यथास्वं शीलम्। तत एवाद्य निदाघे न तथा सूर्य्यस्तपति। वर्षासु न तथा देवो वर्षति। शरदि न तथा पुष्पाणि विकसन्ति, सलिलानि निर्मलान्युपजायन्ते, गगनं वा जलदमुक्तं समुपैति नीलिमानम्। हेमन्ते हिमसम्पातो न मनागपि जाड्यमाधत्ते शरीरवताम्। शीतर्त्तौ सुतरां शीतशून्यतया स्वेदविदूना न कामयन्ते सूर्य्याग्निपरिचर्याम्। प्रविशन्ति समुपभुञ्जते च निःशङ्कं सानुरागं सुशीतमम्भः। परिवर्जयन्ति गात्रावरणम्। समपेक्षन्ते व्यजनवातम्। शीतपवनार्थिनः समुपसर्पन्ति प्रवातमुद्यानं नदीतीरं वा यथाकामम्। वसन्तागमे च सम्यकृतया भृङ्गा च न प्रफुल्लन्ति प्रसूनानि। प्रसूनेषु नोपजायन्ते तथा घ्राणसन्तर्पणानि सौरभाणि।

सौरभानुभवेन च न तथा मानसामोदः। नातिमधुरं विहगा गायन्ति। न भृङ्गा गुञ्जन्ति। नापि समन्ततः समुदेति प्रभूतो वासन्तमहिमा। लौकिकहेतुमात्रविचारेण तदेतत् सर्वं विज्ञानप्रसूतविविधवस्तुसम्पर्कप्रभवजलवातदोषमूलमिति लौकायतिकाः। अलौकिकमूलभूतहेतुविचारेण तदिदं समग्रं सर्वेषां भविनामुत्कटकालोचितदुरितप्रभवमिति हि नास्तिकाः। सति फलोन्मुखे समग्राणां जानपदानां दुरितसङ्घाते समग्रजानपदवातसलिलादिदोषसङ्घटनया महामारीप्रभृतिभिरुपद्रवैरुपजातैः समग्रजनपदध्वंस इति हि शास्त्रकाराः समामनन्ति। तत् किमेष प्राचुर्येण सर्वतः समनुभूयमानः प्रकृतिविपर्ययो न चिरेण सम्पत्स्यमानं सकलजनपदध्वंसं पिशुनयति? को नामात्र जगतः शरणं यः प्रक्रान्तमिमं विपर्ययं प्रतिकुर्यात्?

---

## नवसूक्तिमालिका

अन्नं क्षुधार्ताय मुदा प्रदीयतां
नग्नाय तद्वद् वसनं यथाबलम्।
वृथैव तत्ते द्रविणं यदन्वहं
स्वकीयमर्थं प्रददाति केवलम्॥

मितम्पचस्यात्र वृथैव जीवनं
स्वस्यापि भोगाय न यस्य वैभवम्।
अनिच्छया तस्य हुताशतस्करौ
नृपस्तथा वित्तममुष्य वृण्वते॥

काकोऽपि नो भोगविनाकृतो भवे
पिपीलिकाप्यर्जयति स्वभोजनम्।
यस्यान्यभोगाय न वित्तमात्मनः
काकाच्च कीटाच्च लघुः स मानवः॥

# वेदान्तानुभूति-कारिका

( पूर्वतोऽनुवृत्ता )

[निबन्धकः—श्रीकालीकुमारमिश्र-काव्यवेदान्ततीर्थ एम एः]

व्याप्तिज्ञानं त्विह न करणं स्याददृष्टार्थबोधे
द्वैताभावे सहचरविधेस्तन्त्रता क्वानुमातुः ।
साक्षाद्ब्रह्म त्वमसि वचनान्नो मृषाज्ञानमात्रं
जीवोपाधौ व्यवहितकरं वै स्वरूपोपलब्धेः ॥६॥

आत्मज्ञानं परमुपमया लभ्यते नापरोक्षम्
आत्मा सत्यः सकलमनृतं केन तुल्योऽयमेकः ।
आकाशादेः श्रुतिषु तुलना दीयते ब्रह्म सर्वं
यज्ज्ञानार्थं चित उपहिताकार एकत्र कल्प्यः ॥१०॥

स्वार्थाभावाद् विषयरहिते निर्गुणे निष्क्रिये वा
दुर्बोधे किं सति कलनया चिन्तया सेवया वा ।
भ्रान्त्या छिन्ना परमतिरतोऽपौरुषेया श्रुतिर्या
मोक्षज्ञानं समधु ददती केवलं प्रापणीया ॥११॥

कर्मज्ञाने श्रुतिषु विदिते द्वे नराणां विवेच्ये
कर्म त्यक्त्वा कथमिह वरं चक्षते ज्ञानमेके ।
यज्ञेनेति श्रुतिरनुभवात् कर्मणोऽस्ति प्रयोगः
चेतःशुद्ध्या इदमपि पुनर्याच्यते ज्ञानिना वै ॥१२॥

कर्मार्थित्वं परमवगतन्तु प्रमाणं श्रुतीनाम्
आनर्थक्यं तदनवभृतां तेन मीमांसकानाम् ।
कोऽकर्त्तव्ये स्वगतविषये वस्तुमात्रे यतेत
सर्वाम्नाये विधिपरतया युज्यमानास्ततः स्युः ॥१३॥

कार्याद्भिन्नं न विधिरहितं ब्रह्म किञ्चित् सतत्त्वं
श्रोतव्यादिश्रुतिविधिपरं श्रूयते ब्रह्म यस्मात् ।

स्वर्गादिः स्यादिति फलधिया कर्म कुर्वन्ति सर्वं
आम्नायानां तत उपनिषद्भाग एवार्थवादः ॥१४॥
धर्माधर्मौ श्रुतिविषयकौ चोदितौ द्वौ क्रियायाः
जीवाः सर्वं क्षणमपि विना कर्म तिष्ठन्ति नात्र ।
मोक्षः स्वर्गो न किमपि ततः कर्मणा वै स लभ्यः
इत्थं वादो नृषु सुचलितोऽकारि मीमांसकेन ॥१५॥
वेदान्ती वः प्रथमपदवीमात्मनोऽत्र क्रियायां
नास्वीकारं जगति कुरुते बुद्धिभेदाज्जनानाम् ।
इच्छा ज्ञातुं न भवति समा संविदा मुक्तिदात्र्या
यज्ञश्रुत्या वरमनुभवे स्यात्ततो भूम्नि बाधः ॥१६॥
आत्मार्थं वै श्रुतिषु कथितं कर्म यागादि सर्वम्
आनर्थक्यं कथमुपनिषद् याति तं बोधयन्ती ।
नाविज्ञाते स्वगतविषये वस्तुमात्रेऽप्ययत्नो
दुःखोच्छेदो न भवति यतः कर्मणा केवलेन ॥१७॥
ज्ञानात्मानं रसमुपनिषत् पद्यते नार्थवादम्
श्रोतव्यादिश्रुतिरभिनवं ब्रह्म कर्तुं विधिः किम् ।
नित्यं ब्रह्म स्थितमथ विधिर्नेह कोऽयं कुतो वा
कर्मग्राह्यं न तदवयवश्च क्रियाः सन्ति सर्वाः ॥१८॥
क्षीणे पुण्ये ननु दिविषदो मर्त्यलोकं विशन्ति
स्वोऽनित्यत्वात् कथमथ भवेत् स्वर्गलाभो विमुक्तिः ।
आपतपातान् निरवधि सुखं स्वर्गिणां वा कथं स्यात्
मीमांसायां न भवति ततो मोक्षबोधो यथार्थम् ॥१९॥
निष्कर्मात्मा न चिदनुभवश्चोदनाभिः सुलभ्यः
कर्तुः कार्यात्तु विकृतिफलं जायते क्षीणपुण्यम् ।
भेदात् कर्म प्रभवति कथं स्यादभेदेऽस्य यागः
कर्मत्यागात् प्रसरति ततो मुक्तये चिद्विचारः ॥२०॥

काय: सर्वं खलु तदधिकं वस्तु किञ्चिन्न तत्त्वम्
आस्था प्रेत्य स्खलति च यतो जीवतीहा शरीरे।
हित्वानन्दं स्थितमिह सुधीनैहतेऽमुत्र भूत्यै
चार्वाकाणां प्रचलितमतो मानवानां क्रियासु ॥२१॥

आधारत्वं ननु जड़तनोः केवलं कल्प्यतेऽतः
देहास्तित्वं यदि न पुरुषो भाति शून्यं धरायाम्।
भोग्ये वाञ्छां दधति चपलां नाशशीले भवन्तः
किं बुध्यन्ते न सति न जिते कर्मकर्तात्र जीवः ॥२२॥

आदौ सर्वं कतिचिदणवः सप्रतिष्ठा बभूवुः
प्रभ्राम्यन्तः प्रकृतिवशतो द्रव्यजातं सृजन्ति।
चेतोजन्मापि भवति यथा गोमयाद् वृश्चिकादि-
विश्वं जातं बहुभिरणुभिर्वस्तु वादी विचष्टे ॥२३॥

प्रागुत्पत्तेस्तु चिदवगमान्नेदमासोज्जड़ाणु
दृष्टान्ते तेऽपि चिदनुगमो गोमये सूक्ष्मरूपः।
यस्मात् कुत्रापि न चिदचितो जायते बाधसिद्धा
सृष्टेरीशाश्च कथमणवः स्युर्जड़ाः कर्तृहीनाः ॥२४॥

चैतन्याद्वा कथमथ मते ते जड़श्चास्तविश्वं
चैतन्यज्ञं प्रतिवदति चेच्चानुवादी प्रतीपम्।
अण्वादिभ्यस्त्रिचतुरणुकं मानरूपं यथान्यत्
तद्वत् सृष्टिश्च जड़जगतो ब्रह्मणो बाधते नो ॥२५॥

( क्रमशः )

# छन्दोग-क्रियासारः

[ निबन्धकः—श्रीरमणीकान्त-सिद्धान्त-रत्न ]

( पूर्वानुवृत्तः )

तत ॐ या दिव्या आपः...इत्यादि पठित्वा विष्णुरोम् अमुकगोत्र पितरमुकदेवशर्मन्नेतत्तेऽर्घ्यं ये चात्र त्वामनु यां्श्च त्वमनु तस्मै ते स्वधा' इत्युत्सृज्य पितृब्राह्मणहस्ते आदौ उत्तराग्रं पवित्रं दत्त्वा जलादिकं प्रतिपादयेत्। ततो जलस्पर्शपूर्वकं एवं क्रमेण पितामहप्रपितामहयोरर्घ्यमुत्सृज्य ब्राह्मणेभ्यः प्राक् उत्तराग्रं पवित्रं प्रतिपाद्य जलादिकं प्रतिपादयेत्। ततः प्रथमं पित्रर्घ्यपात्रे पितामहार्घ्यपात्रसंस्रवं मिश्रयित्वा प्रपितामहार्घ्यपात्रसंस्रवं तत्रैव मिश्रयेत्। ततस्तत पितृपात्रं स्ववामे भूमौ ॐशुन्धन्तां लोकाः पितृसदनाः पितृसदनमसि, पितृभ्यः स्थानमसि, इत्यनेन न्युब्जं कुर्यात्। ततो देवब्राह्मणाय तूष्णीमुदकं दत्त्वा विष्णुरोम् विश्वेदेवा असावेतत्ते यवोदकं स्वाहा' इत्यनेन अनिषिद्धपात्रे कृत्वा यवोदकं दद्यात्। पित्रादि ब्राह्मणेभ्यस्तूष्णीमुदकं दत्त्वा विष्णुरोम् अमुकगोत्र पितरमुकदेवशर्मन् अमुकगोत्र पितामहामुकदेवशर्मन अमुकगोत्र प्रपितामह अमुकदेवशर्मन्नसावेतत्ते तिलोदकं स्वधा' इत्यनेन पात्रे कृत्वा दद्यात्। अत्र तिलोदकवद् गन्धोदकमपि दैवे पित्र्ये च दद्यात्। गन्धोदकं ब्राह्मणेषु देयमिति विशेषः। ततो विष्णुरोम् ॐपुरुरवोमाद्रवःसंज्ञका विश्वेदेवा असावेतानि ते गन्धपुष्पधूपदीपाच्छादनानि स्वाहा' इत्युत्सृज्य अमन्त्रकं प्रत्येकं गन्धादीन देवब्राह्मणाय प्रतिपादयेत्। ततः पितृपक्षे विष्णुरोम् अमुकगोत्र पितरमुकदेवशर्मन अमुकगोत्र पितामहामुकदेवशर्मन् अमुकगोत्र वृद्धप्रपितामहामुकदेवशर्मन्नसावेतानि ते गन्धपुष्पधूपदीपाच्छादनानि ये चात्र त्वामनु यां्श्च त्वमनु तस्मै ते स्वधा' इत्युत्सृज्य सर्वेभ्यो ब्राह्मणेभ्यः

प्रथमं गन्धान प्रतिपाद्य तथैव तूष्णीं पुष्पादीन् प्रतिपादयेत्। ततो दैवादिक्रमेण ब्राह्मणाग्रस्थितकुशादिकमपनीय दैवे ऐशानीमारभ्य दक्षिणावर्त्तेन जलधारया प्रागग्रं चतुष्कोणमण्डलं कृत्वा पित्र्ये च नैर्ऋतीमारभ्य वामावर्त्तेन दक्षिणाग्रं चतुष्कोणमण्डलं कृत्वा दैवादिक्रमेण भोजनपात्राणि स्थापयेत।

सर्वं दैवकृत्यम् उपवीतिना दक्षिणजानुपातेन प्राङ्मुखेन देवतीर्थेन कार्यं पितृकृत्यञ्च प्राचीनावीतिना दक्षिणामुखेन वामजानुपातेन पितृतीर्थेन कर्तव्यम्। अग्नौकरणे उभयत्रैवं। ततो घृताक्तमन्नमादाय ॐ अग्नौ करिष्यामीति पृच्छेत। ॐ कुरुष्व इत्यनुज्ञातः "स्वाहा" इत्युच्चार्य पित्र्ये पंक्तिश्रेष्ठस्य हस्ते हू ॐसोमाय पितृमते इति मन्त्रशेषं समापयेत्। तत्रैव पुनः स्वाहा" इति हुत्वा ॐ अग्नये कव्यवाहनाय इति मन्त्रशेषं समापयेत्। पित्र्ये अन्यब्राह्मणहस्तेषु तूष्णीं जुहुयात। ततो हुतशेषं दैवादिसर्वब्राह्मणहस्तेषु दत्त्वा दैवादिक्रकेण अन्नादिकं पात्रान्तरितहस्ताभ्यां पत्नी स्वयं वा परिवेशयेत्। उपकरणञ्च पात्रान्तरे कृत्वा पृथक् स्थापयेत् पात्रान्तराभावे पात्रोपरि दद्यात्। ततो दैवे दक्षिणहस्तेनान्नपात्रं धृत्वा ॐ पृथिवी ते पात्रम्...इत्यादि मन्त्रं पठेत। पित्रादिपात्रमपि तथैव धृत्वा पठेत्। ततो दैवे अन्ने ॐ इदं विष्णुर्विचक्रमे... इति अथवा ॐ विष्णो हव्यमिदं रक्षस्व इत्युक्त्वा अनखमङ्गुष्ठं निवेशयेत्। ततः पित्र्ये अन्ने ॐ इदं विष्णुर्विचक्रमे...इति अथवा ॐ विष्णो कव्यमिदं रक्षस्व इत्युक्त्वा तथैव अङ्गुष्ठं निवेशयेत्। अस्मिन्नवसरे दैवेऽन्ने ॐ यवोऽसि यवयास्मद्द्वेषो। यवयारातीरित्यनेन यवान निक्षिपेत। पित्र्ये चान्ने ॐ तिलोऽसि सोमदेवत्यः...इत्यादिना तिलान् निक्षिपेत। अत्र मध्वपि अन्ने देयम्। किन्तु कलौ तन्निषिद्धम्। ततो दैवे अन्नपात्रं धृत्वा विष्णुरोम् पुरुरवोमाद्रवःसंज्ञका विश्वेदेवा एतत्तेऽन्नं सजलं सोपकरणं स्वाहा इति उत्सृजेत। पित्र्ये च विष्णुरोम् अमुकगोत्र पितरमुकदेवशर्म्मन् अमुकगोत्र पितामहामुकदेवशर्म्मन् अमुकगोत्र प्रपितामहामुक-

देवशर्म्मन् एतत्तेऽन्नं सजलं सोपकरणं स्वधा' इत्युत्सृजेत्। ततोऽन्ने प्राक् पातिषु दत्तं हुतशेषं मिश्रयेत्। ततो ब्राह्मणानां हस्तेषु आपोशानार्थं सकृत्सकृदुदकं दद्यात्। यथा, दैवे विष्णुरोम् विश्वेदेवा एतत्ते उदकं स्वाहा' पित्र्ये च अमुकगोत्र पितरमुकदेवशर्म्मन् अमुकगोत्र पितामहामुक देवशर्म्मन् अमुकगोत्र प्रपितामहामुकदेवशर्म्मन् एतत्ते उदकं स्वधा' इत्यनेन दद्यात्। ब्राह्मणा अपि ॐ अमृतस्योपस्तरणमसि स्वाहा' इति तदुदकं पिबेयुः। ततः सप्रणवव्याहृतिकां गायत्रीं ॐ मधुवाता ऋतायते... इति ऋक्त्रयं मधुशब्दत्रयञ्च जपेत्। ततो भुञ्जानेषु ब्राह्मणेषु प्राचीनावीती श्राव्यं पठेत्। यथा, सप्रणवव्याहृतिकां गायत्रीं गायन्तं साम पितृसंहितां माधुच्छन्दसीं संहिताञ्च पठेत्। एतदनन्तरम् इच्छया स्मृतिपुराणादुक्तं जपेत्।

ततो दैवे प्रागग्रान् दर्भानास्तीर्य्य यवयुक्तमन्नं गृहीत्वा

ॐ असोमपाश्च ये देवा यज्ञभागविवर्जिताः।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम्॥

इति मन्त्रेण उच्छिष्टसमीपे प्रागग्रदर्भोपरि विकिरेत्। ततः प्रकृतं किञ्चिदन्नं सतिलमादाय ॐ ये अग्निदग्धा जीवा येऽप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम्॥ इत्युच्चार्य्य उच्छिष्टसमीपे भूमौ विकिरेत्। ततो हस्तौ प्रक्षाल्य प्रत्यापोशानार्थं पूर्ववत् वाक्यं कृत्वा उदकं दद्यात्। ब्राह्मणाश्च ॐ अमृतस्यापिधानमसि स्वाहा' इत्यनेन तदुदकं पिबेयुः। अथ मधुवाताः इति त्र्यचं मधुशब्दत्रयञ्च जपत्वा ॐ तृप्ताः स्थ' इति ब्राह्मणान् पृच्छेत्। ॐ तृप्ताः स्म इति प्रतिवचनम्। ततोऽन्नशेषैः किं क्रियतामिति पृच्छेत्। ॐ इष्टैः सहोपभुज्यतामिति प्रत्युत्तरम्। ततः ॐ पिण्डदानमहं करिष्ये' इति पृच्छेत्। ॐ कुरुष्व इति प्रतिवचनम्। ततो ब्राह्मणसम्मुखे वामहस्तान्वारब्धदक्षिणहस्तगृहीतपवित्रेण ॐ अपहता असुरा रक्षांसि वेदिषदः' इत्यनेन दक्षिणाग्रां रेखां कुर्य्यात्। तत्र दक्षिणाग्रान् दर्भानास्तीर्य्य पितॄनावाहयेत्। यथा, तिलानादाय

ॐ एत पितरः सोम्यासो गम्भीरेभिरित्यादिमन्त्रेण। ततः सतिलजलं गृहीत्वा विष्णुरोम अमुकगोत्र पितरमुक देवशर्मन्नसाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा' इत्यनेन आस्तृतकुशमूले निक्षिपेत्। एवं पितामहप्रपितामहयोरपि मध्याग्रयोरवनेजयेत्। ततः शेषान्नेन विल्वप्रमाणान् त्रीन् पिण्डान् निर्माय सतिलमोटकमेकं गृहीत्वा विष्णुरोम् अमुकगोत्र पितरमुकदेवशर्मन्नसावेष ते पिण्डो ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा' इत्यनेन आस्तृतकुशमूले अवनेजनस्थाने दद्यात्। ततो द्वितीयपिण्डं तृतीयपिण्डञ्च जलं स्पृष्ट्वा उक्तप्रकारेण पितामहप्रपितामहाभ्यां आस्तृतकुशमध्याग्रयोरवनेजनस्थाने दद्यात्। ततः कुशमूले ॐ लेपभुजः पितरः प्रीयन्ताम्। इति हस्तलेपं दद्यात्। ततो जलं स्पृष्ट्वा पिण्डपात्रं प्रक्षाल्य तज्जलेन विष्णुरोम् अमुकगोत्र पितरमुकदेवशर्मन्नसाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा इत्यनेन पितृपिण्डोपरि अवनेजयेत्। एवं पितामहप्रपितामहयोः पिण्डोपरि अवनेजयेत्। ततः ॐ अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्" इति जपेत्। ततो वामावर्त्तेनोदङ्मुखो दक्षिणामुखो वा श्वासं धृत्वा तेनैव पथा परावर्तमानः सर्वान् पितॄन् भास्वरमूर्त्तिकान् ध्यायन् ॐ अमीमदन्त पितरो यथाभागमावृषायिषत"। इति जपेत्। ततः श्वासं त्यजेत्।

ततः कृताञ्जलिः ॐ नमो वः पितरः पितरो नमो वः' इति जपेत् ॐ गृहान्नः पितरो दत्त' इति गृहिणीं पश्येत्। ॐ सदो वः पितरो देष्म' इति पिण्डान् पश्येत्। ततो नवमनवं वा वासःसूत्रमादाय विष्णुरोम् अमुकगोत्र पितरमुकदेवशर्मन् अमुकगोत्र पितामहामुकदेवशर्मन् अमुकगोत्र प्रपितामहामुकदेवशर्मन् एतत्ते वासः स्वधा इत्यनेन पिण्डत्रयोपरि दद्यात्। ततो गन्धादिना पिण्डान् तूर्ष्णीं पूजयेत्। ततो दैवादिक्रमेणाचमनं दद्यात्। दैवे ॐ पुरुरवोमाद्रवःसंज्ञका विश्वेदेवा एतत्ते उदकं स्वाहा इति पित्र्ये च प्रपितामहपर्यन्तगोत्रनामानि उल्लिख्य एतत्ते उदकं स्वधा इत्यनेन दद्यात्। ततो दैवादिक्रमेण ॐ सुसुप्रोक्षितमस्तु' इति ब्राह्मणाग्रभूमिं

ब्राह्मणांश्चासिञ्चेत्। ॐ अस्तु' इति प्रतिवचनम्। ॐ शिवा आपः सन्तु' इति पूर्ववदासिञ्चेत्। ॐ सन्तु' इति प्रतिवचनम्। ॐ सौमनस्यमस्तु' इति ब्राह्मणेभ्यः पुष्पाणि प्रतिपादयेत्। ॐ अस्तु' इति प्रतिवचनम्। ॐ अक्षतञ्चारिष्टञ्चास्तु इति ब्राह्मणेभ्यो यवान् दद्यात्। ॐ अस्तु' इति प्रतिवचनम्। ततो दैवे यवयुक्तजलं गृहीत्वा ॐ पुरुरवोमाद्र-वसोर्विश्वेषां देवानां अक्षय्यमस्तु' इति ब्राह्मणहस्ते दत्त्वा, तिलयुक्त-जलं गृहीत्वा विष्णुरोम् अमुकगोत्रस्य पितुरमुकदेवशर्मणोऽक्षय्यमस्तु" इति पितृब्राह्मणहस्ते दद्यात्। एवं पितामहप्रपितामहयोरक्षय्यं दद्यात्। सर्वत्र 'अस्तु' इति प्रतिवचनम्। ततो ॐ अघोराः पितरः सन्तु इति प्रार्थना। 'ॐ सन्तु' इति प्रतिवचनम्। 'ॐ गोत्रं नो वर्द्धता'मिति प्रार्थना उभयपक्षेऽपि स्यात्। ॐ वर्द्धतामिति प्रत्युत्तरम्। ततः पिण्डाना-मुपरि सपवित्रान् दर्भानास्तीर्य्य ॐ स्वधां वाचयिष्ये' इति पृच्छेत्। ॐ वाच्यता'मिति प्रतिवचनम्। ततः ॐ पितृभ्यः स्वधोच्यता'मिति वदेत्। ॐ अस्तु स्वधेति प्रतिवचनम्। एवं पितामहेभ्यः स्वधोच्यता'मिति प्रपितामहेभ्यः स्वधोच्यता'मिति वदेत्। सर्वत्रैव अस्तु स्वधेति प्रति-वचनम्। ततो न्युब्जीकृतपात्रमुत्तानीकृत्य सपवित्रकुशाच्छादितपिण्डोपरि ॐ ऊर्ज्जं वहन्ती'रित्यादिना वारिधारां दद्यात्। ततो दैवे ॐ विश्वेदेवाः प्रीयन्ताम्' इति ब्रूहि इति वाचयितुरध्येषणं। ततो विश्वेदेवाः प्रीयन्ता-मिति ब्राह्मणैरुक्ते पिण्डान् भोजनपात्राणि शमयेत्।

# वृत्तवार्त्तिका

विदितवेदितव्याः सभ्याः। जानन्त्येव श्रीमन्तो यत् 'अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्।' इति। यद्यप्येवम्, तथापि तेषु तानेव प्राणिनः परलोकमुपेतान् वयमनुस्मरामः, तानेव संस्मरन्तो वयमविरलधारं वाष्पं विसर्जयामः, तानेव समुद्दिशन्तो वयं श्रद्धया नताः प्राचुर्येण शोक-पिशुनानि वचनानि रचयामः। सतो दर्शनस्य गौरवमिव जीवतां नृणां गौरवमविद्वांसोऽपि मरणोत्तरं सम्यक्तया तदीयं गौरवमभिजानन्तस्तदत्य-योपजातमनिष्टं निःशेषमवधार्य्य विलापेन प्रलापेन च दिशो मुखरयामः। तादृश एवैकः पण्डितमुकुटमणिः कालनियमेन संस्कृतविद्यासम्प्रदायस्य महता दौर्भाग्येन च मर्त्यदेहमपहाय गतः स्वकर्मोचितं लोकम्। स एष वङ्गीयपण्डितसमाजे प्रतिभावतां नैयायिकानामग्रेसरः सुचरितो महामहो-पाध्यायश्रीरामकृष्णतर्कतीर्थमहाभागः। तस्य पाठकालात् प्रभृत्येव शास्त्रीयगभीरतत्त्वावधारणकुशला विचित्रा प्रतिभा सुविदिता पण्डितसमाजे। तत्तुल्याः प्रतिभाशालिनो नैयायिकाः सुदुर्लभा एव साम्प्रतिकेषु। बहवो ग्रन्थास्तेन रचिताः सुतरामुपकुर्वन्ति विद्यार्थिनां तथा पण्डितसमाजस्य। तेषु 'कुसुमाञ्जलिसौरभ' नामधेयो ग्रन्थः सविशेषमुल्लेखमर्हति। स्वीयाध्यापन-कौशलपरम्परया तेन बहवो विद्यालया गौरवं लम्भिताः। पाण्डित्येन सुमहता समं विनयगुणयुक्तिर्मणिकाञ्चनयोः स्मारयति मिथः प्रशस्तं योगम्। 'विद्या ददाति विनयम्' इति सूक्तिस्तत्र सर्वथा गता साफल्यम्। अन्तिमे वयसि चासौ त्रिपुराराजधान्यां त्रिपुराराज्याधीश्वराणां सभा-पण्डितपदं ससम्मानमधिष्ठाय कालमत्यवाहयत्। तस्य प्रतिभाशालिनः पण्डितप्रकाण्डस्य तिरोधानेन संस्कृतविद्यायास्तथा पण्डितसमाजस्य या महती क्षतिरजनिष्ट सा नितरां दुरपनेया। अपि नाम निरवधौ काल-पर्याये कदाचिदस्य सदृशः सप्रतिभो जनिं गृह्णीयात्? अपि नाम कश्चि-देवम्भूतः सम्भूतो भगवत्याः सरस्वत्या वाष्पप्रवाहं निवर्त्तयेत्? यदस्तु तदस्तु, शान्तिं लभतां परलोकगतस्तदीयात्मा समं परिजनैः।

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Rs. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV. February 1952

No. 10. १८७३-शकीये

३४श-वर्षस्य माघे

१०म संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—1

# यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्येत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्मप्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूतदौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनोगतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-
सम्पादकः, श्यामबाजार

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्म' प्रकाशयतु धीमताम् ॥

| Vol. XXXIV. | १८७३-शकीये माघे | February |
| --- | --- | --- |
| No. 10. | ३४श-वर्षस्य १०म-संख्या | 1952. |


## श्रीश्रीसरस्वतीमङ्गलम्

सालङ्कारध्वनियुतपदा सद्गुणा दोषहीना
रीत्युत्कर्षात् प्रियतमवपुः शुद्धवर्णा रसाढ्या ।
वीणाधीना कविजनमता दिव्ययोषेव रम्या
वाणी नित्य' दिशतु हृदये सज्जनानां प्रमोदम् ॥

---

## मतिमञ्जरी

मतिरद्य क्रमेण शुष्यति । कुतस्तस्या मञ्जरी । महताप्यर्घेण सुदुर्लभानि शस्यानि । अनशनेन म्रियन्त इव दीनकुलानि । सचिन्ता नेतारः शुभैषिणो जनसङ्घस्य । अपि नाम सुप्ता देवता भारतस्य ? यदेता न शृण्वन्ति विलपित' दीनानां, नापि पश्यन्ति स्वतः समवस्थामीदृशीं तेषाम् । अयि देवताः ! जागृत, शृणुत, पश्यत, अवधत्त, परिवर्तयत दशां भारतस्य । कुरुत पुनरप्यस्माकं मतिं मञ्जरीमतीम् । परित्यज्य नैष्ठुर्यं सफल' विधत्त नः कातर्यम् । किमन्यदद्य वाच्यमतितरां दूनानाम् ।

---

# नवसूक्तिमालिका

हित्वा स्वधर्मं परधर्मनिष्ठो विपद्यते नूनमयुक्तकारी ।
वृद्धो यदा विन्दति बाल्यलीलां तदोपहासं स जनाद् वृणीते ॥
पुण्यात् सुखं पापकृतेश्च दुःखं सुखार्थमस्मात् सुकृतं विधेयम् ।
चन्द्रः सुधाया रविरातपस्य दातेति सिद्धो नियमः किलायम् ॥
भाविस्वार्थाकाङ्क्षया यो हि मूढः सख्युर्मैत्रीं सिद्धरूपां जहाति ।
सोऽयं मांसच्छायया मोह्यमानः श्वेवोपायान्माननाशं कदाचित् ॥

---

# आद्यालयविवरणम्

( निबन्धकः—स्वर्गतः पण्डितप्रवरः रामगोपालविद्यारत्नः )

केनचिदागन्तुकेन हेतुना लुप्तप्रायकीर्त्तिकलापम् आत्रेयीतटादनतिदूरवर्त्तिनं देवीपुराभिधं ग्रामविशेषं प्राप्तनिदेशा वयं गतवन्तः, कार्यानुरोधात् कियन्तं कालं तत्र स्थितवन्तश्च । तस्यैव वक्षसि साधकोत्तमः कश्चिद् भूस्वामिप्रवरो बहुभिरर्थैरायासैश्च कीर्त्तिस्तम्भस्वरूपं देवालयमेकं निर्मापयामास । स च बहुदेवताकोऽपि श्रीमदाद्यायाः प्राधान्यादाद्यालय इति व्यपदिश्यते प्रादेशिकैः । अस्मद्विधेनास्पृष्टकाव्यालङ्कृतिकेनावर्णनीयत्वेऽपि प्रचण्डलगुड़ाघातविदीर्णशिरसां विलुण्ठिततनूनामासन्नमृत्यूनां रूपवतां सैनिकानामिव ध्वस्तावशिष्टानां ततसद्मनि विलुण्ठितानां देवमन्दिराणामवलोकयितुरश्रुप्रवाहप्रवर्त्तकमयत्नविकृतसौन्दर्यमनुल्लिख्य न जातु वयं निवर्त्तितुमर्हामः ।

उपहसिता अपि तेन न खलु वयमनुतापं विन्देम, नो वा खिद्येमहि, नापि वा दूयेमहि । तत्र पुरप्रवेशवर्त्मनि सव्यपार्श्वे विस्तीर्णस्वरूपा वापी । प्रथमप्राप्तपरित्यागे मानाभावादिति पूर्वसूरिभिः प्रवर्त्तितं चिरं प्रचरन्तं न्यायमनुसृत्य आदौ तामेवोपसर्पामः । कठोरकर्तव्यमनुपालयन्तस्तिर-

स्कृतास्तु सत्यानुशीलनलब्धं तिरस्कारं पुरस्कारमिव वयं नतेषु मूर्द्धसु ग्रहीष्यामः। यातु, अलमत्र शोचनया। प्रकृतमेवानुसरामः। सा च गर्भसंन्यस्तानामपवर्गादिरत्नानां विश्वस्तरक्षकैः पाञ्चालसैनिकैरिव श्रेणीबद्धैरभ्रभेदिभिस्तालवृक्षैः परिवेष्टिता, दीप्तिमताञ्च तेषां गोपनानुकूलैरावरणैरिव निविड़समावेशैः शष्पनिचयैः संवृतसलिला च। तीर्थशिला तु तस्या एकमात्रपरिशेषा, अन्या विलुप्तचिह्ना एव। श्रूयते, नक्रादयोऽपि तस्यां बहव एवावतिष्ठन्ते। ते च सकरुणहृदयाया मातुः सान्निध्यवशात् चिराभ्यस्तां हिंसां परिहरन्तः सलिलप्रविष्टानपि पश्वादीन् न व्यापादयन्ति, नो वा स्पृशन्ति नापि वा जिघ्रन्तीति।

तस्या एव दीर्घिकायाः प्रमत्तालिकुलैर्वनजकुसुमैः सुरभीकृतायां प्रगीतमुखरायां व्रततिवितानसंवृतायां शष्पश्यामलस्निग्धमनोरमायामुत्तरस्यां तटभूमौ वाराणसीक्षेत्रमिवापरं मातुराद्यायाः पवित्रमगारम्।

वर्त्तमानानां विद्यमानसेवकमहोदयानामनवधानाद् विद्वेषवदनधिकारिपर्यवेक्षकनियोगाच्च चूर्णीकृतानि अपरिसंस्कृतानि च तत्र मन्दिराणि कतिविधानि कति वा सन्ति के तानि गणयिष्यन्ति? वयमेव वा स्तूपीकृतानां तासां संहतानामिष्टकानां किं वा वर्णनं करिष्यामः? अहो कीदृशानि तेषां निर्माणवैचित्र्याणि? कीदृशानि वा तेषां दुर्लभोपमानि स्थपतिकारुकार्याणि? कथं वा कारुकार्योत्कर्षानुसन्धितसुभिः स्थपतिविद्याविशारदैरपि श्वेताङ्गैः परिदृष्टानि आलेख्यानामिव निरुपमानि तानि सौन्दर्याणि? अनुमीयते कैश्चित् कलिप्रवर्त्तितस्य भूकम्पादेः प्राबल्याद् हंहो विद्यमानेष्वपि बहुषु मन्दिरेषु न खलु तेषामिदानीमेकमपि सर्वैरवयवैर्जुष्टमस्ति। तेषु च भग्नचूड़ान्यपि कतिचिदाहतमूर्द्धानः शूरा इव प्रतिवैरं चिकीर्षन्ति; कतिचिद्वा पराक्रान्तप्रतिद्वन्द्विखड्गाभिघातैश्छिन्नशिरांसि सैन्यानीव भूशय्यायां चिरनिद्रामधिगच्छन्ति; पतितचूड़ानि कतिचिद्वा स्कन्धप्ररूढ़पादपानां मारुतान्दोलनैः कबन्धा इव ताण्डवं नर्त्तनमभिनयन्ति; विहङ्गमकूजनैः प्रतिध्वानितानि

कतिचिद् विविधरागालापचातुर्यनिपुणाः कलकण्ठा गायका इव उच्चै-र्गायन्ति ; अश्रुप्रवाहैरिव प्रावृट्सलिलनिषेकैर्गीतानि शृण्वन्ति, विरल-विहगसङ्घानि कतिचिद्वा संयतगिरः परमहंसा इव मौनं व्रतमनु-पालयन्ति ।

एषामेकस्मिन् कारुकार्यचरमोत्कर्षमयमन्दिरे दिव्येव ज्योतिर्म्मयी मातुः श्रीमूर्त्तिर्विराजते, प्रतिष्ठापयितुः पूतान्वयप्रसूतैर्भूस्वामिप्रवरैः पूज्यते च। नास्ति तस्या नृकरकाञ्ची, नो वा नरमुण्डालिमाला, नापि पीय-मानचरणारविन्दः शङ्करः षट्पदो वा।

इयञ्च महादेवपुरनिवासिनां वर्त्तमानभूस्वामिप्रवराणामूर्द्ध्वगतपुरुषेण रामेश्वरसाधकोत्तमेन प्रतिष्ठापिता। अत्र स्वल्पमपि ऐतिहासिकसंदेशं वयमुपयोगिनं मन्यामहे। पुरा किल रायोपाधिकः कमलनयननामा वैषयिकविद्याविशारदो मुख्यवंशीयः कश्चिद् विप्रः मुर्शीदावादाधिपतेर्नवाव-विशेषस्य कस्मिंश्चित् क्षुद्रकर्मणि नियुक्त आसीत्। अथ असाध्यानामपि बहूनां कर्मणां सुसाधनात् शनैरुच्चपदेषु उन्नीयमानः कियन्तं कालं तत्रैवा-वतस्थे। अयमेव नयनचाँदनाम्ना आख्यायते कैश्चित्। अथ कार्यानु-रोधात् मुर्शीदावादाधिपतिस्तं हस्तिनायां दील्ल्यां वा प्रेषयामास। कार्य-नैपुण्यं विशेषबुद्धिमत्तादिकञ्च सम्यगुपलभ्य दील्लीश्वरेणापि तत्रैवावस्थानाय सनिर्बन्धमनुरुद्धः, महासभायां कस्मिंश्चिदुच्चपद एव नियोजितश्च।

विवृतिरसौ या पाठकेभ्य उपह्रियते। सा पुरावृत्तविद्भिरेव यथायथं ज्ञापयितुं शक्यते। अस्माभिस्तु कौतूहलनिवारणाय जनश्रुतिरेव शरणीकृता। अत्र तु असम्पूर्णमपि कियन्तमैतिहासिकसंदेशं वयमुपयोगिनं मन्यामहे।

पुरा किल कमलनयननामा कश्चिदप्राकृतः पुरुषः साधुना जन्मपरिग्रहेण कौलीन्यविमण्डितमुख्योपाधिकं ब्राह्मणवंशमेकं काममलञ्चक्रे। अयमेव नयनचाँदनाम्ना आख्यायते कैश्चित्। स च अलोकसामान्येनाध्यवसाय-बलेन प्राग्भवीयसंस्कारबलेन वा कैशोर एव विविधशास्त्रेषु व्युत्पन्नो बभूव। अथ परिणते वयसि प्रगाढ़राजनीतितत्त्वज्ञः स मुर्शीदावादाधि-

पतेर्नवावविशेषस्य सभायां नात्युच्छ्रितं सदस्यासनमेकं लेभे, दुःसाध्यानामपि बहूनां राजकार्याणां संसाधनेन शनैरुच्चादुच्चतरेषु पदेषु उन्नीयमानः कियन्तं कालं तत्रैवावतस्थे च। अथ असाररोषोद्दीपितस्वजनजिघांसया वेशितभूतसंघानां करकापातैरिव भीममुष्ट्याघातैः प्रभग्नककुद्भिः काकुत्स्थनामधेयैः क्षत्रियकुलकलङ्कैर्निर्वंन्धहारितं भारतवर्षं शासति दील्लीपतौ जाहाङ्गीरे तस्यैव निदेशपालनाय मुर्शीदाबादाधिपतिः कमलनयनं दील्ल्यां प्रेषयामास। दील्लीश्वरस्तावदागन्तुकस्य कार्यनैपुण्यं विषयचातुर्यञ्च सम्यगुपलभ्य स्वस्यामेव महासभायां कस्मिंश्चित् कर्मणि तं नियोजितवान्। अथ अप्रसन्नभाग्यस्यापि कालप्रवर्त्तितेन परिवर्त्तनपारम्पर्येण बुद्धिरपि तदानीं कमलनयनस्य तत्कार्योचितैव परिवर्त्तिता बभूव। ततो बहुतिथे काले गते प्रसन्नभाग्यश्रीकः कमलनयनो यवनाधिकृताया मातुर्वङ्गभूमेरशिक्षितसन्तानबहुलेष्वपि धनधान्यसमृद्धेषु खण्डविशेषेषु जाहाङ्गीरेणैव प्रदत्तं स्वामित्वं पारितोषिकं लेभे, चक्रे च चिरस्मरणाय तस्य उपकर्त्तुर्दील्लीश्वरस्य अयत्नलब्धानां भूमिखण्डानां नामपरिकल्पनं जाहाङ्गीरपुरपरगणेति। स्वपौरुषोपार्जितप्रभूतसम्पदस्तस्य कमलनयनस्य रामेश्वरनामा कश्चिदधस्तनः पुरुष एवास्माकं प्रबन्धस्य नायकः, तेनैव प्रतिष्ठितासौ पाषाणमयी मूर्त्तिरम्बायाः।

तस्या एव आद्यामूर्त्तेः पादपीठे उत्कीर्णोऽयं श्लोकः—७ आद्ये गणय दासगणगणने। मामति कातरमव करुणामयि पतितं हतसंसारे। तव चरणाश्रित-भवानीदासज देवीदाससुत श्रीमद्रामेश्वरमानसे। हरिहरसेवित ब्रह्ममुखोदयमव तव कृपया भगवति चरणसरोजे॥*

---

*एतन्निबन्धविवृता आद्यावाटी मदीयेन पूज्यपादेन पितृदेवेन स्वर्गतरामगोपालविद्यारत्नमहोदयेन कार्य्यविशेषवशात् परिदृष्टा। अशेषशास्त्राभिज्ञो विशेषतश्च साहित्यानुरागी विविधग्रन्थकृन्मदीयः पितृदेवस्तदा ध्वस्तावशिष्टस्य देवकुलस्यास्य कारुकलासौकुमार्य्यातिरेकेण सुतरां विस्मयानन्दविमुग्धचेताः सम-

भवत्। प्रबन्धोऽयं तस्यैव पीयूषमयं फलमिति मेप्रतीतिः। अयं देवालयस्तावदधुनातनस्य पूर्वपाकिस्तानतन्त्रस्याधिकारे पतितः। अस्य खलु देवालयस्य प्रतिष्ठापयितुर्देवीपादपीठोत्कीर्णश्लोकोक्तस्य रामेश्वररायमहोदयस्य अधस्तनाः पुरुषास्तावदद्यापि राजशाहीजिलान्तर्गतमहादेवपुराख्ये मदीये ग्रामे भुस्वामित्वमुपभुञ्जाना वर्त्तन्ते। मदीयः पितृदेवस्तावदेतेषामेव भूस्वामिकानामन्यतमस्य सभापण्डित आसीत्। तेन खलु देवभाषया विरचिताः पत्राकारेण ग्रथिताः कतिचिद्रचनाः प्रकीर्णाः श्लोकाश्च वियन्ते। वङ्गभाषायां संबद्धानि राधाकृष्ण लीलाविषयकं 'वाँशरी' संज्ञं पदावलीकाव्यम्, 'अमित्राक्षरच्छन्दसा विरचितं 'दुर्गादासविजयाख्यं महाकाव्यम् अन्यानि च श्यामासङ्गीतानि काव्यानि च मत्सकाशे द्रविणाभावादप्रकाशितरूपाण्येव वर्त्तन्ते। प्रसङ्गतश्च महता कष्टेनावेद्यते यत् अपरूपलावण्ययुक्ता पाषाणमयी प्रतिमेयं श्रीमदाद्यायाः कैश्चिदज्ञातपरिचयैर्दुर्वृत्तैरस्माकं हृदयकन्दरशायिन्या धर्मानुभूत्या सहैव निष्करुणं निरपत्रपञ्च कापुरुषवद्भग्ना, विकारमापादिता च*। अयं तावन्निबन्धः पूज्यपादेन पितृदेवेन भारतविश्रुतानामैतिहासिकप्रवराणामक्षयकुमारमैत्रेयप्रमुखानां सन्निधौ वाचितः तैश्च सबहुमानं संबर्द्धितः।

* उपरिष्टाच्च, महादेवपुरवास्तव्यानां श्रीमदक्षयकुमारमुखोपाध्यायप्रमुखानां भद्रमहोदयानामुद्योगातिशयाद्भक्तिश्रद्धावशाच्च पुनः संस्कृता समहोत्सवमभिषिच्य पुनः प्रतिष्ठिता प्रपूजिता चासौ पाषाणप्रतिमा जगदम्बायाः।

# वेदान्तानुभूति-कारिका

( पूर्वतोऽनुवृत्ता )

[ निबन्धकः—श्रीकालीकुमारमिश्र-काव्यवेदान्ततीर्थ एम् ए: ]

चैतन्यात्मा विविधकरणा विद्यते बुद्धिरेका
वाह्यद्रव्यं परनियमितं नास्ति सत्त्वं जडत्वात् ।
काले स्वप्ने प्रभवति यतो धीः पदार्थानपेक्षा
तस्माद्बुद्धेरधिकमपि नो चाह विज्ञानवादी ॥२६॥

बुद्धिर्भूयस्त्वनियततया ज्ञायते च प्रमाणं
येनैकस्या नियतमपरा नो चिरं क्वापि वृत्तिः ।
यत् पूर्वं तद्धि परजनकं धीप्रवाहप्रमाणात्
वृत्तेर्भेदस्तु न विषयतो वासनाजन्य एव ॥२७॥

विज्ञानानामनुभवविषु तत्तत्क्षणावस्थितेश्च
प्रत्यात्मानं गमयति तथा चैव सत्त्वस्वरूपम् ।
यत् सत्त्वं तन्मतिविजनितं वर्तमानार्थकारि
बौद्धास्तस्मात् क्षणिकमखिलं न स्थिरं किञ्चिदाहुः ॥२८॥

नाभावः स्याद्धि जडजगतः खण्डबुद्धिं विनैवं
बुद्धिर्यस्मान्ननु पटयितुं किं घटं स्यात् समर्था ।
जन्मान्धस्यास्तु यदि विषयाद्बुद्धिवृत्तिर्भवेन्नो
रूपस्वप्नो जगति न तथा बाधितो बुद्धिवादः ॥२९॥

योऽद्राक्षीत् स स्मरति च कथं प्रत्यभिज्ञाप्रमाणं
कार्योत्पत्तौ क्षणिकसमये कारणस्यास्थितेश्च ।
न प्राग्वृत्तिः परविजननी स्वाधिकारी स्थिरात्मा
कार्यं सत्त्वे स्पृहयति ततो न क्षणध्वंसवादः ॥३०॥

देहाधारं प्रति किमपि नो कर्त्तुमीशा मतिर्या
यद्येवं नो तदधि किमपि स्यात् कथं वा प्रमाणम् ।

वृत्तीनाञ्च क्षणिकनियमेऽस्थायि सर्वं मते वः
नैतत् सत्यं नियतविषयो दृश्यते तद्विधायी ॥३१॥
द्रव्यं ध्वंसप्रवणमखिलं ज्ञायते सुष्ठु सर्वैः
तस्माच्छून्यं भवतु भुवनं नः सुषुप्तिर्यथादौ ।
उत्पत्तेः प्रागसदवगतेश्च श्रुतौ मानमस्मिन्
आसीच्छून्यं जगदिदमतो मन्यते शून्यवादी ॥३२॥
नाशो मानं न भवति यतः सूक्ष्मसत्तावबोधात्
शून्यं तत्त्वं यदि किमवतः सम्प्रति स्यान्न सर्गः ।
ब्रह्मण्येवं तदसदभिधा नामरूपच्युतार्था
यद्येवं नो कथमसति वासीदवचः सान्वयं स्यात् ॥३३॥
सोऽर्थः श्रुत्यामत उत कथं प्राक्सदुक्तिर्हि पश्चात्
चासन् प्रोक्तिर्जगत उदिता नात्र वैकल्पिकार्थः ।
तेनात्यन्तं जगदिदमसच्छून्यरूपं न चाग्रे
नासतत्त्वं न सदपि ततः शून्यवादो यथार्थः ॥३४॥
नानावृत्तिर्भवति मनसो योगविद्यासु हेतुः
मोक्षप्राप्तिः परपरिणतिस्तत्र योगावसानम् ।
भिन्नोपायाः शमदमपराः क्लेशहानौ सदुक्ताः
योगाभ्यासाच्च फलमहिमा कीर्तितो भूतिलाभः ॥३५॥
योगः प्रोक्तः प्रवरमुनिना चित्तवृत्तेर्निरोधः
रोधे नोचेद् विषयि न मनो वर्त्तते सत्स्वरूपे ।
योगैरङ्गैर्भवति हि मनः सुप्रसन्नं निरुद्धं
चेतोयोगः परमपुरुषे योगिनोक्तः स मोक्षः ॥३६॥
नाहङ्कारो भवति विलयो योगमार्गेण सम्यक्
योगे कर्त्रा पथि सुचरिते कर्तृनाशः कथं स्यात् ।
योगाद्भूतिर्भवतु न ततो मुक्तिमाप्नोति विद्वान्
अष्टाङ्गानान्तु न भगवतः साधनायां विरोधः ॥३७॥

चित्तस्यैवं विलयविधिना दृश्यभूतस्य सत्यं
नावस्थानं क्षणमपि भवेद्द्रष्टरि ज्ञानमात्रे ।
मोक्षो योगादिति तव मतेऽनित्यमुक्तिर्ध्रुवं स्यात्
अद्वैतेऽतो विकृतिरहिते द्वैतयोगोऽप्रमाणम् ॥३८॥
निःस्वार्था धीर्हरहरिगता या सती भक्तिरुक्ता
ध्यानं सारं प्रणतिसहितं मूर्तिषु प्रेम तस्याम् ।
भावावेशो विषयविरतेर्जायते भक्तिभाजां
भक्त्या वश्यो भवति भगवान् येन भक्तेः परा का ॥३९॥
एवं भक्तिः खलु सुविहिता साधनायां नराणाम्
यत्राविद्यास्थितिरवगता ध्यानभङ्गेऽसुखत्वात् ।
सान्निध्यश्चेन्नरि भगवतः पूजयापि क्षणं तत्
द्वन्द्वं नित्यं मतिविषययोर्यत्र मुक्तेे रसः कः ॥४०॥
स्नानाचामैस्तनुरमलिना जायते किं न चेतः
यत् सम्बन्धो जगति सुदृढः संशये कारणं नो ।
श्रेयान् धर्मः खलु मतिमतां स्यात् सदाचारनिष्ठा
नावज्ञेया कुशलिभिरतः सा प्रशास्तु स्वभावम् ॥४१॥
बाह्याचारान् भवदभिमतान् स्तौतु देहाभिमानी
नान्यत्तत्त्वञ्च यत उदितं सेवते तान् क विद्वान् ।
आत्मापूतः स्वत इति कथं यत्र संस्कारकर्म
तत्त्वज्ञानां विचरणपथो वै न दृष्टो भवद्भिः ॥४२॥
द्वे तत्त्वे च प्रकृतिपुरुषौ स्तो विधानेऽथ सांख्ये
कर्मप्राणा प्रकृतिरमरा विश्वसृष्टेः प्रसूर्या ।
सैकानित्या त्रिगुणसहिता सत्त्वभूता जड़ापि
कार्यं कर्त्तुं ह्यजड़पुरुषं स्यादृविनैवं समर्था ॥४३॥

( क्रमशः )

# सुखलेखनम्

[ श्रीरामधनशास्त्रिणा टिप्पण्यादिभिरुपस्कृतम् ]

( पूर्वानुवृत्तम् )

एवं सो [:] पूजने शम्भुः सुसिक्तो वारिणा जनैः(१) ॥४८(क)॥

गर्हा सम्भावनाल्पत्वमभ्यनुज्ञा[1] समुच्चयः ।

एष्वपेश्च भवान शूद्रमपि स्तौति द्विजोत्तमः ॥४९॥

---

१। इदानीमतेः सोश्चार्थविशेषेऽनुपसर्गत्वात् ताभ्यां परस्य सकारस्य षत्वाभावं विवृणोति—नातेरिति। अतिप्रवृत्तिरतिक्रमः, सा हि फलोदयेऽपि क्रियाप्रवृत्तिरूपा। पूजनञ्चार्चा प्रशंसेति यावत्। सुरिह पूजायाम्। अतिश्चातिक्रमणे पूजायाञ्च वर्त्तते। तस्मादेतदर्थे वर्त्तमानादत एवानुपसर्गादित्याशयः। अतेः सोश्च परस्य सकारस्य न षत्वमित्यर्थः। यथासंख्यमुदाहृत्य दर्शयति—अति स्तूयते सुसिक्त इति। अतेः सोश्चानुपसर्गत्वमर्थविशेषे वैयाकरणैरेवमुररीकृतम्। यदाह पाणिनिः—"सुः पूजायाम्" [ अ० १। पा० ४। सू० ६४ ], इति, "अतिरतिक्रमणे च" [ अ० १। पा० ४। सू० ६५ ] इति च। दुर्गोऽपि—"अधिपरी गतार्थौ यौ सुः पूजायां यदा भवेत्। अतिरतिक्रमे चार्थे नोपसर्गा इमे तदा॥ सुस्तुतं भवता इत्युपसर्गत्वाभावात् षत्वं न भवति। अतिस्तुतमित्यतिक्रमणे पूजायाञ्च षत्वं न भवति।" [ कारकप्र०, टी०, सू० २१० ] इत्याह। श्रीपतिरपि—"सुः पूजायाम्" [ कारकप्र०. सू० ११० [ इति, "अतिक्रमे चातिः" [कारकप्र०. सू० १११] इति चाह। वोपदेवश्च—"अत्वार्चायां स्वती नातिक्रमेऽधिः पर्य्यधी गतौ ;" [ संज्ञाप्र०. सू० १० ] इत्यभिधाय "सुस्तुतम्, अतिस्तुतम्, सुस्तौति, अतिस्तौति, अतिसिञ्चती"त्येवमुदाहरणान्यप्युदाजहार।

२। साम्प्रतमपेरर्थविशेषे कर्मप्रवचनीयत्वं व्यवस्थापयन् तत्परस्य सस्य षत्वाभावं निरूपयितुमाह—गर्हेति। गर्हा निन्दा, सम्भावना क्रियासु योग्यताध्यवसायः, अल्पत्वमल्पता, अभ्यनुज्ञा ह्यनुज्ञा, सा च जिज्ञासानन्तरमनुमतिः, समुच्चयः परस्परं क्रियासंश्लेषः। एषु एतेष्वर्थेषु वर्त्तमानादत एवानुपसर्गात्,

---

1 Ms. गर्हाँसम्भनाल्पत्व०

अपिसिञ्चेः शतं वृक्षानपि स्यादत्र वारि च ।
अपिसिञ्च द्रुमान हूस्वानपिसिञ्च स्तुहीत्यपि(२) ॥५०॥
प्रतेः परेरन्वभेश्च[2] द्वितीयाप्राप्तिहेतुकः ।
अनुस्थितो विष्णुपदीं स्त्रीं प्रतिस्थीयते[3]ऽमुना(३) ॥५१॥

---

अनुपसर्गत्वञ्च कर्मप्रवचनीयत्वादित्याशयः। अपेः परस्य सस्य न षत्वमित्यर्थः। अपेरुपसर्गत्वाभावमधिकृत्य पाणिनिराह—"अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु" [अ० १। पा० ४। सू० ६६] इति। श्रीपतिरपि—"न प्राकाम्यचार्थसम्भावनागर्हामालास्वपिः, एष्वर्थेष्वपिरुपसर्गो न भवति।" [कारकप्र०, सू० १०६] इत्याह। वोपदेवश्चाह—"अपिः पदार्थसम्भाव्यगर्हानुज्ञासमुच्चये" [संज्ञाप्र०, सू० १०] इति। दुर्गादासेनैषामुदाहरणान्येवमुक्तानि, यथा—"अपि स्तौति वृषलं ब्राह्मणक इति गर्हायाम्, अपि सिञ्चेन्मूलसहस्रम् इति सम्भावनायाम्, अपि सिञ्चतीत्यल्पत्वे, सेद्यामीति प्रश्ने, अपि सिञ्च इत्यनुज्ञायाम्, अपि सिञ्च, अपि स्तुहि इति च समुच्चये। इति। अपेरर्थमधिकृत्यामरस्तु—"गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" [नानार्थवर्गे] इत्याह।

३। इह हि पाणिनिः—"कर्मप्रवचनीययुक्ते द्वितीया" [अ० २। पा० ३। सू० ८] इति द्वितीयां विधायार्थविशेषे प्रत्यादीनां कर्मप्रवचनीयत्वमाह—"लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः" [अ० १। पा० ४। सू० ६०] इति "अभिरभागे" [अ० १। पा० ४। सू० ६१] इति च। दुर्गसिंहोऽपि—"कर्मप्रवचनीयैश्च" [कारकप्र०, सू० २२६] इति सूत्रेण द्वितीयां व्यवस्थाप्य "लक्षणवीप्सेत्थम्भूतेष्वभिर्भागे परिप्रती। अनुरेषु सहार्थे च" इत्याह। श्रीपतिश्च—"अभिरित्थम्भावलक्षणवीप्सासु" कारकप्र०, सू० १००] इति, "परिप्रती भागे च" [कारकप्र०, सू० १००], इति, "तेष्वनुः" [कारकप्र०, सू० १०२] इति च सूत्राण्युवाच। वोपदेवोऽपि—"धिक् समयानिकषे"त्यादिसूत्रे [कारकप्र०, सू० २८६] "एभिर्योगे द्वी स्यात्। वीप्सेत्थम्भावचिह्नेऽभिस्तेषु भागे परिप्रती। अनुस्तेषु सहार्थे च" इत्याह। एतावता निरुक्तेष्वर्थेषु प्रत्यादीनां कर्मप्रवचनीयत्वात् "अनुस्थित" इत्यादौ षत्वाभावः। "अनुष्ठितम्" इत्यादौ तु अनोरुपसर्गत्वादेव षत्वप्राप्तिरिति ज्ञेयम्।

---

2 Ms. परैरनुभेश्च 3 Ms. प्रतिस्थी०

प्रतेः परेश्च पञ्चम्याः[1] प्रार्थाद्विष्णुः प्रतिस्थितः(१) ।
सनस्ये षोः[2] परिसोष्यन्ति(२)ठ्यां स्तनजेः प्रकृतेस्तथा ॥५२॥

( क्रमशः )

१। इह हि पाणिनिः प्रतेः परेश्च कर्मप्रवचनीयत्वप्रतिपादनाय यथा-संख्यमाह—'प्रतिः प्रतिनिधिप्रतिदानयोः" [अ० १। पा० ४। सू० ९२ ] इति, "अपपरी वर्जने" [अ० १। पा० ४। सू० ८८ ] इति च। एताभ्यां कर्मप्रवचनीयाभ्यां योगे पञ्चमीविधानमप्याह स एव—"प्रतिनिधिप्रतिदाने च यस्मात्" [अ० २। पा० ३। सू० ११] इति, "पर्य्यपाङ्परिभिः" [ अ० २। पा० ३। सू० १०] इति च। दुर्गाचार्य्येण तु "पर्य्यपाङ्योगे पञ्चमी" [ कारकप्र०, सू० २२५ ] इति सूत्रेण परियोगे पञ्चमीमभिधाय 'प्रति'योगे पुनरवधिमात्रविवक्षया पञ्चम्युक्ता। यदाह सः—"यतः क्रिया प्रभवति सोऽवधि-रिति प्रतिना योगे प्रतिनिधिप्रतिदानं यस्माद्भवतः, ततः पञ्चमी सिद्धा [दुर्ग कारकप्र०, सू० २२५,टीका] इति। प्रतिना योगे श्रीपतिरपि सूत्रयाञ्च-कार—"प्रतिनिधिप्रतिदानयोः प्रतिना" [ कारकप्र , सू० ४५ ] इति। वोपदेवोऽप्याह—"अन्यारभ्यार्थाराद्बहिर्विनर्त्तेप्रतिपर्य्यपाङ्दिक्शब्दैर्हेतुयबर्थे च" [ कारकप्र०, सू० ३०० ] इति।

२। अत्र "सुनोतेः स्यसनोः" [ अ० ८। पा० ४। सू० ११७] इति पाणिनिः। एतत्सूत्रीयव्याख्यायां जयादित्य आह—"सुनोतेः सकारस्य

## वृत्तवर्त्तिका

प्रागिव वर्षेऽस्मिन्नपि नियमेन संस्कृतसाहित्यपरिषदि पूजिता सारस्वत-विभवप्रियैर्वाणी नवीने संस्कृतसाहित्यपरिषद्भवने। तत्र पूजादिवसे बहवः पारिषदाः सानुरागमुपगता पूजामहोत्सवं व्यवर्द्धयन्। परिषद्-विद्यालयाध्यापकैरेव यथानियमं निर्वर्त्तिता देव्याः सहावश्यकैरङ्गैः पूजा। वितीर्णश्च यथाकालमुपगतेभ्यः प्रसादो यथासम्भवम्। प्रार्थयामहे पूजिता देवी नित्यं परिषदो हितं विधेयादिति।

---

1 Ms. पञ्चमस्यैः 2 Ms. सनस्यैषोः

# Sanskrit Sahitya Parishat Series

(Revised up to April, 1951)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14 ; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C1073

Vol. XXXIV. March 1952

No. 11. १८७३-शकीये

३४श-वर्षस्य फाल्गुने

११श संख्या मासे




# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६).
Foreign price -1

## मतिमञ्जरी

अस्ति तावत् सम्प्रति राष्ट्राधिकारस्यायं नियमो यत् यदि तदधीनाः केचन कर्माधिकृता नियमितकार्य्यादतिरिक्तं किञ्चन कार्य्यमर्थलाभाय कुर्य्युस्तदा तत्र राष्ट्राधिकारस्य साक्षादनुमतिरपेक्षिता भवति। तदनुमतिं विना तत्कार्य्ये समनुष्ठिते किलाधिकृताः सुतरामपराद्धा भवन्ति। वयमत्र मन्यामहे,—राष्ट्राधिकारस्य साक्षादनुमत्यपेक्षा सर्वत्र चेद् बहुत्रैव महद-सौकर्य्यं पदं कुरुते। सन्ति राष्ट्राधिकारमुपजीवतां कर्माधिकृतानां साक्षात् सर्वत्रैव केचिन्नायका ये तदीयदोषादोषौ विविच्य तान् परिचालयन्ति यथा महाविद्यालयेष्वध्यक्षा निम्नविद्यालयेषु च प्रधानशिक्षकाः। तादृशा आन्तरालिका नेतार एव तेषां परिचालका हिताहितयोरनुकूलाश्च। त एव यदि तदनुमतिप्रदाने समर्थाः स्युः, तदा कर्माधिकृतानां सुमहत् सौकर्य्यं सम्पद्यते कृत्येषु। अस्माभिः केचिदीदृशा विज्ञायन्ते ये तदनुमतिलाभाय समनुष्ठेयात् परिकराद् भीतास्ततो निवर्त्तन्ते। तेन जायते साधारणानां महती क्षतिः। तदत्र राष्ट्राधिकारस्य विवेकपूर्णां दृष्टिमाकर्षामः।

---

## नवसूक्तिमालिका

हे बाल! नित्यं गुरवस्त्वदीया हितं त्वदीयं परिचिन्तयन्ति।
तस्मात्तदादेशमतीत्य लोके न वर्त्तितव्यं त्वयका कदाचित्॥
कामोपसृष्टेन हृदा त्वमेष न यत्र संपश्यसि दोषलेशम्।
ते तत्र शुद्धेन हृदा समीक्ष्य दोषं ततस्त्वां विनिवर्त्तयन्ति॥
मते गुरूणां चिरमप्रमत्तः क्षेमं सदा विन्द महीतलेऽस्मिन्।
कर्त्तव्यमार्गे नियतं प्रमाणं नैवात्मबुद्धिं परिचिन्तय त्वम्॥

[ निबन्धकः—अध्यापकः श्रीदीनेशचन्द्रभट्टाचार्य्यः ]

सुविदितमेव विदुषां छन्दोगानां कर्मानुष्ठानपद्धतिकारस्य तत्रभवतो भट्टभवदेवस्यापर नाम बालवलभीभुजङ्ग इति। तस्य सर्व्वेष्वेव उपलब्धेषु ग्रन्थेषु तन्नाम पुष्पिकादिषु दृश्यते,—प्रायश्चित्तप्रकरणस्य षण्णां परिच्छेदानामन्तेषु (पृ० ३६, ७१, ८०, १००, १२७, १३२), सम्बन्धविवेके, तौतातितमततिलके नाम मीमांसाप्रकरणे कर्मानुष्ठानपद्धतौ च। किञ्च, भट्टभवदेवस्य कुलप्रशस्तिः काचित् 'तस्यैव प्रियसुहृदा' वाचस्पतिनाम्ना रचिता शिलाखण्डे उत्कीर्णा अधुना भुवनेश्वरे अनन्तवासुदेवस्य मन्दिरभित्तौ संलग्ना दृश्यते। शिलाखण्डोऽयं वस्तुतः ढक्कानगर्य्यां एव कलिकातायां प्रेषितः आसीत्। विक्रमपुर एव क्वचिद् आविष्कृतोऽयमिति सम्भाव्यते। परन्तु १८३७ खृष्टाब्दे अयं भ्रान्त्या उत्कले प्रेरितोऽभूदित्याश्चर्य्यं तत्त्वं वर्षशतादूर्ध्वमधुना ज्ञायते। भवदेवस्य जीवनकाले रचितायामस्यां प्रशस्तौ श्लोकोऽयं दृश्यते :—

यस्य खलु बालवलभीभुजङ्ग इति नाम नाहृतं केन।
मीमांसयापि सपुलकमाकर्णित-त्रणितोद्गीतम्॥ ( २४ श्लोक० )

अन्ते च लिखितमास्ते, "प्रशस्तिरियं बालवलभीभुजङ्गनाम्नो भट्टश्रीभवदेवस्य"। मीमांसाप्रकरणारम्भे भवदेवेन स्वयमेव लिखितम् ( २-३ श्लोक० ) :—

मामध्ययनदशायामुवाच वाचं दर्शि (?) स्वप्ने।
बालवलभीभुजङ्गापरनामा त्वमसि भवदेव॥
तेनायमुद्यमो मे विद्यादर्पान्न जातु संजातः।
तस्मादिहावधानं विधातुमधिकुर्व्वते सुधियः॥

कः खलु अक्षरार्थोऽस्य नाम्नः इत्यत्र महती विप्रतिपत्तिः। तत्र सिद्धान्तनिर्णये उद्यता भवन्तु संस्कृत-साहित्यपरिषदः सदस्या विद्वत्प्रकाण्डाः इति नः प्रार्थना। पत्रिकापृष्ठे च समुचितमुत्तरमत्राशास्महे। त्रिविधा खलु व्याख्यास्माभिर्दृष्टा—

१। बालवलभीनाम्नी काचिन्नगरी गौड़देशे आसीत। तत्र प्रमाणं तावत् काचित् सन्दिग्धार्था पङ्क्तिः सन्ध्याकरनन्दिरचितस्य रामचरित-नाम्नः श्लिष्टकाव्यस्य टीकायां ;—तथा हि, "विक्रम इति देवग्रामप्रतिबद्ध-वसुधाचक्रवाल'बालवलभी'-तरङ्गबहलगलहस्तप्रशस्तहस्तविक्रमो विक्रम-राजः।" तत्रत्यानां प्रेमास्पदत्वात् भवदेव उपनायकपर्य्यायभुजनाम्ना समाख्यातः ( प्रायश्चित्तप्रकरणस्य भूमिका, पृ० ३ )।

२। "काचित् बलभी पठतां बहूनां ब्राह्मणबालानामध्ययनशाल आसीत। तत्र पठन् कश्चित् गौड़बालोऽतिसौबुद्ध्यान्मुखरत्वाच्च निखिल-बालानां भयप्रदत्वेन बालवलभीभुजङ्ग इति गुरुणा व्यपदिष्टः" ( काव्य-प्रकाशस्य सुधासागरटीका, प० १२१ )।

३। यवद्वीपीयसंस्कृतभाषायां प्राचीनकाले 'छात्र'पर्य्यायः भुजङ्ग-शब्दः आसीत्। तस्यैवात्र प्रयोगेण बालवलभीनगर्य्याः छात्र इत्यर्थ एव समीचीनः प्रतिभाति कस्यचिद् गवेषकस्य (I. H. QXXVII. p. 81 )—भारतीयकोषलब्धो भुजङ्गशब्दार्थस्तु नात्र सुष्ठु लगति इति हि तस्याभि-मतम्।

---

# वेदान्तानुभूतिकारिका

[ निबन्धकः—श्रीकालीकुमारमिश्रकाव्यवेदान्ततीर्थः एम-एः ]

( पूर्वानुवृत्ता )

कूटस्था ये तु बहुपुरुषाश्चेतना निष्क्रियाश्च
सौदासीन्या अनुभवरसा निर्गुणा निर्विकाराः।
तेषामर्थे प्रकृतिरनिशं भोगमोक्षौ विधत्ते
शय्यादीनामिव सुविदिता वृत्तिरस्याः परार्था॥४४॥
एकं सांख्यं जगति तनुते विंशतिं पञ्च चार्थान्
सर्वज्ञञ्च त्रिभुवनकरं नेश्वरं स्वीकरोति।

धीरेका वै भृशमभिमता कर्मणां नात्र मानम्
मोक्षः पुंसः पृथगवगमः स्यादनादेः प्रकृत्याः ॥४५॥

सांख्यं तत्त्वं श्रुतिभिरपि च ज्ञापितत्वात् सुमान्यं
प्राज्ञैः पुंभिः कथमगणितं साम्यभावं प्रधानम्।
अव्यक्ता स्यादखिलजगतो यज्जडत्वात् योनिः
नेत्थं किञ्चिद् वदति कपिलः सांख्यकारोऽप्रमाणम् ॥४६॥

सांख्योक्ता चेत् प्रकृतिरचितिः कर्म शक्ता विधातुम्
कस्मान्मृन्न स्वत इह घटं कुम्भकारं विनैवम्।
विश्वोत्पत्तेः प्रकृतिरथ नो हेतुरेका कदापि
यस्याः सत्ता पुरुषकलिता दृश्यते केवलं वै ॥४७

यद्भोक्तृत्वे सति नहि भवेदात्मकूटस्थनातः
भोक्तृत्वादिः पुरुषनियमो यस्त्वयोक्तः कथं स्यात्।
भोक्ता जीवः परमपुरुषो निर्गुणस्त्वेक एव
श्रुत्या बाधां पुरुषबहुता तादृशी नापनीया ॥४८॥

एकस्मिन् वै सति च पुरुषे सर्वमुक्तिप्रसङ्गः
कस्मिन् मुक्ते न भवति तदाज्ञानभेदान्नराणाम्।
यावद्द्वैताः प्रकृतिसहितास्तावदोषोऽस्ति सत्यम्
नास्वीकारो वसु भगवतोऽवैदिके च प्रधाने ॥४९॥

द्वैतास्तित्वे सति तव मते केन वा सांख्यदिष्टं
मानं तत्त्वं न च तदधिकं किञ्चिदास्ते विभक्तम्।
वेदान्तेन व्यभिचरति नो वस्तु तन्त्रप्रधाने
सांख्यं मोक्षे न तु सममतं स्यात् प्रधाने स्वतन्त्रे ॥५०॥

सर्वज्ञात्मा त्रिभुवनपतिः कारणं स्यान्निमित्तम्
नोपादानं भवति जगतः पक्षपातित्वदोषात्।
सम्भोगाप्तेः कथमपि च तन्नास्ति वेदान्तिकानाम्
चैतन्यत्वात् परमशरणं तार्किकाणां विधानम् ॥५१॥

उत्सर्गेऽन्या मृदिव यदि च ब्रह्मणः स्यादपेक्षा
नापूर्णत्वाद्भवति च तथाद्वैतसत्याच्छ्रुतीनाम् ।
सर्वे जीवाः कृतिफलभुजः केन वैषम्यभोगो
मायाकार्य्याज्जगत उभयं ब्रह्मण कोऽत्र दोषः ॥५२॥

वस्त्वद्वैतं यदि हि नियतं निश्चितं तद् विशिष्टम्
शुद्धं ज्ञानं नहि तदधिभृद् वासुदेवः परात्मा ।
जीवोपास्यः स खलु वरिना तं वरेण्यं वृणीते
मायाविद्या किमपि मनुते नो विशिष्टाद्वयीशः ॥५३॥

वैशिष्ट्यं यद्विगणय चितोऽद्वैतनस्तत पृथक् किम्
नैतद् बाह्यं तदनृतमयं केवलं नामरूपम् ।
मायाविद्या घटनविधये कल्पिता नात्र दोषः
भेदोक्तिर्नो समरसतया साधु रामानुजस्य ॥५४॥

जीवाजीवादय इह मताः सप्त जैनैः पदार्थां
भेदा भूयो विवसननये नाम पञ्चास्तिकायाः ।
सारस्तेषामवतरति वै सप्तभङ्गीनयोऽत्र
रत्नत्रय्या तनुपरिमितः सेवते मोक्षमात्मा ॥५५॥

क प्रामाण्यं प्रतिविषयिणि ज्ञायते चास्तिनास्त्योः
जैनन्याये कथमपि जगत् किश्च निर्धारितं नो ।
आत्मा पूर्णो बृहदणुगतो नास्य सङ्कोचवृद्धी
स्याज्जैनानां सुविमतमते ज्ञानिनां नादरोऽतः ॥५६॥

वादिव्रातैः स्वमतकुशलैर्युक्तिमित्थं विधाय
वेदान्तात्मा निजकररुचा भासमानोऽपि साक्षात् ।
छन्नीभूतो जड़परधिया विस्मृतश्च स्वतो नः
निर्वाणाय प्रभवति कथं चेतसः शान्तयेऽसौ ॥५७॥

तेनाध्यासो जगति विदितोऽसम्भवं साधयन यः
द्रष्टृदृश्यं पृथगपि मिथः शास्ति तादात्म्यभावम् ।

अज्ञानोत्थः स विविधकरस्तन्मतिः स्यादतस्मिन्
तस्माज्जीवे हि तदधिकृताश्च प्रमाणप्रमेयाः ॥५८॥
अज्ञानाद् यद्धि जगदनृतं सत्यमाभाति देवे
रज्जौ सर्पभ्रममनिरिवाध्यास एवोच्यते तत् ।
मिथ्यारूपेऽस्तिभवजनके किञ्च तत्र प्रमाणं
शुद्धे सत्त्वे श्रुतिमतबहुप्राप्तयेऽस्य प्रयोगः ॥५९॥
नामाध्यासो न च सदसतोरेक आसीदनादिः
ज्ञाते तत्त्वे स तु खकुसुमं नैव किञ्चित् करोति ।
नानाकारं सति न विदिते स प्रपञ्चं प्रसूते
सोऽवक्तव्यो भवभयकरोऽध्यास एवात्ममाया ॥६०॥
सत्तामात्रे भुवनरचनां पण्डितोऽध्यासमाह
द्वैतज्ञाने स च सुविहितो नैति नाशं कदाचित् ।
सत्ये मिथ्यामतिरसति वा सत्यबुद्धिर्यतः सः
दुःखाशेषव्यवहृनिकरो भोक्तृभोग्येन्द्रियेषु ॥६१॥
काध्यासस्य स्थितिरवगता ब्रह्मणि ज्ञानमात्रे
या जीवानां भ्रमविजनिता दृश्यते दृश्यसत्त्वे ।
तेनाध्यासो न खलु सुगमस्तत्र विश्वाकृतिश्च
नेदं सत्यं जगदथ भवे निष्फलः स प्रयासः ॥६२॥
मिथ्याभूता दधति विकृतिं रज्जुसर्पादयः किम्
येनाध्यासः सृजति पुरुषे बोधमात्रे विकारम् ।
जीवाध्यासो भ्रमविरहिते सत्स्वरूपे च माभूत्
विश्वाकारा परमपुरुषे कल्पना भासतान्तु ॥६३॥
अध्यस्तत्वे भवति जगतः किं प्रमाणं सुलभ्यम्
सत्यं सर्वं वरमथ भवेदस्य भावोपलब्धेः ।
स्वाविद्यायान्तु सदवधृतो दृश्यते यस्य भावः
तस्यास्तित्वं कथमविरतं स्यान्निजं सत्यबोधे ॥६४॥

# सुखलेखनम्

[ श्रीरामधनशास्त्रिणा टिप्पण्यादिभिरुपस्कृतम् ]

( पूर्वानुवृत्तम )

सदेश्च(१) परिषस्वञ्जे विषसादात्र(२) निर्धनः ।

अङि द्विरुक्तेः सहतेर्यथा च पर्यसीषहत्(३) ॥५३॥

---

मूर्द्धन्यादेशो न भवति स्ये सनि च परतः । अभिसोष्यति, परिसोष्यति, अभ्यसोष्यत्, पर्य्यसोष्यत् । सनि सुसूषति" इति । श्रीपतिरप्यसूत्रयत्— "स्ये च सुञः" [षत्वप्र०, सू० ४७] इति । "गीकः स्तु-स्तुभ-सो सुवान्ते"-त्यादि [पवत्, सू० ५७२] हि वोपदेवीयं सूत्रम् । एतत्सूत्रव्याख्याने दुर्गादास आह—"स्यान्तस्य तु विसोष्यति, विसविष्यति इत्यादौ न षत्व"मिति ।

१ । निमित्तात् परस्य स्वञ्जेः सदेश्च प्रकृतेष्ठ्यां परायां सस्य षत्वं न स्यादित्यर्थः । अत्र "सदिष्वञ्जोः परस्य लिटि" [अ० ८। पा० ४। सू० ११८] इति पाणिनिः । "सदिस्वञ्जोः परोक्षायामभ्यासात्" [षत्वप्र०, सू० ४६] इति श्रीपतिः । "सत्स्वञ्जोष्ठ्यां नाखेः" [ पवत्, सू० ६३४] इति चाह वोपदेवः । वोपदेवेन सूत्रे सदेरुदाहरणं नोक्तम्, तत्तु दुर्गादासेन "विषसाद" इति स्पष्टीकृतम् ।

२ । इदानीं स्वमतेन प्रागुक्तमुदाहरति—परीति ।

३ । अत्र "स्तन्भुसिवु-सहां चङि" [अ० ८। पा० ४। सू० ११६ ] इति पाणिनिः । "उपसर्गात् स्तन्भु-सिवु-सहां चणि" [षत्वप्र०, सू० ४५] इति श्रीपतिः । "अङि तु पर्य्यसीषहध्" [पवत्, सू० ५७२] इति चाह दुर्गादासः ।

सुस्थादेश्च(१) प्रतिस्तब्धः(२) पदादेर्दधि सिञ्चति(३) ।
दध्यादे[ः] क्ये परे सो यः स्यात्तस्य न[1] दधिस्यति(४) ॥५४॥

इति षत्वम् ।

---

१। इह हि "न सात् कुसरधूसरादिषु" [षत्वप्र०, सू० ४१] इति श्रीपतिसूत्रम् । "सुस्थः सुस्थितिः, दुःस्थः दुःस्थितिः, परिस्थः, परिस्थितिः" इत्येतानि च तदुदाहरणानि । दुर्गादासश्चात्र "परिस्थितादेर्न" [अजन्तपु०, सू० १११ ] इति सूत्रमुक्त्वा "परिस्थितः, सुस्थितिः, दुःस्थिति"रित्येतान्युदाजहार ।

२। अत्र "प्रतिस्तब्धनिस्तब्धौ च" [ अ० ८। पा० ४। सू० ११४ ] इति पाणिनिः। "निप्रतिभ्यांस्तब्धस्य" [ षत्वप्र०, सू० ४४ ] इति चाह श्रीपतिः । दुर्गादासेन तु "परिस्थितादेर्न" [अजन्तपु०, सू० १११] इति इति सूत्रमभिधाय "प्रतिस्तब्धः, निस्तब्धः" इत्यादीन्युदाजहार ।

३। अत्र हि "सात् पदाद्योः" [अ० ८। पा० ४। सू० १११] इति सूत्रे जयादित्येनोदाहृतम् "पदादेः। दधि सिञ्चति, मधु सिञ्चति" इति। श्रीपतिरपि "सिचश्चेक्रीयिते" [षत्वप्र०, सू० ४३] इति सूत्र आह—"उपसर्गाश्रयोऽपि बाध्यते" इति। एतद्व्याख्याने गोपीनाथेनोक्तम्—"परो हि भिन्नपदेऽपि प्राप्तौ न स्यात् पदादेरिति दधिसिञ्चतीत्यादाविव प्रतिषेधे प्रसजति उपसर्गाश्रयादिति प्राप्तिं मन्यते" इति । एतेन श्रीपतिमतेऽपि दधिसिञ्चती'त्यादौ षत्वाभाव उक्तः ।

४। अत्राह वोपदेवः—"क्ये सः षो न स्यात्" [ लिङ्प्र०, सू० ८४६] इति । एतदेव व्याख्याति दुर्गादासः—"क्ये सः षो न स्यादिति लेः कृतस्य सनादेशस्य सः षो न स्यादित्यर्थः। तेन दधिस्यति मधुस्यतीत्यादौ न षत्वम्" इति ।

---

1 Ms. च

[ णत्वविधिः ]

ऋवर्णाद्रेफतः षाच्च नो [ऽ]तवर्गभयुग् भवेत् ।
णो[1]ऽपदान्ते(१) नृणां नॄणां तीर्णं पुष्णातु(२) मां हरिः ॥

न तु कृन्तति क्षुभ्नाति(३) पितॄनित्येवमादिषु(४) ।
कवर्गेण पवर्गेण व्यवाये अज्ह्यैरपि ॥

१। तवर्गश्च भश्च तवर्गभौ तौ युनक्ति इति तवर्गभयुग्, स न भवतीति अतवर्गभयुग्, यस्तवर्गयुक्तो भकारयुक्तश्च न भवतीत्येवंभूत इत्याशयः। नः नकारः ऋवर्णात् ऋकारात् रेफाद् रकाराद् षात् मूर्द्धन्यषकाराद् वा परः अपदान्ते स्थितश्च णो मूर्द्धन्यणकारो भवतीत्यर्थः।

इह हि "रषाभ्यां नो णः समानपदे" [अ० ८। पा० ४। सू० १] इति पाणिनीयं, "रषृवर्णेभ्यो नो णमनन्त्यः स्वरहयवकवर्गपवर्गान्तरोऽपि" [कारकप्र०, सू० २५४] इति शार्ववर्मिकं, "पूर्वपदष्रॄर्नाम्नि णो नोऽवकुप्वन्तरेऽपि" [अजन्तपुं, सू० १०७] इति च वोपदेवीयं णत्वसूत्रम्।

२। अत्र नृणामिति ऋवर्णात्, तीर्णमिति रेफात्, पुष्णातु इति च षकारात् परस्य नकारस्य णत्वविधावुदाहरणम्।

३। इदानीमतवर्गभयुगित्यस्य व्यावृत्तिमाह—न तु कृन्ततीत्यादिना। तत्र कृन्ततीति तवर्गयुजः क्षुभ्नातीति च भयुजो नकारस्य णत्वनिषेधपक्ष उदाहरणम्। अत्र "क्षुभ्नादिषु च" [अ० ८। पा० ४। सू० ३९] इति पाणिनेः, "क्षुभ्नादेश्च" [णत्वप्र०, सू० ३७] इति श्रीपतेः, "क्षुभ्नादेः" [अजन्तपुं०, सू० १०७] इति च दुर्गादासस्य सूत्रम्।

४। अपदान्त इत्यस्य व्यावृत्तिं दर्शयति—पितॄनिति। अपदान्तत्वादत्र नस्य न णत्वम्। तथाच पाणिनिना सूत्रितम्—"पदान्तस्य" [अ० ८। पा० ४। सू० ३७] इति।

1 Ms, नौ

यथा मूर्खेण गर्वेण रामेण हरिणारिणा(१)।
उरःकेण बृंहणञ्च(२) सूर्येण त्रस्नुरत्र न(३)॥

---

१। व्यवायो व्यवधानम्। कवर्गेण पवर्गेण अज्हैयैरपि च व्यवाये व्यवधाने सति नस्य णत्वमित्याशयः। दुर्गमते वोपदेवमते चेदं स्पष्टम्। पाणिनिना पुनरिह "अट्कुप्वाङ्नुम्व्यवायेऽपि" [अ० ८। पा० ४। सू० २] इति पृथक् सूत्रितम्। मूलकारमते कवर्गव्यवाये 'मूर्खेण', पवर्गव्यवाये 'रामेण', अज्व्यवाये 'हरिणा' तथा 'अरिणा', सानुस्वारहकारव्यवाये 'बृंहणम्', यव्यवाये 'सूर्येण' इति चोदाहरणम्। यत् पुन'र्गर्वेण' इत्युदाहरणं' तत्तु अन्तस्थवकारस्य व्यवधान इति ज्ञेयम्। तद्व्यायेऽपि णत्वस्य व्यवस्थानात्। यदुक्तमुदाहरणमुखेण दुर्गाचार्यैः—"वान्तरः—पर्वेणा" [कारकप्र०, सू० २५४] इति।

२। ननु अनुस्वारादयो हि व्यञ्जनस्थानीयत्वात् स्वरवर्णेभ्यः पृथग्-भूताः, तत् कथमेतद्व्यवाये णत्वसिद्धिः? मैवम्, अनुस्वारादयो योगवाहाः, तस्माण्णत्वविधावेषां स्वरत्वं व्यञ्जनत्वञ्चेष्टे वैयाकरणैः। तदुक्तं श्रीपतिना "व्यञ्जनता स्वरसन्धौ स्वरता णत्वविधौ योगवाहानाम्" [सन्धिप्र०, सू० ८६] इति। दुर्गादासेनापि "चत्वारो योगवाहाख्या णत्वकर्मण्यचो मताः" [अजन्तपुं, सू० १०७] इत्युक्तम्। योगवाहाश्चानुस्वार-विसर्गजिह्वामूलीयो-पध्मानीया एव। तस्मादेतद्व्यवायेऽपि णत्वं स्यादेव। एतदेव तिङ्मात्र-मुदाहरति—उरःकेणेत्यादिना। तत्र 'उरःकेणे'ति विसर्जनीयव्यवाये 'बृंहण'-मिति चानुस्वारव्यवाय उदाहरणमुन्नेयम्। अन्यदूह्यम्।

७। इदानीमुक्तादन्यव्यवधाने नकारस्य णत्वाभावं दर्शयति—त्रस्नुरिति। सकारेण व्यवहितत्वात् त्रस्नुरित्यत्र नस्य न णत्वमित्याशयः।

इक्षुः प्लक्षः प्र-पीयूक्षा कार्ष्यान्तः[1] खदिरः शरः[2] ।
निराम्रावप्यमीषाञ्च बनस्येक्षुवणं यथा ।
अन्तर्वणं निर्वणञ्च प्रवणञ्चैवमादयः(१) ॥

१। अत्र "प्र-निरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि" [ अ० ८। पा० ४। सू० ५ ] इति पाणिनिः। "प्र-निरन्तरिक्षुप्लक्षशराम्र-कार्ष्यपीयूक्षाखदिरेभ्यः" [ णत्वप्र०, सू० ४ ] इति चाह श्रीपतिः। मूल-कारेणोहादिपदग्राह्यत्वात् सर्वाण्युदाहरणानि नोक्तानि। श्रीपतिना पुनस्तानि "प्रवणम्, निर्वणम्, अन्तर्वणम्, इक्षुवणम्, प्लक्षवणम्, शरवणम्, आम्रवणम्, कार्ष्यवणम् पीयूक्षावणम्, खदिरवणम्" इत्येवमुदाहृतानि ज्ञेयानि। इह हि "शराम्रकार्षपीयूक्षाखदिरप्रनिरन्तरिक्षुप्लक्षेभ्यः" [ अजन्तपु०, सू० १०७ ] इति दुर्गादाससूत्रम्। एतन्मते "कार्षवण"मिति निर्यकारमुदाहरणम्।

## वृत्तवर्त्तिका

प्रतिवर्षं भारते वर्षे दोलयात्रायां सपरिकरो महानानन्दः समुपभुज्यते लोकैः। न केवलं दोलयात्रायामेव किन्तन्यत्रापि महोत्सवेषु। यावद् यावद् वर्षाणि व्यतिक्रामन्ति तावत्तावदेव महोत्सवेषु लोकानामानन्दस्य मात्रा परिक्षीयते। कुतः खल्वेतत्? आनन्दहेतुभूतशुभादृष्टस्य क्रमेण स्वल्पी-भावादिति नैष्ठिकाः। कुक्षिभरणादिव्यापारेष्वेव नितरामभिनिवेशादिति पौरुषप्रवणाः। यथा तथा वा भवतु वर्त्तमाने वर्षे दोलयात्रायामानन्दोपभोगस्य तत्परिकराणाञ्च सुतरामल्पीभावसन्दर्शनेन प्राचीनकालात् प्रभृत्युत्तरोत्तरं प्रतिवर्षमेव सम्भूतदशाविचारेण 'जन्मसंस्कारविद्यादेः शक्तेः स्वाध्याय-कर्मणोः। ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्'। इत्याचार्य्यवचन-तात्पर्य्यं यथार्थं पश्यामः।

1 Ms. कार्षान्त०

2 Ms. सरः

# Sanskrit Sahitya Parishat Series

**(Revised up to April, 1951)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. I. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM.Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhāttacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of the game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—

*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXIV.
No. 12.
३४श-वर्षस्य
१२श-संख्या




April 1952
१८७३-शकीये
चैत्रे
मासे

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)।
Foreign price 1

## यत्किञ्चिदावेदनम्

प्रियपाठकमहाभागाः, प्राप्तकालं किञ्चिद् विज्ञाप्यते युष्मासु, यदि सादरमिदमाकर्ण्यत, तदैवास्य साफल्यं मंस्यामहे।

अपि नाम परिषदं प्रति प्रेमवन्तो भवन्तो ननु? यद्येवं, तदा कथं समुपहन्यमानामप्यकाण्डे दुरवस्थाराक्षस्या परिषदमिमां प्रेयसीं नोत्सहध्वे जीवयितुम्? जानन्त्येव भवन्तो यत् परिषदियं कियतः कालात् प्रागात्म-प्रतिष्ठायै कलिकातापौरसभादत्तं किञ्चित् स्थानमधिगत्य तत्रात्मनो वासगृहं रचयितुमारभ्यापि किञ्चिन्मात्रं निर्मायैव महासमरसम्भूत-दौर्मूल्यादिभिः कारणैरर्थाभावेन च महता नारब्धं समापयितुं समर्थेति।

सेयं सम्प्रति असमाप्तं तत् समाप्तं कर्त्तुमुद्यता पुनरप्यर्थाभावेन मनो-गतं कृत्यमनुष्ठातुं न शक्नोतीति अहो निन्दा, अहो त्रपा, अहो न्यक्कारः संस्कृतविद्यावतां सर्वेषां परिषत्प्रणयिनाम्। तदावेद्यते परिषत्प्रेयःसु युष्मासु यत्, प्रियतमामिमां परिषदं यदि प्रतिष्ठावतीं प्राणवतीञ्च द्रष्टुमिच्छथ, तदा सदयं प्रेषयत यथाशक्ति साहाय्यं वक्ष्यमाणसङ्केतेन परिषत्प्रणयिन्याः प्रासादनिर्माणमधिकृत्येति।

सङ्केतः—संस्कृत-साहित्य-परिषत्-

सम्पादकः, श्यामबाजार

कलिकाता-४

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्म' प्रकाशयतु धीमताम् ॥

| Vol. XXXIV. | १८७३-शकीये चैत्रे | April |
| --- | --- | --- |
| No. 12. | ३४श-वर्षस्य १२श-संख्या | 1952. |


## श्रीश्रीवासन्तीमङ्गलम्

कैलासोल्लसितोत्सवा शिवमयी मायाप्रमेयोदया
लक्ष्मीं वागधिदेवताञ्च दधती पार्श्वद्वये सुस्मिताम् ।
विघ्नेशेन तथा गुहेन सहिता शूलेन भिन्नासुरा
सिंहस्था हिमशैलजा दशभुजा देयादमेयं शिवम् ॥

---

## मतिमञ्जरी

नियत्यनुसारिसुखदुःखसम्पर्केण व्यतीतो वत्सरः। वर्षारम्भे सम्भावितेषु कतिचिद् विघटितानि कतिचिदचिन्तितानि समुपन्नतानि। एवमेव सम्पद्यते प्रतिवर्षम्। तथापि 'न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत प्राप्य चाप्रियम्' इति भगवदुपदेशान्न तेन सुखदुःखाभिघातेन चित्तमनु बध्नाति काचिद् विकृतिः सताम्। नियमानुगुणे पथि विचरन्तः सन्तः

सम्पादयन्ति स्वकं कृत्यजातम्। अत एव परिषद् यथापूर्वमर्वाचीनेऽपि वर्षे नातिप्रहर्षा नापहर्षा च सम्पादयितुमर्हत्यद्य वर्षशेषाभिनन्दनं पारिषदानाम्। अतीतपथं विंशति संवत्सरे ये नाम परिषद्बान्धवाः साभ्युदयास्तेषामभ्युदयोदयेन 'परमानन्दं' तथा ये सापायास्तेषामपायसमुदयेन दुःखाभिघातं विनिवेदयामः।

ये तावत् पारिषदा इतरे वा परिषदः समभ्युदयाय पत्रिकायां प्रकाशनार्थमनर्घाणि निबन्धरत्नानि प्रदत्तवन्तः, यथाशक्ति द्रविणानि विसृष्टवन्तः, ग्रन्थादिप्रदानेन परिषदमुपकृतवन्तः प्रयत्नविशेषांश्च विविधैर्मार्गैराचरितवन्तः, तेषां भूयसीं कृतज्ञतां विज्ञापयन्तः पुरोवर्त्तिन्यपि वर्षे तत्र तत्र तैः करुणां करिष्यमाणामभिलषामः।

# नवसूक्तिमालिका

स्वशक्तिमानं परिचिन्त्य धीरैः प्रतिश्रुतिः कृत्यविधौ प्रदेया।
इतोऽन्यथा मानधनादिहानिर्हीनत्वमत्युत्कटमादधाति॥
प्रयोगतः शक्तिरुपैति वृद्धिं तस्मादसौ कृत्यविधौ प्रयोज्या।
आलस्यदोषोपहता हि सैषा क्रमेण मालिन्यमलं वृणीते॥
स्रोतःसमानः समपैति कालः क्षणादिभेदेन विना निरोधम्।
विचार्य सोऽयं सफलो विधेयः कृत्यैः स्वशक्त्या किल साधनीयैः॥

( निबन्धकः—श्रीश्रीजीवन्यायतीर्थ एम् एः )

गौरीतण्डुलचौरं तुण्डिलगणेशं ऊर्द्धं गदो धावन।
उन्दुरुं प्रति सहास्य-षड़ास्यकरवारितः पायात् ॥

नान्द्यन्ते सूत्रधारः। अत्रत्यसंस्कृतसाहित्यपरिषदो वार्षिकाधिवेशने समागतानां सतां विनोदाय किमपि रूपकं प्रयोक्तव्यमिति समुद्बोधितोऽस्मि बान्धवैः। तत् कतमं नाम रूपकं निरूपयामि प्रयोगाय।

प्रविश्य विदूषकः। भाव! परित्ताअदु परित्ताअदु मं। हदोह्मि मुसिदोह्मि।

(भाव! परित्रायस्व परित्रायस्व माम्। हतोऽस्मि, मुषितोऽस्मि।)

सूत्र०। कथमस्मच्चिरमित्रं वयस्यः प्राप्तः। वयस्य! कथमसि सम्भ्रान्तः?

विदू०। भाव! महन्ते ज्जेव प्पच्चूषे पड़िवेसिणां चीक्कारेहिं जाव पड़िबोधिदोह्मि दाव शुणामि चोरो पलाअदि त्ति। ता परित्ताअदु मं।

(भाव! महत्येव प्रत्यूषे प्रतिवेशिनां चीत्कारैर्यावत् प्रतिबोधितोऽस्मि, तावत् शृणोमि चौरः पलायत इति। तत् परित्रायस्व माम्।)

सूत्र०। वयस्य! चौरनिर्गमानन्तरं कथं परित्रातव्यो भवसि? चौरे पलायिते किं ते वर्द्धतेतरां बुद्धिः।

विदू०। आ हदास! लोअलोअणदो चोरो निक्कन्दो विअ प्पड़िभादि, सो उन चिट्ठदि अन्धआरे घरत्तणे खट्टादले अलिन्दे वा निहुदं णिलीणो। तदो ओसरं लम्भिअ सव्वं चोरेदि। ता परित्ताअदु मं।

(आ हताश! लोकलोचनात् चोरो निष्क्रान्त इव प्रतिभाति, स पुनस्तिष्ठति अन्धकारे गृहकोणे खट्टातले अलिन्दे वा निभृतं निलीनः। ततोऽवसरं लब्ध्वा सर्वं चोरयति। तत् परित्रायस्व माम्।)

सूत्र०। भो जानामि ते विभववित्तरम्। निर्द्रव्यस्यापि तव चौराद् भयमिति मे हास्यमुदेति।

विदु०। भो हस हस, दलिद्दस्स भअम्पि धनिआणं हस्सं उप्पादेइ। परिधेअमेत्तसम्बलस्य मे जइ वसनं अवहरीअदि तदो इमस्सिं लोअसमाजे का गई मे भवे त्ति चिन्तेहि।

[भो हस हस, दरिद्रस्य भयमपि धनिकानां हास्यमुत्पादयति। परिधेयमात्रसम्बलस्य मे यदि वसनमपह्रियेत, तदा अस्मिन् लोकसमाजे का गतिर्मे भवेदिति चिन्तय।]

सूत्र०। परिहितं वस्त्रं चौराद् रक्षितुं न शक्नोषि चेद् दिगम्बर-मूर्त्तिस्ते पश्यतां जनानां नाधिकं कौतुकं जनयिष्यति। साम्प्रतं प्राप्ते वस्त्रसङ्कटे प्रायः सर्व एव दिगम्बरदशामङ्गीकुर्व्वन्ति।

विदु०। भाव! अदोज्जेव अहिअं भीदोह्मि। चौरहदअस्स जइ वसनप्पयोअणं वलीओ भवे, तदा मारिशस्स जणस्स किं भवे। (इति रोदिति)

(भाव! अत एव अधिकं भीतोऽस्मि। चौरहतकस्य यदि वसन-प्रयोजनं बलीयो भवेत् तदा मादृशस्य जनस्य किं भवेत्)

सूत्र०। वयस्य! न भेतव्यम् नापि रोदितव्यम्। शान्तो भव। तव वस्त्रहरणप्रतिरोधाय तं दुःशासनचौरहतकं भीमरक्षिहस्ते निक्षिपामि। स खलु नगरप्रथितश्चौरः। यदीयचरित्रचित्रमवलम्ब्य—

आचार्य्यपञ्चाननसूनुना श्री-
श्रीजीवनाम्ना कविना नवीनम्।
अकारि नाट्यं किल भट्टपल्ली-
निवासिना चौरकचातुरीयम्।

प्रसङ्गादिदमेव प्रहसनमद्यतनप्रयोगविषयो भवतु। वयस्य! तत् पश्य पश्य सः किल घट्टङ्करो नाम तस्कर इत एवाभिवर्त्तते। यावद् रक्षिपुरुष-माह्वयामि। (निष्क्रान्तः)

विदू०। भाव! भाव! ण मं एआइणं चोरमुहे णिक्खिविअ गच्छ तुमम्। (भाव! भाव! न माम् एकाकिनं चोरमुखे निक्षिप्य गच्छ त्वम्।)

( निष्क्रान्तः )

---

इति प्रस्तावना।

## प्रथमोऽङ्कः

( ततः प्रविशति घट्टङ्करो नाम तस्करः यष्टिहस्तो निजपृष्ठबद्धमुषितद्रव्य-पेटिकासहितः।

दृश्यः—नगरमार्गः कालः—रात्रिशेषः।)

घट्टङ्करः। अहो अनुसरति मां कश्चिद् रक्षिपुरुषः। यावत् खञ्ज-कपटमाश्रयामि। ( किञ्चित् परिक्रम्य पश्चादवलोक्य ) अहो खञ्जस्वरूपं मम पश्यन् निवृत्तोऽयं दुर्ज्जनः। तत् परिहरामि खञ्जानुकृतिम्। जयति भगवान् कार्त्तिकेयः।

मूढं करोति गूढज्ञं निमेषान्निःस्वमीश्वरम्।
यत्कृपाबिन्दुरीड़े तं सुन्दरं मृड़नन्दनम्॥

योऽहं प्रातर्निःस्वतया नितान्तं निराश आसं सोऽहमद्यैव निशि द्रव्य-भारं वोढुं शतहस्तिबलं धारयामि। एकया रात्र्या स्वभुजार्जितविभवेन वर्षोदकेन कदलीकाण्ड इव नितरां स्फीतोऽस्मि। अहो स्वल्पोपकरणेयं वृत्तिः।

सिकताश्छुरिकां सूत्रं खनित्रं नखकुन्तनम्
काष्ठमुण्डञ्च दण्डञ्च संगृह्य मानवो जयेत्॥

पाषाणबद्धे पथि कुट्टिमे वा धूलीनामभावे सिकतानामुपयोगः। आसन्नायां परकृतव्यापदि च्छुरिका। नारीभूषणोन्मोचने सूत्रम्। सन्धि-च्छेदे खनित्रम्। अर्गलोद्घाटने नखकृन्तनम्। गृहान्तःपरीक्षायां सदण्डं काष्ठमुण्डञ्च प्रयुज्यत इति सर्वसलभेयं स्तेयकला। ( भीतिमभिनीय )

कस्य पदशब्दः ? ( निरीक्ष्य ) अयमायाति कश्चिदपरो रक्षी। यदि मामखञ्जं दृष्टवान भवेत्? भवतु अन्धव्याजं स्वीकरोमि। ( इति हस्तं प्रसार्य्य सयष्टिपातं गतिविशेषं नाटयति )

प्रविश्य रक्षी। अरे गभीरायां रात्रौ क यासि ? चोरोऽसि त्वम् ?

घट्ट०। तात ! नेत्रहीनस्य मे यथा दिवा तथा रात्रिः। ससम्भारः कुटुम्बगृहे यामि। दिवा प्रचण्डातपो जनसम्मर्दः शकटबाधश्च। दृष्टि-रहितस्य मे तदा क्लेशकरी यात्रा। रात्रौ मादृशजनस्य किञ्चिद् गति-सौकर्य्यं भवति। तत् तात ! गोपीनगरं कियद्दूरम् ?

रक्षी। गव्यूतिमात्रम्। मन्ये तत्र गच्छतस्ते रात्रिः प्रभाता भविष्यति। हन्त मन्दगतेरन्धस्यापि कुटुम्ब-सम्भाषणलौल्यम् ! अथवा काणान्धखञ्जानामधिका भवति लालसा। ( निष्क्रान्तः )

घट्ट०। पदशब्देन जानामि निष्क्रान्तोऽयं पाषण्डः। ( चक्षुषी उन्मील्य ) अहो ! कलावशेषः शशाङ्कोऽयमस्तमेति। स्वप्रालोकोऽपि न रोचते मह्यम्।

व्योमहृदे सन्तरणे रतस्य तमोमयस्यान्तकवाहनस्य।
शृङ्गद्वयं काञ्चननद्धमिन्दुरुत्क्षिप्तवारां पृषतश्च ताराः॥

तदस्मिन रजनीशेषे स्तिमितमार्गदीपे निद्रालसे च रक्षिगणे निराबाधं गच्छामि।

प्रविश्य निद्रालसो रक्षी। अरे को याति ?

घट्ट०। ( स्वगतम् ) अहो पुनरेकः श्याल आयातः। भवतु क्षीवाभिनयं करोमि।

वद वद वदन त्वं बुद्बुदप्राय उद्यन्
मद मद न मुदब्धौ बुद्धनामानवद्यम्।
चल चल च लयान्तादालयात् कालगेहं
निखिलखिलकृदेको यत्र खेलत्यलक्ष्यम्

रक्षी। कस्त्वं ? किं प्रलपसि ?

घट्ट० । पाषण्डमुण्डवद् भाण्डं भण्डस्य परिखण्डयन् ।
चण्डताण्डवशौण्डीरो दण्डो नटतु पण्डितः ॥

रक्षी । किमयमुन्मत्तः ? आः किं लालपसि ?

घट्ट० ! शुष्कं मांसं भग्नं कांस्यं रुग्णं हंसं जर्जरवंशम् ।
खाद्ये खाद्ये हृष्टे पृष्ठे वारय वारय वारय मारय ॥

( इति स्वयष्ट्या प्रहाराभिनयं कृत्वा ) हाः हाः हाः !

रक्षी । कथमुन्मत्तहस्ते पतितोऽस्मि ? ( धावन् निष्क्रान्तः )

घट्ट० । अयमपि श्यालो गतः । भवतु स्वैरं सावधानो गच्छामि ।

हंहो ! विद्या नास्ति न चारुधीर्न च मया कारुः कला शिक्षिता
वैश्यानां विमले कुले जनिमताप्यालम्बिता नो कृतिः ।
चौरं पौरुषमेकमाश्रितवता किं नाम नाप्तं मया
मिथ्या निन्दनमेति चन्दनतरौ सर्पानुबन्धो हि तत् ॥

स्तेयं हि स्वभावधर्मो जीवानाम् । मूषको वञ्चकः कपिः काको मार्जारश्छुच्छुन्दरी छागादयश्च सर्वे स्तेयकलाकुशलाः,—किमहमेतेभ्योऽप्यधमोऽस्मि ? दुर्लभं मानुषं जन्म लब्ध्वाहं किमकृतार्थो मरिष्यामि ? चौर्य्यं पापमिति घुष्यते स्नायुदुर्बलैः स्थविरैरकर्मण्यैर्भीरुभिर्वा । वीराः कूटराजनीतिनाम्ना परधनग्रासं वाणिजिका वाणिज्यव्याजेन विपुललाभं लुब्धाः क्रीडाच्छलेन समाहृत्य किं न प्रकाशचौर्य्यमेवाचरन्ति ? वेतनमात्रजीविनां राष्ट्रिकाणामपि चौर्य्यं लुब्धाः विना कुतो महानभ्युदयः ? विशेषतो राजनियन्त्रिते महार्घतादुर्लभेऽन्नवस्त्रादिवस्तुजाते प्रजाः स्तेयमेव श्रेयो मत्वा परस्परं स्पर्द्धन्ते । किमहमेवैकः स्तेयमाचरन् धृतो भवामि ।

रक्षी । ( प्रविश्य—पश्चाद् भागादागत्य ) भो ! धृतोऽसि । (गृह्णाति ) कुत एतानि द्रव्याण्यासादितानि ।

घट्ट० । ( स्वगतम् ) अहो प्रमादो मे । भवतु, यथाप्राप्तमाचरिष्यामि । ( प्रकाशम् ) भो रक्षिन् ! प्रश्नेन किम् ? हस्तं प्रसारय, किञ्चिद् गृहाण, यथेष्टं विहर ।

रक्षी। नाहमुत्कोचभुक्। रे पाटच्चर! चल स्थानकम्।

घट्ट०। अलं श्लाघया। ( स्वगतं ) सर्वान् श्यालकान् जानामि।

( प्रविशति मत्तो नगरपालः )। अरे जटाधर, किं क्रियतेऽन्धकारान्तराले ?

रक्षी। धृतः कश्चिच्चौरो मुष्टसहितः।

नगरपा०। साधु बधान। ( जनान्तिकम् ) मुद्राशतं गृहाण। तवार्द्धं ममार्द्धं च भवतु। तदनङ्गीकारे स्थानकं नय। अहञ्च स्वल्पेन कालेन तत्र गच्छामि। भो अस्ति किञ्चिन्मदर्थम् ? ( इत्यङ्गुष्ठतर्ज्जनीयोगेन सङ्केतं नाटयति )।

रक्षी। न-न-नहि नहि।

नगरपा०। जटाधर! ममाद्य महती रिक्तता। प्रदोषे मदिरादेव्यै सर्वं समर्पितम्। ( स्वगतम् ) धिङ्मामधन्यम्। योऽहमर्थाभावाद् वाराङ्गणया प्रत्याख्यातोऽस्मि। विफलेयं क्षणदा ( निष्क्रान्तः )।

रक्षी। भोः तस्कर! दयार्द्रो नगरपालः सन्दिशति—मुद्राशतं ददासि चेन्न मुञ्चामि त्वामव्याजम्। अन्यथा बद्ध्वा त्वां समुष्टद्रव्यं सप्रहारं सनिकारं नयामि स्थानकं भयानकम्। पृष्ठादवतारय द्रव्यपेटिकाम्। ( तथा करोति )।

घट्ट०। भो उत्कोचविमुख! महानयं मयि प्रसादः। नाहं तुच्छमुद्राशतेन भवतोर्निरुत्कोचव्रतभङ्गं करोमि। स्थानकमेव गच्छामि। दुर्बलस्य मे दुर्वहोऽयं भार इति बलवन्तं भवन्तमनुनयामि—नमयतु शिरो भारमारोपयामीति।

रक्षी। किमात्थ रे धृष्ट? किमहं चौरस्य भारवाही, तत् तिष्ठ प्रहारजर्ज्जरं त्वामादौ करोमि। ( इति दण्डमुत्तोलयति )।

# सुखलेखनम्

[ श्रीरामधनशास्त्रिणा टिप्पण्यादिभिरुपस्कृतम् ]

( पूर्वानुवृत्तम् )

मिश्रकाग्रे शारिका च सिध्रका[3] पुरगा तथा।
कोटरैषाञ्च[4] संज्ञायां दृश्यते मिश्रकावणम्(२)॥

पूर्वपदस्यायनादेर्नारायणोत्तरायणे[1]।
एवं चान्द्रायणं पारायणः शूर्पणखा तथा।
अक्षौहिणी खरणसः स्वर्णदीद्रुणसादयः (१)॥

---

२। इह हि "वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः" [अ० ८। पा० ४। सू० ४] इति पाणिनिः, "वनस्याग्रेकोटरादेः" [णत्वप्र०, सू० ३] इति श्रीपतिः, "अग्रेकोटरासिध्रुकामिश्रकाशारिकापुरोगाभ्यो वनस्य नाम्नि तु" [अजन्तपु', सू० १०७] इति चाह दुर्गादासः। मूले "मिश्रकावणम्" इत्येकमुदाहरणमुक्तम्। अपराणि पुनः "कोटरावणम्, सिध्रकावणम्, शारिकावणम्, पुरगावणम्" इत्येवंरूपाण्युन्नेयानि। मूलकारमते "सिध्रके"ति पाठः। स च दुर्गादासाद्यभिमतः। अस्माभिस्तु पाठोऽयं परिहृतः, पाणिन्यादिभिरधृतत्वात्।

१। अत्र हि "पूर्वपदात् संज्ञायामगः" [अ० ८। पा० ४। सू० ३] इति पाणिनिः। "पूर्वपदस्थात् संज्ञायाम्" [णत्वप्र०, सू० २] इति श्रीपतिः। "पूर्वपदषृर्नाम्नि णो नोऽवकुष्वन्तरेऽपि" ]अजन्तपुं, सू० १०७] इति च दुर्गादासः। दुर्गादासेन हि 'पारायणमिति' क्लीवेन निर्दिश्य चान्द्रायणमपहाय

---

3 Ms. सिध्रुगा

4 Ms. कोटरैषाक

1 Ms ०णयोत्तरायणे

न हि ताम्रनखादौ तु संज्ञायामिति निश्चयात् (२)।
अकारान्तस्य चाह्नस्य प्राह्णः पूर्वाह्ण इत्यपि (३)॥

अदन्तस्येति नियमान्निरह्णादिषु नैव च (१)।
अह्नस्येति ग्रहणतो दीर्घाह्नी शरदत्र न (२)॥

---

मूलधृतानि सर्वाण्युदाहरणान्युदाहृतानि। स्वर्णदीत्यत्र पुनः "गिरिनद्यादीना-मुपसंख्यानम्" [अये ८। पा० ४। सू० १० ] इति जयादित्यः। "गिरि-नद्यादिषु च" [णत्वप्र०, सू० १०] इति श्रीपतिः। "स्वर्णदीत्यत्रापीति भाषावृत्तिः" इति गोपीनाथः। "गिरिनद्यादयो वा निपात्यन्ते" [अजन्तपुं, सू० १०७] इति चाह दुर्गादासः। तदेतन्मते विकल्पपक्षे 'स्वर्नदी'त्यपि पदं सिद्धमुन्नेयम्।

२। सम्प्रति व्यावृत्तिं प्रदर्शयितुमाह—नहीति। संज्ञायामिति निश्चयात् नियमादसंज्ञायां तु णत्वं न स्यादित्यर्थः। एतदेवोदाहरति—ताम्रनखादाविति। अत्रादिपदमितरेषां ग्राहकम्। तेन ताम्रनखादिवद् अक्षोहिनी स्त्रीत्यादावपि संज्ञात्वाभावाण्णत्वाभावः सिध्यति। तदुक्तमत्र णत्वाणत्वव्यवस्थामधिकृत्य दुर्गादासेन—"अक्षमूहितुं शीलमस्या अक्षौहिणी सेना पाशकस्त्री च। अन्यत्र अक्षमिन्द्रियमूहितुं शीलमस्या अक्षोहिनी स्त्री" [ अजन्तपुं, सू० १०७ ] इति।

३। अत्र "अह्नोऽदन्तात्" [अ० ८। पा० ४। सू० ७] इति पाणिनिः। "आदह्नस्य", [णत्वप्र०, सू० ६ ] इति श्रीपतिः। "अकारान्तादह्नोऽदन्तस्य" [ कारकप्र०, सू० २५४, टी० ] इति चाह दुर्गसिंहः।

१। अदन्तान्निमित्तादह्नो नकारस्य णत्वनियमादन्यत्र णत्वाभावः स्पष्टः। एतदेव व्याकरोति—अदन्तस्येति। इदमाह व्यावृत्तिपक्षे जयादित्योऽपि—"अदन्तादिति किम्? निरह्नः, दुरह्नः" [अ० ८। पा० ४। सू० ७] इति। श्रीपतिनापि व्यावृत्तिपक्ष उक्तम्—"आदिति किम्? निरह्नः" [णत्वप्र०, सू० ६ ] इति।

२। इदानीमपरामपि व्यावृत्तिमाह—दीर्घाह्नीति। इदमेव स्पष्टयति—

हायनस्य त्रिचतुरोर्वयस्येव त्रिहायणः।
वत्सस्त्रिहायणी[1] गौश्च (३) वाह्यस्य वाहनस्य तु।
यथेक्षुवाहणं दर्भवाहणं शकटं धनुः।
शरवाहणम् (४) अन्यत्र दाक्षिवाहनमोच्यते[2] (५)॥

---

अहस्येति। णत्वविधावदन्तस्याह्नस्य ग्रहणादोदन्तस्यास्य णत्वं न स्यादित्यर्थः। एतदेवोदाहरति—दीर्घाह्नीत्यादिना। इदमाह जयादित्योऽपि—"अह्न इत्यकारान्तग्रहणाद् दीर्घाह्नी शरदित्यत्र न भवति" [अ० ८। पा० ४। सू० ७] इति। दुर्गोऽप्याह—"अदन्तस्येति किम्? दीर्घाह्नी शरत्" [कारकप्र०, सू० २५४, टी०] इति। श्रीपतिना पुनः व्यावृत्तिप्रदर्शनमुखेनोदाहृतम्—"अत्प्रत्ययनिर्देशः किम्? 'दीर्घाह्नी प्रावृट्" [णत्वप्र०, सू० ६] इति।

३। अत्र "त्रिचतुर्भ्यां हायनस्य वयसि" [णत्वप्र०, सू० १३] इति श्रीपतिः.। "त्रिचतुर्भ्यां हायनस्य वयसि नित्यम्" [अजन्तपु, सू० १०७] इति चाह दुर्गादासः।

४। इह हि "वाहनमाहितात्" [अ० ८। पा० ४। सू० ८] इति पाणिनीयं सूत्रम्। अस्य व्याख्यायां जयादित्य आह—"आहितवाचि यत् पूर्वपदं तत्स्थान्निमित्तादुत्तरस्य वाहननकारस्य णकार आदेशो भवति" इति। श्रीपतिनापि सूत्रितम्—',वाह्याद् वाहनस्य" [णत्वप्र०, सू० ७] इति। दुर्गादासस्तु [अजन्तपु०, सू०, १०७] सूत्रनिर्माणे श्रीपतिमेवानुचकार।

५। इदानीमत्र व्यावृत्तिं दर्शयितुमाह—अन्यत्रेति। अन्यत्रेति आहितादितरत्रेत्यर्थः। एतदेवोदाहरति—दाक्षिवाहनमिति। अत्राह जयादित्यः—"वाहने यदारोपयितुमुद्यते तदाहितमुच्यते" [अ० ८। पा० ४। सू० ८] इति—"आहितादिति किम्? दाक्षिवाहनं दाक्षिस्वामिकं वाहनमित्यर्थः" इति च। एतावता वाहनेनात्र स्वस्मिन्नाहितो दाक्षिर्नोह्यते इति दाक्षिवाहनमित्यत्र णत्वाभाव च स्पष्टः। अत एव दाक्षेर्वाहनमिति स्वस्वामिलक्षणा षष्ठी सिध्यति। यदा पुनः स्वस्मिन्नाहितो दाक्षिर्वाहनेनोह्यते, तदा तु दाक्षिवाहण-

देशे पानस्य च यथा क्षीरपाणा उशीनराः (१) ॥
प्रकृत्यैकस्वरस्यैव नाम्न एवं कवर्गिणः ।
अन्त्यो विभक्तिजातश्च यथा वृत्रहणं नुमः[2] ॥

---

मिति णत्वं स्यादेव । इदमेव श्रीपतिनाप्युक्तं व्यावृत्तिपक्षे "वाह्यादिति किम् ? दाक्षेः स्वं वाहनं दाक्षिवाहनम् । यदा त्वसौ वोढव्यस्तदा दाक्षिवाहणम्, इन्द्रवाहणं भवत्येव" [णत्वप्र०, सू० ७] इति ।

१ । अत्र "पानं देशे" [अ० ८। पा० ४। सू० ६] इति पाणिनिः । "देशे पानस्य" [णत्वप्र०, सू० ८] इति चाह श्रीपतिः । दुर्गादासोऽपि श्रीपति-मेवानुचकार । ननु उशीनरादयो हि मनुष्याभिधायिनस्तत् कथमेभिर्देशाभि-धानं सङ्गच्छते ? अत्राह गोपीनाथः—"जयादित्यः पुनराह—क्षीरं पानं येषां ते क्षीरपाना उशीनराः, मनुष्याभिधानेऽपि देशाभिधानं गम्यते । अयमर्थः—यद्यपि सामानाधिकरण्यात् पुरुषा उच्यन्ते, तथाप्युशीनरादयो देशा एवाभि-धीयन्ते, यथा मञ्चाः क्रोशन्तीति" इति । ( क्रमशः )

---

## वृत्तवर्त्तिका

विदितमेवेदं सुधियां यत् केवलं वर्षद्वयात् पूर्वं राष्ट्रीयसंस्कृतमहा-विद्यालये कलिकातानगरस्थे साहित्यशास्त्राध्यापकपदं माहिताः पञ्चतीर्थो-पाधिकाः श्रीनृत्यगोपालभट्टाचार्या राष्ट्राधिकारनियमितवयःपूर्त्त्या तत्पदा-दवसरं गृहीतवन्तः । तत्पदे च वर्त्तमानखृष्टवर्षीयैप्रिलमासस्य प्रथम-दिवस एव कलिकाता-गदाधराश्रमस्य तथा मेदिनीपुरभोलानाथसंस्कृत-महाविद्यालयस्य अध्यापकचरा नानाशास्त्रनिष्णाताः पण्डितप्रवराः श्रीयादवेन्द्रनाथरायकाव्यव्याकरणन्यायतर्कतीर्थाः साहित्याध्यापकतया नियुक्ताः पश्चिमवङ्गराष्ट्राधिकारेण । आशास्महे तदधिष्ठितं पदमिदं सर्वथा संस्कृत-महाविद्यालयस्य गौरवरक्षार्थं सुतरां समर्थं स्यादिति ।

# Sanskrit Sahitya Parishat Series

(Revised up to April, 1951)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1-4 ; Re. 1. (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Rs. 2-8 ; Rs. 2 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited. by Pt. Dakshina charan Bhattacharya. Rs. 2-8 ; out of stock.

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish chandra Siddhantabhushan. Re. 1 ; As. 12 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinat Sahityashastri. As. 4.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. Re. 1-8 ; Re. 1-4- (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As.14; As. 10 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Rs. 2-8 ; Rs. 2 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 12 ; As 10. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M. A. Re 1-8 ; Re. 1-4 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2-8 ; Rs. 2 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 4 ; Rs. 3. (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2. ; Re. 1-8 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 ; Rs. 4 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof Akshayakumar Shastri. Re. 2 8 ; Rs. 2 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M. A. Rs. 7-8 ; Rs. 6 (for members). [out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 7. ; Rs. 6 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. Re. 1-4 ; Re. 1 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1-8 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 12 ; As. 10 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 8

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 5 ; Rs. 4-8 (for members).

**Opinions on**

## SATARANJAKUTUHALAM

......The work is of special interest in view of the comparative paucity of known and published literature on the subject in Sanskrit, though the game of chess is supposed to be of Indian origin......*Indian Historical Quarterly*, Vol. 26, p. 81.

......It will be helpful in studying the history of game, especially its development through long years and different countries. Those interested in the study will be thankful to the learnel editor for bringing to light this little-known work and making it available to the general reader.—
*Modern Review*, July 1950, p. 74.

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17, R. G. Kar Road, Calcutta.